ययौ जडगतिस्सोऽथ युगमात्रावलोकनम्। कुर्वन्मतिमतां श्रेष्ठस्तदन्ये त्वरितं ययुः ॥ ५७ ॥
विलोक्य नृपतिस्सोऽथ विषमां शिबिकागतिम्। किमेतदित्याह समं गम्यतां शिबिकावहाः ॥ ५८ ॥
पुनस्तथैव शिबिकां विलोक्य विषमां हि सः। नृपः किमेतदित्याह भवद्भिर्गम्यतेऽन्यथा ॥ ५९ ॥
भूपतेर्वदतस्तस्य श्रुत्वेत्थं बहुशो वचः। शिबिकावाहकाः प्रोचुरयं यातीत्यसत्वरम् ॥ ६० ॥

राजोवाच—
किं श्रान्तोऽस्यल्पमध्वानं त्वयोढा शिबिका मम। किमायाससहो न त्वं पीवानसि निरीक्ष्यसे ॥ ६१ ॥

ब्राह्मणः— नाहं पीवा न चैवोढा शिबिका भवतो मया।
न श्रान्तोऽस्मि न चायासस्सोढव्योऽस्ति महीपते ॥ ६२ ॥

राजा—
प्रत्यक्षं दृश्यसे पीवानद्यापि शिबिका त्वयि। श्रमश्च भारोद्वहने भवत्येव हि देहिनाम् ॥ ६३ ॥
ब्राह्मणः—प्रत्यक्षं भवता भूप यद्दृष्टं मम तद्वद। बलवानबलश्चेति वाच्यं पश्चाद्विशेषणम् ॥ ६४ ॥
त्वयोढा शिबिका चेति त्वय्यद्यापि च संस्थिता। मिथ्यैतदत्र तु भवाञ्छृणोतु वचनं मम ॥ ६५ ॥
भूमौ पादयुगावस्था जङ्घे पादद्वयाश्रिते। ऊर्वोर्जङ्घाद्वयावस्था तदाधारं तथोदरम् ॥ ६६ ॥
वक्षस्स्थलं तथा बाहू स्कन्धौ चोदरसंस्थितौ। स्कन्धाश्रितेयं शिबिका मम भारोऽत्र किंकृतः ॥ ६७ ॥
शिबिकायां स्थितं चेदं वपुस्त्वदुपलक्षितम्। तत्र त्वमहमप्यत्र प्रोच्यते चेदमन्यथा ॥ ६८ ॥

---

ययाविति ॥ जडगतिः—मन्दगतिः ॥ ५७—६० ॥

किमिति ॥ आयाससहो नासि किम्। आयाससह एवासि। तत्र हेतुः पीवान्निरीक्ष्यस इति। आर्षत्वान्नलोपाभावः ॥ ६१ ॥

नाहमिति ॥ पीवत्वादीनि नाहमर्थस्य, किं तु शरीरस्येत्यभिप्रायः। आयासः—भारोद्वहनादेर्देहक्लेशः। तेन कर्माशक्तिः श्रान्तिः ॥ ६२ ॥ अभिप्रायमजानन्पृच्छति—प्रत्यक्षमिति ॥ ६३ ॥

प्रतिवक्ति—प्रत्यक्षं भवतेति। मम यद्रूपं त्वया प्रत्यक्षं दृष्टं तद्वद। नाहं दृष्टः, अचाक्षुषत्वादात्मन इत्यभिप्रायः। तस्य पीवत्वं श्रान्त्यादिकं बलाबलरूपं विशेषणं पश्चाद्वाच्यं—सुतरां दुर्वचम्, विशेष्यस्य धर्मिण एवाप्रत्यक्षत्वादिति भावः ॥ ६४ ॥ त्वयेति ॥ वचनम्; उत्तरमिति शेषः ॥ ६५ ॥

भूमाविति ॥ अवस्था—स्थितिः। आतश्चोपसर्ग इति प्राङन्ताट्टाप् ॥ ६६ ॥

वक्षस्थलमिति ॥ मम—अहमर्थस्य किंकृतो भारः? अतो नाहं वोढेत्यभिप्रायः ॥ ६७ ॥

नापि त्वं वाह्य इत्याह—शिबिकायामिति। त्वदुपलक्षितः—त्वयात्मत्वेन लक्षितः भ्रान्त्या दृष्टो देहः शिबिकायां स्थितः। अत्र देहे स्थितस्त्वम्, अहमप्यस्मिन्देहे। अतः इदम्—आत्मनोर्वाह्यत्वं वाहकत्वं च अन्यथा—मिथ्योच्यते ॥ ६८ ॥

अहं त्वं च तथाऽन्ये च भूतैरुह्याम पार्थिव । गुणप्रवाहपतितो भूतवर्गोऽपि यात्ययम् ॥ ६९ ॥
कर्मवश्या गुणा ह्येते सत्त्वाद्याः पृथिवीपते । अविद्यासंचितं कर्म तच्चाशेषेषु जन्तुषु ॥ ७० ॥
आत्मा शुद्धोऽक्षरः शान्तो निर्गुणः प्रकृतेः परः । प्रवृद्ध्यपचयौ नास्य चैकस्याखिलजन्तुषु ॥ ७१ ॥
यथा नोपचयस्तस्य नैवास्त्यपचयस्तथा । तदा पीवानसीतीत्थं कया युक्त्या त्वयेरितम् ॥ ७२ ॥
भूपादजंघाकट्यूरुजठरादिषु संस्थिते । शिबिकेयं यथा स्कन्धे तथा भारः समस्त्वया ॥ ७३ ॥
तथाऽन्यैर्जन्तुभिर्भूप शिबिकोढा न केवलम् । शैलद्रुमगृहोत्थोऽपि पृथिवीसंभवोऽपि वा ॥ ७४ ॥
यदा पुंसः पृथग्भावः प्राकृतैः कारणैर्नृप । सोढव्यस्तु तदाऽऽयासः कथं वा नृपते मया ॥ ७५ ॥
यद्द्रव्या शिबिका चेयं तद्द्रव्यो भूतसंग्रहः । भवतो मेऽखिलस्यास्य ममत्वेनोपबृंहितः ॥ ७६ ॥

श्रीपराशरः—

एवमुक्त्वाऽभवन्मौनी स वहञ्छिबिकां द्विज । सोऽपि राजाऽवतीर्योर्व्यां तत्पादौ जगृहे त्वरन् ॥७७॥

---

यद्यहं त्वया नोह्ये, केन तर्हि? तत आह—अहं त्वं चेति ॥ भूतैः—देहत्वेन परिणतैः । भूतसंघातस्य च गमनादिव्यापारभेदो गुणकृत इत्याह—गुणप्रवाहेति ॥ गुणपरिणामरूपतीव्रस्रोतोवेगपरतंत्रो याति, तृणमिव वायूदकादिभिः । दुर्बलमिव दुष्टाश्वाः, अन्तःकरणपर्यन्तं संघातं तत्स्था गुणा गमनासनेच्छाद्वेषादिरूपेण बहुधा प्रवर्तयन्ति । अत्र * प्रकृतेः क्रियमाणानि गुणैः कर्माणि, इत्याद्यनुसंधेयम् ॥ ६९ ॥

गुणाश्च प्राचीनकर्मायत्तप्रवृत्तय इत्याह-कर्मवश्या इति। कर्म चाविद्यामूलमित्याह—अविद्येति। अनात्मसु देवादिदेहेष्वात्मबुद्धिरविद्या । तच्चाविद्यामूलं कर्म ब्रह्मादिसर्वजन्तुसाधारणमित्याह—तच्चाशेषेषु जन्तुष्विति ॥ ७० ॥

एवमात्मनो दृश्यत्वं वाहकत्वं च नास्तीत्युक्तम् । अथ पीवत्वादिविशेषणं नास्तीत्याह—आत्मेति ॥ शुद्धः—कर्मरहितः पूयशोणिताद्यसंस्पृष्टश्च, अक्षरः-अविनाशी, शान्तः-अशनायाद्यूर्मिषट्करहितः, निर्गुणः—सत्त्वादिगुणरहितः । अत्र हेतुः—प्रकृतेः पर इति । अतः प्रवृद्ध्यपचयौ नास्य । हेत्वन्तरमाह—एकस्येति । एकस्य—असङ्घातरूपस्य । सङ्घातरूपस्य हि देहादेर्वृद्धिह्रासौ, नासंघातरूपस्य गगनपरमाण्वादेः । * अहं त्वं च तथान्ये चेतिवद्यथा मयि तथा सर्वेष्वात्मसु साधारणमेतद्रूपमित्याह—अखिलजन्तुष्विति । उक्तमखिलजन्तुषु द्रष्टव्यमिति । यद्वा—अखिलजन्तुष्वेकस्येति संबन्धः । जन्तुशब्दो देहविशिष्टात्मवाची । जन्तुष्वात्मांश एक एवेत्यर्थः । देहानां संघातत्वात्प्रत्येकमनेकत्वम् ॥ ७१, ७२ ॥

मत्तोऽन्यस्मिन्स्कन्धे स्थितः शिबिकाभारो मम चेत्स्यात् तवापि स्यात्, सर्वजीवानामपि स्यात्, सर्वे भाराः सर्वेषां स्युरिति वाह्यादिप्रसङ्गं वाहकादिप्रसङ्गं चाह—भूपादेत्यादिद्वयेन ॥ ७३, ७४ ॥

अतो मम भारोद्वहनाभावात्तत्कृता श्रान्तिश्च नेत्याह—यदेति ॥ करणैः—करणेभ्यः ॥ ७५ ॥

किं च पार्थिवत्वाविशेषात्तज्जातीयकाष्ठादाविव देहे ममकारोऽपि न युक्तः, किमुताहंकार इत्याह—यद्द्रव्येति ॥ भूतसंग्रहः—देहः । ममत्वेनोपबृंहित इति वचनाद्देहे ममत्वमप्युपबृंहितम्—आरोपितं, न स्वतस्सदिति दर्शयति ॥ ७६, ७७ ॥

राजा—

भोभो विसृज्य शिविकां प्रसादं कुरु मे द्विज। कथ्यतां को भवानत्र जाल्मरूपधरः स्थितः ॥ ७८ ॥
यो भवान्यन्निमित्तं वा यदागमनकारणम्। तत्सर्वं कथ्यतां ब्रह्मन्मह्यं शुश्रूषवे त्वया ॥ ७९ ॥

ब्राह्मणः—

श्रूयतां सोऽहमित्येतद्वक्तुं भूप न शक्यते। उपभोगनिमित्तं च सर्वत्रागमनक्रिया ॥ ८० ॥
सुखदुःखोपभोगौ यौ तौ देहाद्युपपादकौ। धर्माधर्मोद्भवौ भोक्तुं जन्तुर्देहादिमृच्छति ॥ ८१ ॥
सर्वस्यैव हि भूपाल जन्तोः सर्वत्र कारणम्। धर्माधर्मौ यतः कस्मात्कारणं पृच्छयते त्वया ॥ ८२ ॥
राजा—धर्माधर्मौ न संदेहस्सर्वकार्येषु कारणम्। उपभोगनिमितं च देहाद्देहान्तरागमः ॥ ८३ ॥
यत्त्वेतद्भवता प्रोक्तं सोऽहमित्येतदात्मनः। वक्तुं न शक्यते श्रोतुं तन्ममेच्छा प्रवर्तते ॥ ८४ ॥
योऽस्ति सोऽहमिति ब्रह्मन्कथं वक्तुं न शक्यते। आत्मन्येष न दोषाय शब्दोऽहमिति यो द्विज ॥ ८५ ॥

ब्राह्मणः—

शब्दोऽहमिति दोषाय नात्मन्येष तथैव तत्। अनात्मन्यात्मविज्ञानं शब्दो वा भ्रान्तिलक्षणः ॥ ८६ ॥

---

भोभो इति ॥ जाल्मो-जडः ॥ ७८ ॥

को भवानित्येतद्विवृणोति—यो भवानिति ॥ य इति जातिकुलप्रश्नः। निमित्त-प्रयोजनम्, आगतेः कारणम-उत्पादकम् ॥ ७९ ॥

को भवानित्यस्य प्रश्नस्य एषोऽहमित्युत्तरे वक्तव्ये जात्यादेरनात्मधर्मत्वमभिप्रेत्य यस्त्वमिति प्रष्टुमहमेष इति प्रतिवक्तुं च न शक्यमित्याह—श्रूयतामिति ॥ निमित्तप्रश्नोत्तरमुपभोगेति। पुंसः सर्वदेशेष्वागतिः सुखादिभोगाय ॥ ८० ॥

एतद्विवृणोति—सुखेति ॥ तौ धर्माद्युद्भवौ सुखादिभोगौ यस्मात्प्रतिनियतदेशदेहकालभोग्यौ तस्मात्तौ भोक्तुं जीवो देहदेशान्तराणि याति ॥ ८१ ॥ कारणप्रश्नोत्तरं सर्वस्येति ॥ सर्वत्र—जन्मादावपि ॥ ८२, ८३ ॥

सोऽहमिति वक्तुं न शक्यत इत्युत्तरस्याभिप्रायमजानानश्चोदयति—यस्त्वेतदिति सार्द्धेन। यस्त्वेतदिति ॥ एतत्, स्वरूपमिति शेषः ॥ ८४ ॥

य इति ॥ य आत्मा कर्तृभोक्तृरूपेण स्फुरन्सदाऽस्ति, सोऽहमितिशब्देन कथं वक्तुं न शक्यते? न हि निरर्थकोऽहंशब्दः; न च निर्विशेषणोऽहमर्थः, * आत्मा शुद्ध इत्यादिविशेषणोक्तेः। तस्मात्सोऽहमित्युक्तौ नानुपपत्तिः, यो भवानिति प्रष्टुं च नानुपपत्तिरिति भावः। अनात्मनि खल्वहमिति शब्दो न प्रयुज्यते। आत्मनि तु तस्य प्रयोगे को दोष इत्यभिप्रायेणाह-आत्मनीति ॥ ८५ ॥

उत्तरमाह-शब्दोऽहमिति ॥ अयमभिप्रायः—(प्रतिवक्तुः)एषोऽहंशब्दो नात्मनि दोषायेति यदुक्तं तत्सत्यम्। अहंता हि प्रत्यक्त्वम्। तेन प्रत्यक्त्वेनावभासमान एवात्मा, न देहादिः। अतोऽयमहमिति वक्तुं शक्योऽपि, सोऽहमिति वक्तुं यो भवानिति प्रष्टुं च न शक्यते, तस्य शुद्ध्यादिविशेषणान्तरसद्भावेऽपि जात्यादिधर्मासद्भावादिति। आत्मविज्ञानम्—अहंबुद्धिः, शब्दः—अहमिति शब्दः ॥ ८६ ॥

जिह्वा ब्रवीत्यहमिति दन्तोष्ठौ तालुके नृप। एते नाहं यतस्सर्वे वाङ्निष्पादनहेतवः ॥ ८७ ॥
किं हेतुभिर्वदत्येषा वागेवाहमिति स्वयम्। अतः पीवानसीत्येतद्वक्तुमित्थं न युज्यते ॥ ८८ ॥
पिण्डः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः। ततोऽहमिति कुत्रैतां संज्ञां राजन्करोम्यहम् ॥ ८९ ॥
यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम। तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ॥ ९० ॥
यदा समस्तदेहेषु पुमानेको व्यवस्थितः। तदा हि को भवान्सोऽहमित्येतद्विफलं वचः ॥ ९१ ॥

---

एवं तावद्देहादिविलक्षणात्मपक्षपरिग्रहेण योऽस्ति सोऽहमिति प्रश्नप्रतिवचनोपपत्तिं वदन्नृपः प्रत्युक्तः ॥ इदानीं देहाद्यात्मत्वपक्षे तस्य मते प्रधानं कुर्वन्निराकरोति जिह्वेति त्रिभिः ॥ जिह्वेति। हे नृप! जिह्वादि अहमिति ब्रवीतीति किं मन्यसे? तन्न। एते नाहम्—बहुत्वान्नाहमर्थः, अहमर्थस्यैकत्वेन प्रतीतेः। किं च यतो जिह्वादीनि शब्दनिष्पत्तिकारणानि, अतो न कर्तृभावमनुभवन्ति। कर्ता खल्वात्मा। अनेन न्यायेनाहं स्पृशामि स्मरामीत्यादिषु बाह्यान्तरकरणानामात्मत्वनिरासः ॥ ८७ ॥

शंकान्तरमाह—किं हेतुभिरिति ॥ अथ वागेवेन्द्रियरूपा जिह्वाद्यैः करणैः स्वातंत्र्येणाहमिति ब्रवीति, तेन सैवात्मेति मतम्; तच्च न; तस्या अपि करणत्वेन स्वातंत्र्याभावात्, आत्मत्वे च वाचः स्थौल्याभावात्पीवानसीत्यात्म-धर्मत्वेन पीवत्वोक्तिव्याहतेः, मम वागिति भेदव्यवहारानुपपत्तेश्च। केचिच्छब्द एवार्थ इति वैयाकरणपक्षपरिग्रहेण जिह्वादिकरणैर्वाणी स्वात्मानमहमिति वदतीति; यथा घटशब्द एव घट इत्युच्यत इति वर्णयन्ति। तत्राप्युक्त एव दोषः। अनेन न्यायेन स्पर्शरूपादीनां बुद्धिसुखेच्छादीनां च कर्तृत्वनिषेधः ॥ ८८ ॥

पिण्ड इति ॥ एवं जिह्वाद्याधारशिरःपायुपाण्यादिसमुदायो देहोऽपि नात्मा, जागरे मम देह इति पृथग्भावात्। स्वप्नसुषुप्त्योरात्मनि भासमानेऽपि देहस्यान्यथाभानादभानाच्च; स्वर्गकामादिश्रुतिसिद्धशरीरविल-क्षणात्मप्रसिद्धिविरोधाच्च। यद्वा पिण्डः पुंसः पृथक्—शिरःपाण्यादिरूपेणानेक इति यतः, अहमर्थश्चैक इति योज-नान्तरम्। तस्माद्देहेन्द्रियादीनामनात्मत्वात्तेषु कुत्राऽहंशब्दं करोमीत्याह—तत इति ॥ ८९ ॥

ननु देहादिव्यतिरिक्तस्याहंशब्दो वाचकोऽस्त्वित्याशंक्य तस्य सर्वभूतेष्ववस्थितस्य ज्ञानैकाकारतया एकप्रकारत्वाच्छुद्धत्वादेश्च साधारण्यात्, व्यावर्तकजात्यादिधर्माभावाच्च को भवान् सोऽहमिति प्रश्नप्रतिवचने निरर्थके इत्याह—यद्यन्योऽस्तीति द्वयेन। यद्यन्योऽस्तीति ॥ नात्रात्मनां व्यक्त्यैक्यं प्रतिपाद्यते। कुतः? यद्यन्योऽस्ति परः कोऽपि मत्त इति स्वस्माद्व्यतिरिक्तमात्मानमभ्युपगम्य तस्यान्यत्वनिषेधात्। एकस्मिन्नर्थे परशब्दान्यशब्दयोः प्रयो-गायोगात् अन्यशब्दः परस्यापि ज्ञानैकाकारत्वादन्याकारत्वप्रतिषेधार्थः। एतदुक्तं भवति—यदि मद्व्यतिरिक्तः कोऽप्यात्मा मदाकारभूतज्ञानाकारादन्याकारः स्यात्, तदा अहमेवमाकारः, अयं चान्यादृशाकार इति शक्येत व्यपदेष्टुम्। न चैवमस्ति, सर्वेषां ज्ञानैकाकारतया समत्वात्, जातिकुलादेरनात्मधर्मत्वाच्च। प्रकारैक्ये च एक-त्वव्यवहारो मुख्य एव, समानधर्मासमानधर्मेत्यस्मिन्नर्थे समानधर्मानेकधर्मेति प्रयोगदर्शनात्; * एको व्रीहिः सुनिष्पन्नः सुपुष्टः कुरुते प्रजाः, इति च दर्शनात्। अतो नायमौपचारिकः प्रयोगः, प्रकारैकत्वस्य निमित्तस्य विद्य-मानत्वात्। अत्र पूर्वश्लोकेनात्मभेदनिर्देशमुखेन तेषामनेकाकारत्वं निषिद्धम्। उत्तरश्लोकेनैकाकारता विधीयते। आत्मैकत्वपक्षे—* नित्यो नित्यानां चेतनश्चेतनानाम् * अहं त्वं च तथान्ये च * इत्यादिना विरोधः। समाना-कारत्वं च * निर्दोषं हि समं ब्रह्मेत्यादिषूक्तम्। तस्मादात्मनां वैषम्याभावात्प्रश्नप्रतिवचने युक्ते इत्यर्थः ॥ ९०, ९१ ॥

त्वं राजा शिबिका चेयमिमे वाहाः पुरस्सराः । अयं च भवतो लोको न सदेतन्नृपोच्यते ॥ ९२ ॥
वृक्षो दारु ततश्चेयं शिबिका त्वदधिष्ठिता । किं वृक्षसंज्ञा वास्यास्स्याद्दारुसंज्ञाऽथ वा नृप ॥ ९३ ॥
वृक्षारूढो महाराजो नायं वदति ते जनः । न च दारुणि सर्वस्त्वां ब्रवीति शिबिकागतम् ॥ ९४ ॥
शिबिकादारुसंघातो रचनास्थितिसंस्थितः । अन्विष्यतां नृपश्रेष्ठ तद्भेदे शिबिका त्वया ॥ ९५ ॥
एवं छत्रशलाकानां पृथग्भावे विमृश्यताम् । क यातं छत्रमित्येष न्यायस्त्वयि तथा मयि ॥ ९६ ॥
पुमांस्त्री गौरजो वाजी कुञ्जरो विहगस्तरुः । देहेषु लोकसंज्ञेयं विज्ञेया कर्महेतुषु ॥ ९७ ॥
पुमान्न देवो न नरो न पशुर्न च पादपः । शरीराकृतिभेदास्तु भूपैते कर्मयोनयः ॥ ९८ ॥
वस्तु राजेति यल्लोके यच्च राजभटात्मकम् । तथाऽन्यच्च नृपेत्थं तन्न सत्संकल्पनामयम् ॥ ९९ ॥
यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै । परिणामादिसंभूतां तद्वस्तु नृप तच्च किम् ॥ १०० ॥

---

एवं तावद्देहादीनां पृथगुपलब्धिकारणत्वानेकत्वादिभिरनात्मत्वमुक्तम् । इदानीमनित्यत्वेनानात्मत्वमाह—त्वं राजेत्यादिना अध्यायशेषेण ॥ त्वं राजेति ॥ अत्र शिबिकाग्रहणं यद्द्रव्या शिबिकेतिवदनित्यत्वेऽनात्मत्वे च दृष्टान्तार्थम् । एतत्—राजशिबिकादिकं सर्वं, न सत्—अनित्यम् । अतो नात्मेत्यभिप्रायः ॥ ९२ ॥

दृष्टान्तं निरूपयति वृक्ष इति ॥ इयं शिबिका जीवद्दशायां वृक्षः, भिन्नो दारु, पश्चात्संयोजिता शिबिका । तत्र शिबिकावस्थायां वृक्षदारुसंज्ञे क गते? वृक्षत्वाद्यवस्थानाशान्नष्टे इत्यर्थः ॥ ९३ ॥

एतदुपपादयति वृक्षारूढ इति ॥ त्वां जनो वृक्षारूढ इति न वदति, दारुण्यारूढ इति च; किं तु शिबिकागतं ब्रवीति ॥ ९४ ॥

शिबिका चास्थिरेत्याह—शिबिकेति ॥ रचनास्थितिसंस्थितो दारुसंघातः शिबिका; सा तद्भेदेऽन्विष्यताम्—नष्टेत्यर्थः ॥ ९५ ॥

एवमिति ॥ एवं शलाकापृथग्भावे छत्रं विमृश्यताम् । त्वमहमर्थतया लोकाभिमतेष्वनित्येषु शरीरेष्वप्येष न्यायः ॥ ९६ ॥

पुमांस्त्रीति ॥ आत्मतयाऽभिमतेषु देहेषु लोकसंज्ञा, न तु शास्त्रन्यायदृष्टात्मसंज्ञा ॥ ९७ ॥

पुमानिति ॥ पुमान्—आत्मा, न देवादिरूपः । एते—देवत्वादयः ॥ ९८ ॥

वस्त्विति ॥ इत्थं सप्रतियोगिकं पितृपुत्रत्वादिकं यत्तत्संकल्पनामयं-संकल्पना उत्पत्तिः तन्मयं-तत्प्रचुरम् । अतो न सत् ॥ ९९ ॥

अत्राचिद्वस्तुन्यवस्त्वसच्छब्दौ न तुच्छत्वमिथ्यात्वपरौ; अपि तु विनाशित्वपरावित्याह—यत्त्विति ॥ यत्तु कालभेदेन परिणामोपाध्यादिभिः कृतामन्यसंज्ञां न याति तद्वस्तु तत्किम्? दृश्येषु न किंचिदित्यर्थः । यच्चावस्त्वित्युक्तं तन्न तुच्छं मिथ्या वा, कालान्तरेणेति वचनात् । विधिनिषेधयोर्देशकालैक्ये हि विरोधः । अत्र तु कालभेदादविरोधः ॥ १०० ॥

राजा सर्वलोकस्य पितुः पुत्रो रिपो रिपुः। पत्न्याः पतिः पिता सूनोः किं त्वां भूप वदाम्यहम्॥
किमेतच्छिरः किं नु ग्रीवा तव तथोदरम्। किमु पादादिकं त्वं वै तवैतत्किं महीपते ॥ १०२ ॥
स्तावयवेभ्यस्त्वं पृथग्भूप व्यवस्थितः। कोऽहमित्यत्र निपुणो भूत्वा चिन्तय पार्थिव ॥ १०३ ॥
व्यवस्थिते तत्त्वे मयाऽहमिति भाषितुम्। पृथक्करणनिष्पाद्यं शक्यते नृपते कथम् ॥ १०४ ॥

इति श्रीविष्णुपुराणे द्वितीयेंऽशे त्रयोदशोऽध्यायः ॥ १३ ॥

---

## अथ चतुर्दशोऽध्यायः

श्रीपराशरः—
शम्य तस्येति वचः परमार्थसमन्वितम्। प्रश्रयावनतो भूत्वा तमाह नृपतिर्द्विजम् ॥ १ ॥

राजोवाच—
गवन्यत्त्वया प्रोक्तं परमार्थमयं वचः। श्रुते तस्मिन्भ्रमन्तीव मनसो मम वृत्तयः ॥ २ ॥

---

अस्थिरमसदित्युक्तं तन्निदर्शयति—त्वं राजेति ॥ राजत्वादेर्लोकाद्युपाधिकत्वादस्थिरत्वम् ॥ १०१ ॥

अथ * पिण्डः पृथगित्यादिना संक्षेपेणोक्तमर्थमुपपादयन्देहात्मविवेकं प्रकरणार्थमुपसंहरति—त्वं किमेत-ति ॥ अन्धतमस्यक्षिनिमीलने च निरवयवत्वेनात्मनः प्रत्यक्तयाऽहमिति भासमानत्वात्, इदंबुद्धिबोध्यमदस्यापर-गं च शिर आदि नात्मा, न चात्मनोऽवयवः ॥ १०२ ॥

समस्तावयवेभ्य इति ॥ तस्मादेभ्यः पृथगात्मा व्यवस्थित इत्यर्थः। निपुणो भूत्वेति पाठः। यथोक्तं मुनाचार्यैः * अहंबुद्ध्या परागर्थात्प्रत्यगर्थो हि भिद्यते * इति ॥ १०३ ॥

प्रकृतं प्रश्नप्रतिवचनवैयर्थ्यमुपसंहरति—एवमिति ॥ तत्त्वे—आत्मस्वरूपे। पृथक्करणं—पृथक्कारः, देवादि तिचरणादिपृथक्कारस्य भेदस्य देहगतत्वेनानात्मधर्मत्वादात्मान्तरेभ्यः पृथक्करणनिष्पाद्यं सोऽहमिति वचनं भाषितुं शक्यम्, सर्वसाधारणाकारोऽहमिति वक्तुं न शक्यत इत्यर्थः ॥ १०४ ॥

इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये द्वितीयेंशे त्रयोदशोऽध्यायः ॥ १३ ॥

---

## अथ चतुर्दशोऽध्यायः

पूर्वाध्याये देहादिव्यतिरिक्त आत्मेत्युक्तम्। अनन्तरेणाध्यायेन स एव [नित्यत्वानन्यार्थत्वानौपाधि-कत्वादिभिः] परमपुरुषार्थ इत्युच्यते—निशम्येति ॥ परमार्थसमन्वितं परमार्थतया वक्ष्यमाणेनात्मना समन्वितं—द्विषयम् ॥ १ ॥

भगवन्निति ॥ परमार्थमयम्—आत्मयाथात्म्यप्रतिपादकत्वेन परमप्रयोजनरूपम्। भ्रमन्ति—परमपुरु-षार्थशुश्रूषया पर्याकुला भवन्ति ॥ २ ॥

एतद्विवेकविज्ञानं यदशेषेषु जन्तुषु। भवता दर्शितं विप्र तत्परं प्रकृतेर्महत् ॥ ३ ॥
नाहं वहामि शिबिकां शिबिका न मयि स्थिता। शरीरमन्यदस्मत्तो येनेयं शिबिका धृता ॥ ४ ॥
गुणप्रवृत्त्या भूतानां प्रवृत्तिः कर्मचोदिता। प्रवर्तन्ते गुणा ह्येते किं ममेति त्वयोदितम् ॥ ५ ॥
एतस्मिन्परमार्थज्ञ मम श्रोत्रपथं गते। मनो विह्वलतामेति परमार्थार्थितां गतम् ॥ ६ ॥
पूर्वमेव महाभागं कपिलर्षिमहं द्विज। प्रष्टुमभ्युद्यतो गत्वा श्रेयः किं न्वत्र शंस मे ॥ ७ ॥
तदन्तरे च भवता यदेतद्वाक्यमीरितम्। तेनैव परमार्थार्थं त्वयि चेतः प्रधावति ॥ ८ ॥
कपिलर्षिर्भगवतः सर्वभूतस्य वै किल। विष्णोरंशो जगन्मोहनाशायोर्वीमुपागतः ॥ ९ ॥
स एव भगवान्नूनमस्माकं हितकाम्यया। प्रत्यक्षतामत्र गतो यथैतद्भवतोच्यते ॥ १० ॥
तन्मह्यं प्रणताय त्वं यच्छ्रेयः परमं द्विज। तद्वदाखिलविज्ञानजलवीच्युदधिर्भवान् ॥ ११ ॥

ब्राह्मण उवाच—

भूप पृच्छसि किं श्रेयः परमार्थं नु पृच्छसि। श्रेयांस्यपरमार्थार्थान्यशेषाणि च भूपते ॥ १२ ॥
देवताराधनं कृत्वा धनसंपदमिच्छति। पुत्रानिच्छति राज्यं च श्रेयस्तत्प्राप्तिलक्षणम् ॥ १३ ॥
कर्म यज्ञात्मकं श्रेयः स्वर्लोकफलदायि यत्। श्रेयः प्रधानं च फले तदेवानभिसंहिते ॥ १४ ॥
आत्मा ध्येयस्सदा भूप योगयुक्तैस्तथा परम्। श्रेयस्तस्यैव संयोगः श्रेयो यः परमात्मना ॥ १५ ॥
श्रेयांस्येवमनेकानि शतशोऽथ सहस्रशः। सन्त्यत्र परमार्थस्तु न त्वेते श्रूयतां च मे ॥ १६ ॥
धर्माय त्यज्यते किन्तु परमार्थो धनं यदि। व्ययश्च क्रियते कस्मात्कामप्राप्त्युपलक्षणः ॥ १७ ॥

---

उक्तमनुवदन्नेवं प्रशंसति—एतदिति ॥ यच्च प्रकृतेर्विवेकविज्ञानमस्ति तद्विवेकविज्ञानं यदेतदशेषजन्तुष्वनुवृत्तम्। विवेकविज्ञानम्—आत्मतत्त्वं, तत् प्रकृतेः परं—विलक्षणं महच्च ॥ ३—५ ॥

एतस्मिन्निति ॥ * आत्मा शुद्धोऽक्षर इति वचनात्। परमार्थार्थितां गतं—परमप्रयोजनश्रवणेनार्थितां गतम्। 'परमार्थार्थतां गतम्' इति च पाठः ॥ ६—९ ॥

स एवेति ॥ यथैतदिति। एतत्—आत्मतत्वं—परमार्थार्थतां गतम् ॥ १०, ११ ॥

श्रेयः किन्विति नृपेण पूर्वमुक्तत्वात्, श्रेयःपरमार्थयोरत्यन्तवैलक्षण्यात्तयोः कतरत्पृच्छसीति विकल्पयति—भूपेति ॥ अपरमार्थार्थानि—अपरमार्थवस्तूनि; आर्षत्वादर्थशब्दस्य नपुंसकत्वम ॥ १२ ॥

धनादियोगान्तमुत्तरोत्तरोत्कृष्टं श्रेयस्सप्तकं दर्शयति—देवतेति त्रिभिः ॥ देवताराधनमिति। तत्प्राप्तिलक्षणं—तेषां धनादीनां प्राप्तिरूपम् ॥ १३ ॥ कर्मेति ॥ फलेऽनभिसंहिते सति, तदेव-कर्म मुख्यं श्रेयः ॥ १४ ॥

आत्मेति ॥ आत्मा ध्येय इति श्रेयः—तद्ध्यानं श्रेय इत्यर्थः। तस्यैव—जीवस्यैव परमात्मना संयोगः—ऐक्यम्। 'श्रेयो यत्परमात्मने' इति च पाठः ॥ १५ ॥

श्रेयांसीति ॥ अनेकानि शास्त्रोक्तानि स्वोत्प्रेक्षितानि च। अत्र—लोके। एते—पदार्थाः, न परमार्थाः—न परमप्रयोजनम्। परमार्थस्तु मे—मत्तः श्रूयताम् ॥ १६ ॥

पुत्रश्चेत्परमार्थः स्यात्सोऽप्यन्यस्य नरेश्वर। परमार्थभूतस्सोऽन्यस्य परमार्थो हि तत्पिता ॥ १८ ॥
एवं न परमार्थोऽस्ति जगत्यस्मिश्चराचरे। परमार्थो हि कार्याणि कारणानामशेषतः ॥ १९ ॥
राज्यादिप्राप्तिरत्रोक्ता परमार्थतया यदि। परमार्था भवन्त्यत्र न भवन्ति च वै ततः ॥ २० ॥
ऋग्यजुस्सामनिष्पाद्यं यज्ञकर्म मतं तव। परमार्थभूतं तत्रापि श्रूयतां गदतो मम ॥ २१ ॥
यत्तु निष्पाद्यते कार्यं मृदा कारणभूतया। तत्कारणानुगमनाज्ज्ञायते नृप मृण्मयम् ॥ २२ ॥
एवं विनाशिभिर्द्रव्यैः समिदाज्यकुशादिभिः। निष्पाद्यते क्रिया या तु सा भवित्री विनाशिनी ॥२३॥
अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते। तत्तु नाशि न सन्देहो नाशिद्रव्योपपादितम् ॥ २४ ॥
तदेवाफलदं कर्म परमार्थो मतस्तव। मुक्तिसाधनभूतत्वात्परमार्थो न साधनम् ॥ २५ ॥
ध्यानं नैवात्मनो भूप परमार्थार्थशब्दितम्। भेदकारि परेभ्यस्तु परमार्थो न भेदवान् ॥ २६ ॥
परमात्मात्मनोर्योगः परमार्थ इतीष्यते। मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः ॥ २७ ॥
तस्माच्छ्रेयांस्यशेषाणि नृपैतानि न संशयः। परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम ॥ २८ ॥

---

धनादीनां श्रेयस्त्वं क्रमेण निराकरोति—धर्मायेत्यादि ॥ कामप्राप्त्युपलक्षणः—कामप्राप्तिहेतुः। धनं धर्मकामार्थं त्याज्यत्वान्न स्वयं पुरुषार्थः। यदर्थं सर्वं यच्च नान्यार्थं स परमार्थः; स आत्मैवेति भावः, * आत्मनस्तु कामाय सर्वं प्रियं भवतीति श्रुतेः ॥ १७ ॥

पुत्रश्चेदिति ॥ सोऽप्यन्यस्य—स्वपितुः, परमार्थः। तत्पिता च अन्यस्य स्वपितुः परमार्थः। एवं पुत्रस्य पित्रर्थत्वाज्जगति न परमार्थोऽस्ति। एतदुपपादयति—एवं न परमार्थोऽस्तीति ॥ १८ ॥

अशेषेण पुत्रादिकार्याणि कारणानां हि—जनकानां परमार्थः; तस्मान्न परमार्थः। अनन्यार्थो हि परमार्थः ॥ १९ ॥

राज्यादिप्राप्तिरिति ॥ राज्यादिप्राप्तिः परमार्थो यदि, ततः—तर्हि अत्र-लोके, राज्यादयः परमार्था भवन्ति, न भवन्ति च—नश्यन्ति च। कथमस्थिरा राज्यादयः परमार्थ इति भावः। एतदस्थिरत्वं पुत्रादिष्वपि समानम् ॥ २० ॥

धर्मस्य नश्वरत्वमनुमानेन दर्शयति—ऋगित्यादिना ॥ २१—२४ ॥

तदेवेति ॥ तदेव—यज्ञकर्मैव। चेन्नेत्यध्याहारः। न हि परमार्थोऽन्यस्य साधनम् ॥ २५ ॥

ध्यानमिति ॥ परमार्थार्थशब्दितं ध्यानं न परमप्रयोजनभूतवस्तुशब्दवाच्यम्। यतस्तत्परेभ्यो घटादिभ्यो भेदं करोतीति भेदकारि, विशदविशदतराद्यवस्थाभेदं स्वस्य करोति। नैवमवस्थाभेदेन वैरूप्यं परमार्थस्य। यद्वा, भेदकारि—स्मृतिप्रत्ययत्वेन क्षणभङ्गुरत्वात्। न तु परमार्थो भंगुरः ॥ २६ ॥

परमात्मेति ॥ इष्यते यदीति शेषः। योगस्तादात्म्यम्, अन्यथा उत्तरार्द्धेनासंगतेः। एतदैक्यं मिथ्या; तत्र हेतुः—अन्यदिति ॥ पूर्वेषु धनादिषु नश्वरत्वादि; योगे तु स्वरूपाभावः ॥ २७ ॥

उपसंहरति—तस्मादिति ॥ एतानि—धनादीनि श्रेयांस्येव न तु परमार्थः। परमार्थस्तु श्रूयताम् ॥२८॥

एको व्यापी समः शुद्धो निर्गुणः प्रकृते परः। जन्मवृद्ध्यादिरहित आत्मा सर्वगतोऽव्ययः ॥ २९ ॥
परज्ञानमयोऽसद्भिर्नामजात्यादिभिर्विभुः। न योगवान्न युक्तोऽभून्नैव पार्थिव योक्ष्यते ॥ ३० ॥
तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्। विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः ॥ ३१ ॥
वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः। अभेदव्यापिनो वायोस्तथाऽस्य परमात्मनः ॥ ३२ ॥
एकस्वरूपभेदश्च बाह्यकर्मवृतिप्रजः। देवादिभेदेऽपध्वस्ते नास्त्येवावरणे हि सः ॥ ३३ ॥

इति श्रीविष्णुपुराणे द्वितीयेंऽशे चतुर्दशोऽध्यायः ॥ १४ ॥

---

परमार्थमाह—एक इति ॥ एकः—देहवन्नानेकोपचयरूपः; व्यापी-ज्ञानेन सर्वव्यापनस्वभावः। देवमनुष्यादीनां विषमेषु देहेषु स्थितोऽपि समः—परस्परं च समः। शुद्धः—स्वतो निर्मलः। निर्गुणः-सत्त्वादिरहितः। तत्र हेतुः—प्रकृतेः परः—जन्मादिषड्भावविकाररहितः। आत्मा—चेतनः। सर्वगतः—नाशकानामग्निजलादीनां सौक्ष्म्येण व्यापकः। अतो दाहादिरहितः। अव्ययः—अविकलः ॥ २९ ॥

परज्ञानमय इति ॥ परज्ञानमयः—प्रकृष्टज्ञानस्वरूपः। परमज्ञानमय इति च पाठः। परशब्देन विषयज्ञानं व्यावर्त्यते। सुखसंवित्स्वरूप इत्यर्थः। असद्भिः—विनाशिभिर्देवादिनामरूपैः कालत्रयेऽप्ययुक्तः। विभुः—देहेन्द्रियाणां स्वामी; स्वतः स्वराडिति वा ॥ ३० ॥

एवमेको व्यापीत्यादिना आत्मस्वरूपमुक्तम्। इदानीं तस्य देवादिरूपेष्वात्मपरदेहेषु सतोऽप्येकप्रकारं यद्विज्ञानं-विज्ञानरूपम् असौ परमार्थ इत्याह—तस्येति ॥ देवादिदेहेषु स्थितस्यात्मनस्तद्रूपेण भिन्नत्वप्रतीतिर्भ्रान्तिरित्याह—द्वैतिन इति ॥ ३१ ॥

आत्मानो हि स्वरूपेण परस्परं भिन्नाः, न तु देवादिरूपेण, तेषामतद्रूपत्वस्योक्तत्वात्। केचिदत्रात्मनां स्वरूपेण भेदो निषिध्यत इत्याहुः; तदयुक्तम्। * तस्यात्मपरदेहेषु, * तत्र त्वमहमप्यत्र, * अहं त्वं च तथाऽन्ये च, * त्वं चान्येचेत्याद्यात्मबहुत्वप्रतिपादकबहुवचनविरोधात्, श्रुतिस्मृतिसूत्रन्यायविरोधाच्च। यदि देवादिरूपेणात्मनां न भेदः, कथं तर्हि देवोऽयं, मनुष्योऽयमिति वैषम्येण व्यवहार उपपद्यते? तत्राह—वेणुरन्ध्रेति ॥ यथा वेणोरनेकरन्ध्रवर्तिनां वाय्वंशानां वायुत्वेनैकाकारणां रन्ध्रभेदविनिष्क्रमणकृतष्षड्जादिसंज्ञाभेदः; एवमात्मनां ज्ञानैकाकाराणां देवादिदेहप्रवेशकृतो देवादिव्यवहारः, न तु तादूप्यकृतः। अभेदव्यापिनः—अभेदेन—वायुत्वाकारेण व्यापिनः। अत्र परमात्मशब्देनात्मैवोच्यते, * परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः, * तैरेव विगतः शुद्धः परमात्मा निगद्यते, इत्यादिदर्शनात् ॥ ३२ ॥

उक्तमर्थं विवृण्वन्नुपसंहरति—एकस्वरूपेति ॥ एकस्वरूपभेदः—* तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्। विज्ञानं परमार्थोऽसौ * इत्युक्तज्ञानैकस्वरूपस्यात्मनो भेदः देवादिरूपः, बाह्यकर्मवृतिप्रजः—बाह्यकर्मावरणजातः। फलाभिसन्धियुक्तं भगवत्यसमर्पितं च बाह्यकर्म, आत्मनः स्वरूपबहिर्भूतं वा; यथा वक्ष्यति * अविद्याकर्मसंज्ञाऽन्या......तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता। सर्वभूतेषु भूपाल तारतम्येन वर्तते॥ इति। देवादिभेदश्चायं युगपदनेकेषामेकस्य च कालभेदेनापध्वस्ते आवरणे—कर्मावरणे, स देवादिभेदो न भवति। देवादिभेदोऽपध्वस्त इति च पाठः। यथाह शौनकः * कर्मिणां कर्मभेदेन देवभेदादयो यतः ॥ कर्मक्षयादशेषाणां भेदानां संक्षयस्ततः ॥ इति ॥ ३३ ॥

इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये द्वितीयेंऽशे चतुर्दशोऽध्यायः ॥ १४ ॥

## अथ पञ्चदशोऽध्यायः

श्रीपराशरः—

इत्युक्ते मौनिनं भूयश्चिन्तयानं महीपतिम्। प्रत्युवाचाथ विप्रोऽसावद्वैतान्तर्गतां कथाम्॥ १॥

ब्राह्मणः—श्रूयतां नृपशार्दूल यद्गीतमृभुणा पुरा। अवबोधं जनयता निदाघस्य महात्मनः॥ २॥

ऋभुर्नामाऽभवत्पुत्रो ब्रह्मणः परमेष्ठिनः। विज्ञाततत्त्वसद्भावो निसर्गादेव भूपते॥ ३॥

तस्य शिष्यो निदाघोऽभूत्पुलस्त्यतनयः पुरा। प्रादादशेषविज्ञानं स तस्मै परया मुदा॥ ४॥

अवाप्तज्ञानतंत्रस्य न तस्याद्वैतवासानाम्। स ऋभुस्तर्कयामास निदाघस्य नरेश्वर॥ ५॥

देविकायास्तटे वीरनगरं नाम वै पुरम्। समृद्धमतिरम्यं च पुलस्त्येन निवेशितम्॥ ६॥

रम्योपवनपर्यन्ते स तस्मिन्पार्थिवोत्तम। निदाघो नाम योगज्ञः ऋभुशिष्योऽवसत्पुरा॥ ७॥

दिव्ये वर्षसहस्रे तु समतीतेऽस्य तत्पुरम्। जगाम स ऋभुश्शिष्यं निदाघमवलोककः॥ ८॥

स तस्य वैश्वदेवान्ते द्वारालोकनगोचरे। स्थितस्तेन गृहीतार्घ्यो निजश्वेम प्रवेशितः॥ ९॥

प्रक्षालितांघ्रिपाणिं च कृतासनपरिग्रहम्। उवाच स द्विजश्रेष्ठो भुज्यतामिति सादरम्॥ १०॥

ऋभुः—भो विप्रवर्य भोक्तव्यं यदन्नं भवतो गृहे। तत्कथ्यतां कदन्नेषु न प्रीतिस्सततं मम॥ ११॥

निदाघः—

सक्तुयावकवाटयानामपूपानां च मे गृहे। यद्रोचते द्विजश्रेष्ठ तत्त्वं भुंक्ष्व यथेच्छया॥ १२॥

ऋभुः—कदन्नानि द्विजैतानि मृष्टमन्नं प्रयच्छ मे। संयावपायसादीनि द्रप्सफाणितवन्ति च॥ १३॥

निदाघः—

हेहे शालिनि मद्गेहे यत्किंचिदतिशोभनम्। भक्ष्योपसाधनं मृष्टं तेनास्यान्नं प्रसाधय॥ १४॥

ब्राह्मणः—

इत्युक्ता तेन सा पत्नी मृष्टमन्नं द्विजस्य यत्। प्रसाधितवती तद्वै भर्तुर्वचनगौरवात्॥ १५॥

तं भुक्तवन्तमिच्छातो मृष्टमन्नं महामुनिम्। निदाघः प्राह भूपाल प्रश्रयावनतस्स्थितः॥ १६॥

---

अथ पञ्चदशोऽध्यायः

इत्युक्त इति॥ इत्युक्ते—एवमात्मनो वैषम्याभाव उक्ते। क्षुत्पिपासादिधर्मकत्वभ्रान्त्या आत्मनो द्वैतं चिन्तयानं मौनिनं वाचाऽचोदयन्तं महीपतिमभिप्रायज्ञो विप्रश्चिद्वस्तुवैषम्याभावविषयां कथामुवाच॥ १—४॥

अवाप्तेति॥ ज्ञानतन्त्रम्—अध्यात्मशास्त्रम्। अद्वैतवासना नेति तर्कयामास। न तस्याद्वैतवासनामिति च पाठः॥ ५—७॥ दिव्यवर्षेति॥ अवलोककः—अवलोकयितुम्॥ ८—११॥

सक्त्विति॥ यावको यवविकारः॥ १२॥

कदन्नानीति॥ मृष्टं—रुच्यं मधुरं वा। संयावः—यवगोधूमविकारो रज्जुरूपो भक्ष्यः। द्रप्सं—दधिघनेतरत्। फाणितं—विकृतगौडानि॥ १३॥

हे हे शालिनीति॥ शाला—गृहं, तद्वति, गृहिणीत्यर्थः॥ १४—१६॥

निदाघः—

अपि ते परमा तृप्तिरुत्पन्ना तुष्टिरेव च। अपि ते मानसं स्वस्थमाहारेण कृतं द्विज ॥ १७ ॥
क्वनिवासो भवान्विप्र क्व च गन्तुं समुद्यतः। आगम्यते च भवता यतस्तच्च द्विजोच्यताम् ॥ १८ ॥

ऋभुः—

क्षुद्यस्य तस्य भुक्तेऽन्ने तृप्तिर्ब्राह्मण जायते। न मे क्षुदभवत्तृप्तिं कस्मान्मां द्विज पृच्छसि ॥ १९ ॥
वह्निना पार्थिवे धातौ क्षपिते क्षुत्समुद्भवः। भवत्यम्भसि च क्षीणे नृणां तृडपि जायते ॥ २० ॥
क्षुत्तृष्णे देहधर्माख्ये न ममैते यतो द्विज। (ततः क्षुत्संभवाभावात्तृप्तिरस्त्येव मे सदा ॥)
ततः क्षुत्संभवात्तृप्तिरपि नास्त्येव मे सदा ॥ २१ ॥
मनसः स्वस्थता तुष्टिश्चित्तधर्माविमौ द्विज। चेतसो यस्य तत्पृच्छ पुमानेभिर्न युज्यते ॥ २२ ॥
क्व निवासस्तवेत्युक्तं क्व गन्तासि च यत्त्वया। कुतश्चागम्यते तत्र त्रितयेऽपि निबोध मे ॥ २३ ॥
पुमान्सर्वगतो व्यापी आकाशवदयं यतः। कुतः कुत्र क्व गन्तासीत्येतदप्यर्थवत्कथम् ॥ २४ ॥
सोऽहं गन्ता न चागन्ता नैकदेशनिकेतनः। त्वं चान्ये च न च त्वं च नान्ये नैवाहमप्यहम् ॥२५॥

---

अपीति ॥ तृप्तिः—क्षुत्पिपासादिनिवृत्तिः, तुष्टिः—अलंबुद्धिः, मनसः क्षोभाभावः स्वास्थ्यम्। अपि ते मनसः स्वास्थ्यमिति च पाठः ॥ १७ ॥ क्वेति। क्वनिवास इति बहुव्रीहिः। यत्रसायंगृह इतिवत् ॥१८–२०॥

क्षुत्तृष्णे इति ॥ बुभुक्षापिपासयोरिच्छात्वेन अन्तःकरणधर्मत्वेऽपि देहधर्मत्वाख्या देहस्थधातुक्षयत्वादौपचारिकी। * अशनायापिपासे प्राणस्य शोकमोहौ मनसः * इति श्रुतौ प्राणधर्मत्वोक्तिश्च प्राणस्यान्तःकरणक्रियाशक्तित्वेन तदभेदात्। तृप्तिग्रहणं तु तुष्ट्यादेरुपलक्षणम् ॥ २१ ॥

मनस इति ॥ एतद्धर्मत्रयं मे सदाऽस्तीत्युपचारः। वस्तुतस्तु मनस एव स्वस्थतादयो धर्माः। तस्माद्यस्य चेतस इमे धर्मास्तच्चेत इमांश्चेतोधर्मान् पृच्छ ॥ २२, २३ ॥

पुमानिति ॥ नात्र पुंसो गगनवत्परममहत्त्वेन गमनादि निषिध्यते, तथा सति सर्वगतव्यापिपदयोः पौनरुक्त्यात्। पूर्वत्र गमनानुमत्या परिमितत्वाभ्युपगमात्, सूत्रविरोधाच्च न परममहत्त्वमात्मनः। अयमर्थः—सर्वगतः—सर्वत्र देवादिदेहेऽवस्थितः अयमात्मा, व्यापी—निरवयवत्वेनातिसूक्ष्मत्वात्सर्वाचेतनव्यापनशीलः। अतोऽस्य निरवयवस्यामूर्तस्य चाकाशादिवदतिसौक्ष्म्यात् स्वतो गमनागमने न भवतः। यथा इह सर्वगतानाममूर्तानां जातिगुणादीनां स्वतः क्रिया नास्ति, किन्तु आश्रयद्वारा देशान्तरप्राप्तिः। एवममूर्तस्यात्मनोऽपि देहद्वारा देशान्तरप्राप्तिः, यथा सवाहनस्य पंगोः। यथोक्तं पूर्वत्र * अहं त्वं च तथाऽन्ये च भूतैरुह्याम पार्थिव। * उपभोगनिमित्तं च सर्वत्र गमनक्रिया। * उपभोगनिमित्तं च देशाद्देशान्तरागमः * इत्यादि। एवं पूर्वापरविरोधादयमेवार्थः। अस्य तवैतद्वचः कथमर्थवदित्यन्वयः ॥ २४ ॥

अतः स्वतो मे गमनादि न संभवति, देह एव गमनादिकर्तेत्यभिप्रायेणाह—सोऽहमिति ॥ यथाऽहं न गमनादिकर्ता एवं त्वं चान्ये चात्मानः। नन्वस्ति ह्यहं गच्छामीति प्रत्ययः, तत्राह—न च त्वमिति। यस्त्वया गमनादिकर्तृत्वेनाभिमतो देहो न स त्वम्। एवमुत्तरयोः ॥ २५ ॥

मृष्टं न मृष्टमित्येषा जिज्ञासा मे कृता तव। किं वक्ष्यसीति तत्रापि श्रूयतां द्विजसत्तम ॥ २६ ॥

किमस्वाद्वथ वा मृष्टं भुंजतोऽस्ति द्विजोत्तम। मृष्टमेव यथाऽमृष्टं तदेवोद्वेगकारकम् ॥ २७ ॥

अमृष्टं जायते मृष्टं मृष्टादुद्विजते जनः। आदिमध्यावसानेषु किमन्नं रुचिकारकम् ॥ २८ ॥

मृण्मयं हि गृहं यद्वन्मृदा लिप्तं स्थिरं भवेत्। पार्थिवोऽयं तथा देहः पार्थिवैः परमाणुभिः ॥ २९ ॥

यवगोधूममुद्गादि घृतं तैलं पयो दधि। गुडं फलादीनि तथा पार्थिवाः परमाणवः ॥ ३० ॥

तदेतद्भवता ज्ञात्वा मृष्टामृष्टविचारि यत्। तन्मनस्समतालम्बि कार्यं साम्यं हि मुक्तये ॥ ३१ ॥

ब्राह्मणः—

इत्याकर्ण्य वचस्तस्य परमार्थाश्रितं नृप। प्रणिपत्य महाभागो निदाघो वाक्यमब्रवीत् ॥ ३२ ॥

प्रसीद मद्धितार्थाय कथ्यतां कस्त्वमागतः। नष्टो मोहस्तवाकर्ण्य वचांस्येतानि मे द्विज ॥ ३३ ॥

ऋभुः—ऋभुरस्मि तवाचार्यः प्रज्ञादानाय ते द्विज। इहागतोऽहं यास्यामि परमार्थस्तवोदितः ॥३४॥

एवमेकमिदं विद्धि न भेदि सकलं जगत्। वासुदेवाभिधेयस्य स्वरूपं परमात्मनः ॥ ३५ ॥

---

मृष्टमिति ॥ मृष्टं नामृष्टमिति च पाठः। मृष्टं मे देयं नामृष्टमिति मयाऽभिहिते मृष्टामृष्टादिभेदः स्वाभाविक इति वा, अथौपाधिक इति वा किमुत्तरमयं वक्ष्यतीति तव जिज्ञासा कृता, न तु तयोः स्वाभाविकत्वधियेत्यर्थः। तत्रापि—मृष्टामृष्टविषये, श्रूयताम्—अस्वाभाविकत्वमिति भावः ॥ २६ ॥

तदेवाह—किमस्वाद्विति द्वयेन ॥ किमस्वाद्विति ॥ भुंजानस्य किमन्नं नियमेनास्वादु? अथवा किमन्नं मृष्टम्? न किमपीति भावः। तदेवोपपादयति मृष्टमेवेति। अमृष्टमेव यदा यतो मृष्टं, तन्मृष्टमेव चोद्वेगकारकम्। अमृष्टमित्येकस्योभयरूपत्वमस्वाभाविकत्वे हेतुः। तथाहि क्षुधि सत्याम् अमृष्टं—कुल्माषादिकं, मृष्टं-रुच्यं जायते। क्षुदभावे मृष्टात्संयावपायसादेरप्युद्विजते। अतो भोक्तुरवस्थावशादन्नादेः रुच्यत्वारुच्यत्वे नियते, अतो मृष्टामृष्टभेदो न स्वाभाविक इति भावः ॥ २७, २८ ॥

तर्हि तादृगन्नं किं त्वया भुक्तमित्याशंक्य कर्मानीतेन तादृगन्नेन तादृग्देह एव स्थैर्यार्थं लिप्यते नात्मेत्याह—मृण्मयमिति ॥ यवेति ॥ भुक्तस्य यवाद्यन्नस्य स्थूलोंशो मलमूत्रभूतो निर्गच्छति; सूक्ष्मांशो मांसादिधातुः स्यात्; सूक्ष्मतरो मनःपोषक इति द्योतयितुं परमाणुशब्दः। यथा छान्दोग्ये * अन्नमशितं त्रेधा विधीयते इत्यादि ॥ २९, ३० ॥

उपसंहरति तदेतदिति ॥ एतत्—आत्मनो देहव्यतिरिक्तत्वादिकमुक्तमर्थजातं, ज्ञात्वा। मृष्टामृष्टविचारीत्युपलक्षणम्। मृष्टमिदममृष्टमिदम्, देवोऽहं मनुष्योऽहमित्यादिकर्मकृतभेदावलम्बि यन्मनस्तदात्मनां ज्ञानैकाकारत्वेन समत्वालम्बि कार्यम्। अनुसंहितं हि साम्यं मुक्तये भवति ॥ ३१—३४ ॥

उक्तमर्थं स्पष्टयति—एवमिति ॥ एवम्—उक्तप्रकारेण इदम्—आत्मस्वरूपं ज्ञानैकाकारत्वेन एकं—समं विद्धि। न भेदि-देवादिभेदरहितम्। क्षुत्पिपासादिरहितं च विद्धि। अन्यच्च वेदितव्यमस्ति। चेतनाचेतनात्मकं सकलं जगत् वासुदेवस्य—* सर्वत्र * वासनाद्वासुदेवस्य वासितं ते जगत्त्रयम्। सर्वभूतनिवासोऽसि वासुदेव

ब्राह्मणः—

तथेत्युक्त्वा निदाघेन प्रणिपातपुरस्सरम्। पूजितः परया भक्त्या इच्छातः प्रययावृभुः ॥ ३६ ॥

इति श्रीविष्णुपुराणे द्वितीयेंऽशे पंचदशोऽध्यायः ॥ १५ ॥

## अथ षोडशोऽध्यायः



ब्राह्मणः—

ऋभुर्वर्षसहस्रे तु समतीते नरेश्वर। निदाघज्ञानदानाय तदेव नगरं ययौ ॥ १ ॥

नगरस्य बहिस्सोऽथ निदाघं ददृशे मुनिः। महाबलपरीवारे पुरं विशति पार्थिवे ॥ २ ॥

दूरे स्थितं महाभागं जनसम्मर्दवर्जकम्। क्षुत्क्षामकण्ठमायान्तमरण्यात्ससमित्कुशम् ॥ ३ ॥

दृष्ट्वा निदाघं स ऋभुरुपगम्याभिवाद्य च। उवाच कस्मादेकान्ते स्थीयते भवता द्विज ॥ ४ ॥

निदाघः—

भो विप्र जनसंमर्दो महानेष नरेश्वरः। प्रविविक्षुः पुरं रम्यं तेनात्र स्थीयते मया ॥ ५ ॥

ऋभुः—नराधिपोऽत्र कतमः कतमश्चेतरो जनः। कथ्यतां मे द्विजश्रेष्ठ त्वमभिज्ञो मतो मम ॥ ६ ॥

निदाघः—योऽयं गजेन्द्रमुन्मत्तमद्रिशृंगसमुच्छ्रितम्। अधिरूढो नरेंद्रोऽयं परिलोकस्तथेतरः ॥ ७ ॥

---

नमोऽस्तु ते ॥ इत्येवं वसनाद्वासुदेवपदाभिधेयस्य परमात्मनः स्वरूपं—शरीरं विद्धि। * परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज * तानि सर्वाणि तद्वपुः * तत्सर्वं वै हरेस्तनुः * यस्यात्मा शरीरम् * इत्यादि। अत्रात्मस्वरूपनिरूपणप्रकरणनिगमने * तन्मनः समतालम्बि कार्यं साम्यं हि मुक्तये * इति वचनात् * एवमेकमिदं विद्धी-त्यादिष्वात्मगतमुक्तमेकत्वं ज्ञानैकाकारतया समत्वमेव, न तु स्वरूपैक्यमित्यत्रगन्तव्यम्। चिदचिदात्मकस्य जगतो वासुदेवशरीरत्ववचनादात्मपरमात्मनोश्चाभेदो महर्षेर्नाभिप्रेत इत्यनु सन्धेयम् ॥ ३५, ३६ ॥

इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये द्वितीयेंऽशे पंचदशोऽध्यायः ॥ १५ ॥

## अथ षोडशोऽध्यायः



उक्तस्यात्मसाम्यस्य दर्शनं चिरकालयोगसाध्यमित्युत्तराध्यायेनोच्यते—ऋभुरित्यादिना ॥ १–५ ॥

नराधिप इति ॥ नराधिपोऽत्र कतम इति। नैकस्मिन्नप्यात्मनि नराधिपत्वादिविशेषणं पश्यामीति भावः ॥ ६ ॥

भावापरिज्ञानादाह—योऽयमिति ॥ परिलोकः—परिजनः ॥ ७ ॥

ऋभुः—एतौ हि गजराजानौ युगपद्दर्शितौ मम। भवता न विशेषेण पृथक्चिह्नोपलक्षणौ ॥ ८ ॥
तत्कथ्यतां महाभाग विशेषो भवताऽनयोः। ज्ञातुमिच्छाम्यहं कोऽत्र गजः को वा नराधिपः ९ ॥

निदाघः—
गजो योऽयमधो ब्रह्मन्नुपर्यस्यैष भूपतिः। वाह्यवाहकसंबन्धं को न जानाति वै द्विज ॥ १० ॥
ऋभुः—जानाम्यहं यथा ब्रह्मंस्तथा मामवबोधय। अधश्शब्दनिगद्यं किं किं चोर्ध्वमभिधीयते ॥११॥

ब्राह्मणः—
इत्युक्तस्सहसाऽऽरुह्य निदाघः प्राह तम् ऋभुम्। श्रूयतां कथयाम्येष यन्मां त्वं परिपृच्छसि ॥ १२ ॥
उपर्यहं यथा राजा त्वमधः कुंजरो यथा। अवबोधाय ते ब्रह्मन्दृष्टान्तो दर्शितो मया ॥ १३ ॥
ऋभुः—त्वं राजेव द्विजश्रेष्ठ स्थितोऽहं गजवद्यदि। तदेव त्वं ममाचक्ष्व कतमस्त्वमहं तथा ॥ १४ ॥

ब्राह्मणः—
इत्युक्तस्सत्वरं तस्य प्रगृह्य चरणावुभौ। निदाघस्त्वाह भगवानाचार्यस्त्वमृभुर्ध्रुवम् ॥ १५ ॥
नान्यस्याद्वैतसंस्कारसंस्कृतम् मानसं तथा। यथाऽऽचार्यस्य तेन त्वां मन्ये प्राप्तमहं गुरुम् ॥ १६ ॥
ऋभुः—तवोपदेशदानाय पूर्वशुश्रूषणादृतः। गुरुस्नेहादृभुर्नाम निदाघ समुपागतः ॥ १७ ॥
तदेतदुपदिष्टं ते संक्षेपेण महामते। परार्थसारभूतं यत्तदद्वैतमशेषतः ॥ १८ ॥

ब्राह्मणः—
एवमुक्त्वा ययौ विद्वान्निदाघं स ऋभुर्गुरुः। निदाघोऽप्युपदेशेन तेनाद्वैतपरोऽभवत् ॥ १९ ॥
सर्वभूतान्यभेदेन ददर्श स तदाऽऽत्मनः। तथा ब्रह्मपरो मुक्तिमवाप परमां द्विजः ॥ २० ॥

---

एतौ हीति ॥ अयमयमिति हस्तमुद्रयैतौ दर्शितौ। न मया गजत्वेन राजत्वेन चैतावात्मानौ दृष्टौ। अहं तु निर्वाणज्ञानमयावेतौ पश्यामीति भावः ॥ ८–१२ ॥

उपरीति। आरोहणक्रिययैवोत्तरं दर्शयन् तदतिक्रमदोषं परिहरति—दृष्टान्त इति ॥ १३ ॥

त्वमिति ॥ कतमस्त्वमहं तथेति आत्मनो देहरूपभेदाक्षेपः। त्वमहंशब्दयोरर्थौ देहादिलक्षण इति भावः ॥ १४, १५ ॥ नान्यस्येति ॥ अद्वैतं—देवादिद्वैतराहित्यम् ॥ १६ ॥

तवेति ॥ शुश्रूषणादृतः—शुश्रूषणेनादृतवान्। "शुश्रूषणाद्वृतः" इति पाठे शुश्रूषणेन वशीकृतः। आदृत इति कर्तरि रूपम् ॥ १७ ॥

तदेतदिति ॥ तत्—तस्मात्, अद्वैतम्—देवादिभेदरहितं ज्ञानैकाकारं तदेतदात्मस्वरूपम् अद्य संक्षेपेणोपदिष्टम् ॥ १८, १९ ॥

सर्वभूतानीति ॥ सर्वभूतानि—सर्वानात्मनः, सुरनरत्वादिभेदराहित्येन स्वात्मनोऽभेदेन-समत्वेनापश्यत; न त्वेकत्वेन, तथा सति सर्वभूतान्यात्मन इति (पदवैयर्थ्यप्रसङ्गः।) प्रातिपदिकाद्विभक्तिवैयर्थ्यप्रसङ्गः। तथा ब्रह्माभेदेन-तादात्म्येनापश्यत ॥ * आत्मेति तूपगच्छन्ति ग्राहयन्ति चेति सूत्रात् ॥ २० ॥

तथा त्वमपि धर्मज्ञ तुल्यात्मरिपुबांधवः। भव सर्वगतं जानन्नात्मानमवनीपते ॥ २१ ॥
सितनीलादिभेदेन यथैकं दृश्यते नभः। भ्रान्तदृष्टिभिरात्माऽपि तथैकः सन्पृथक्पृथक् ॥ २२ ॥

एकःसमस्तं यदिहास्ति किंचित्तदच्युतो नास्ति परं ततोऽन्यत्।
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ॥ २३ ॥

श्रीपराशरः—

इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः।
स चापि जातिस्मरणाप्तबोधस्तत्रैव जन्मन्यपवर्गमाप ॥ २४ ॥

इति भरतनरेन्द्रसारवृत्तं कथयति यश्च शृणोति भक्तियुक्तः।
स विमलमतिरेति नात्ममोहं भवति च संसरणेषु मुक्तियोग्यः ॥ २५ ॥

इति श्रीविष्णुपुराणे द्वितीयेंऽशे षोडशोऽध्यायः ॥ १६ ॥

॥ इति श्रीविष्णुपुराणे द्वितीयोंऽशः समाप्तः ॥

---

तथेति ॥ सर्वगतं—तत्तत्कर्मानुगुण्येन तत्तद्देवादिदेहगतम् आमतत्त्वम्, उक्तप्रकारं जानन् तुल्यात्मरिपुबान्धवो भव ॥ २१ ॥

सितनीलेति ॥ एकः सन्—ज्ञानैकाकारेणैकरूपस्सन्, देवादिदेहप्रवेशात्तत्तद्रूपेण भ्रान्त्या पृथक्पृथक् दृश्यते ॥ २२ ॥

अथ * सकलं जगत् वासुदेवाभिधेयस्य स्वरूपं परमात्मन इति पूर्वाध्यायोक्तं सर्वस्य भगवदात्मकत्वं निगमयति—एक इति ॥ यदिहास्ति किंचित्तत्समस्तमेकोऽच्युत एव—तदात्मकमित्यर्थः। तस्मात्ततः परम्—उत्कृष्टम्, अन्यत्-व्यतिरिक्तं च नास्ति ; ततोऽन्यदुत्कृष्टं नास्तीति वा। सर्वात्मनां पूर्वोक्तं ज्ञानैकाकारं तच्छब्देन परामृश्य तत्सामानाधिकरण्येन अहंत्वमादीनामर्थानां ज्ञानमेवाकार इत्युपसंहरन् देवाद्याकारभेदेनात्मसु भेदमोहं परित्यजेत्याह—सोऽहमिति ॥ न त्वत्रात्मनां स्वरूपभेदो निषिध्यते। तथा सति देहातिरिक्तोपदेश्यस्वरूपे अहं त्वं सर्वमेतदात्मस्वरूपमिति भेदनिर्देशो न घटते। देहात्मविवेकविषयश्चायमुपदेशः। कुतः? * पिण्डः पृथग्यतः पुंसः शिरःपाण्यादिलक्षणः इति प्रक्रमात् ॥ २३, २४ ॥

इतीति ॥ सारवृत्तं—सारभूतं वृत्तम्। संसरणेष्वात्ममोहं नैति, मुक्तियोग्यः—मुक्तिसाराज्ययोग्यश्च भवतीत्यन्वयः ॥ २५ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये द्वितीयेंऽशे षोडशोऽध्यायः ॥ १६ ॥

समाप्तश्चायं श्रीविष्णुपुराण-द्वितीयांशः ॥ २ ॥

श्रीमते रामानुजाय नमः

# तृतीयेंऽशे प्रथमोऽध्यायः

मैत्रेयः—

कथिता गुरुणा सम्यग्भूसमुद्रादिसंस्थितिः । सूर्यादीनां च संस्थानं ज्योतिषां चातिविस्तरात् ॥ १ ॥
देवादीनां तथा सृष्टिर्ऋषीणां चापि वर्णिता । चातुर्वर्ण्यस्य चोत्पत्तिस्तिर्यग्योनिगतस्य च ॥ २ ॥
ध्रुवप्रह्लादचरितं विस्तराच्च त्वयोदितम् । मन्वंतराण्यशेषाणि श्रोतुमिच्छाम्यनुक्रमात् ॥ ३ ॥
मन्वंतराधिपांश्चैव शक्रदेवपुरोगमान् । भवता कथितानेताञ्छ्रोतुमिच्छाम्यहं गुरो ॥ ४ ॥

श्रीपराशरः—

अतीतानागतानीह यानि मन्वंतराणि वै । तान्यहं भवतः सम्यक्कथयामि यथाक्रमम् ॥ ५ ॥
स्वायंभुवो मनुः पूर्वं परः स्वारोचिषस्तथा । उत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ॥ ६ ॥
षडेते मनवोऽतीतास्सांप्रतं तु रवेस्सुतः । वैवस्वतोऽयं यस्यैतत्सप्तमं वर्त्ततेऽन्तरम् ॥ ७ ॥
स्वायंभुवं तु कथितं कल्पादावन्तरं मया । देवास्तत्रर्षयश्चैव यथावत्कथिता मया ॥ ८ ॥
अत ऊर्ध्वं प्रवक्ष्यामि मनोस्स्वारोचिषस्य तु । मन्वंतराधिपान्सम्यग्देवर्षींस्तत्सुतांस्तथा ॥ ९ ॥
पारावतास्सतुषिता देवास्स्वारोचिषेऽन्तरे । विपश्चित्तत्र देवेन्द्रो मैत्रेयासीन्महाबलः ॥ १० ॥
ऊर्जस्स्तंभस्तथा प्राणो दत्तोऽग्नी ऋषभस्तथा । निरयश्च परीवांश्च तत्र सप्तर्षयोऽभवन् ॥ ११ ॥
चैत्रकिंपुरुषाद्याश्च सुतास्स्वारोचिषस्य तु । द्वितीयमेतद्व्याख्यातमन्तरं शृणु चोत्तमम् ॥ १२ ॥
तृतीयेऽप्यन्तरे ब्रह्मन्नुत्तमो नाम यो मनुः । सुशान्तिर्नाम देवेन्द्रो मैत्रेयासीत्सुरेश्वरः ॥ १३ ॥

---

अथ तृतीयेंऽशे प्रथमोऽध्यायः ॥

उक्तः प्रथमांशे प्रजासर्गः । द्वितीये तच्छेषः प्रियव्रतवंशः, प्रसक्तः सृष्टानामावासभूतो लोकसन्निवेशः । अथ तृतीयचतुर्थयोर्वैदिकः मनुव्यासादिप्रवर्तितो धर्मः, तत्स्थापको क्षत्रवंशश्च क्रमादुच्यते । तत्रांशद्वयोक्तार्थमनूद्य मन्वन्तराणि पृच्छति- कथित इति ॥ १—४ ॥

अतीतेति ॥ अतीतानागतयोरेव वर्तमानस्यांतर्भावान्न पृथगुक्तिः । इह—वाराहे कल्पे ॥ ५—७ ॥

स्वायंभुवमिति ॥ स्वायंभुवं कथितं प्रथमांशे । तत्र हि तस्य मनोः वंश्याः प्रियव्रताद्या उक्ताः । देवाश्च यामाख्या द्वादश, इन्द्रस्तु विश्वभुगाह्वयः, * तेषामिन्द्रस्तदा ह्यासीद्विश्वभुक्प्रथमः स्मृतः, इति वायूक्तेः । ऋषयो मरीच्याद्याः ॥ ८ ॥

अत इति ॥ देवर्षीन्—मरीच्यादीन् । तत्सुतान्—मनुपुत्रान् ॥ ९—१३ ॥

सुधामानस्तथा सत्या जपाश्चाथ प्रतर्दनाः । वशवर्तिश्च पञ्चैते गणा द्वादशकास्स्मृताः ॥ १४ ॥
वसिष्ठतनया ह्येते सप्त सप्तर्षयोऽभवन् । अजः परशुदीप्ताद्यास्तथोत्तममनोस्सुताः ॥ १५ ॥
तामसस्यान्तरे देवास्सुपारा हरयस्तथा । सत्याश्च सुधियश्चैव सप्तविंशतिका गणाः ॥ १६ ॥
शिबिरिन्द्रस्तथा चासीच्छतयज्ञोपलक्षणः । सप्तर्षयश्च ये तेषां सप्त नामानि मे शृणु ॥ १७ ॥
ज्योतिर्धामा पृथुः काव्यश्चैत्रोऽग्निर्धनकस्तथा । पीवरश्चर्षयो ह्येते सप्त तत्रापि चान्तरे ॥ १८ ॥
नरः ख्यातिः केतुरूपो जानुजंघादयस्तथा । पुत्रास्तु तामसस्यासन्राजानस्सुमहाबलाः ॥ १९ ॥
पञ्चमे वापि मैत्रेय रैवतो नाम नामतः । मनुर्विभुश्च तत्रेन्द्रो देवांश्चात्रान्तरे शृणु ॥ २० ॥
अमिताभा भूतरया वैकुंठास्सुसमेधसः । एते देवगणास्तत्र चतुर्दश चतुर्दश ॥ २१ ॥
हिरण्यरोमा वेदश्रीरूर्ध्वबाहुस्तथावरः । वेदबाहुस्सुधामा च पर्जन्यश्च महामुनिः ।
एते सप्तर्षयो विप्र तत्रासन्रैवतेऽन्तरे ॥ २२ ॥
बलबंधुश्च संभाव्यस्सत्यकाद्याश्च तत्सुताः । नरेन्द्राश्च महावीर्या बभूवुर्मुनिसत्तम ॥ २३ ॥
स्वारोचिषश्चोत्तमश्च तामसो रैवतस्तथा । प्रियव्रतान्वया ह्येते चत्वारो मनवस्स्मृताः ॥ २४ ॥
विष्णुमाराध्य तपसा स राजर्षिः प्रियव्रतः । मन्वन्तराधिपानेताँल्लब्धवानात्मवंशजान् ॥ २५ ॥
षष्ठे मन्वन्तरे चासीच्चाक्षुषाख्यस्तथा मनुः । मनोजवस्तथैवेन्द्रो देवानपि निबोध मे ॥ २६ ॥
आप्याः प्रसूता भव्याश्च पृथुकाश्च दिवौकसः । महानुभावा लेखाश्च पञ्चैते ह्यष्टकागणाः ॥ २७ ॥
सुमेधा विरजाश्चैव हविष्मानुत्तमो मधुः । अतिनामा सहिष्णुश्च सप्तासन्निति चर्षयः ॥ २८ ॥
ऊरुः पूरुश्शतद्युम्नप्रमुखास्सुमहाबलाः । चाक्षुषस्य मनोः पुत्राः पृथिवीपतयोऽभवन् ॥ २९ ॥
विवस्वतस्सुतो विप्र श्राद्धदेवो महाद्युतिः । मनुस्संवर्तते धीमान् सांप्रतं सप्तमेऽन्तरे ॥ ३० ॥
आदित्यवसुरुद्राद्या देवाश्चात्र महामुने । पुरन्दरस्तथैवात्र मैत्रेय त्रिदशेश्वरः ॥ ३१ ॥
वसिष्ठः काश्यपोऽथात्रिर्जमदग्निस्सगौतमः । विश्वामित्रभरद्वाजौ सप्त सप्तर्षयोऽत्र तु ॥ ३२ ॥
इक्ष्वाकुश्च नृगश्चैव धृष्टः शर्यातिरेव च । नरिष्यन्तश्च विख्यातो नाभागोऽरिष्ट एव च ॥ ३३ ॥
करूषश्च पृषध्रश्च वसुमाँल्लोकविश्रुतः । मनोर्वैवस्वतस्यैते नव पुत्रास्सुधार्मिकाः ॥ ३४ ॥

---

सुधामान इति ॥ आद्यतृतीययोर्देवगणानां द्वादशकत्वोक्त्या द्वितीयेऽपि द्वादशकत्वं ज्ञेयम्, * द्वितीये च तृतीये च द्वादशौ द्वौ गणौ स्मृतौ, इति वायूक्तेः ॥ १४ ॥

वसिष्ठेति ॥ वसिष्ठतनया रजोगोत्राद्याः सप्तोक्ताः प्रथमांशे ॥ १५, १६ ॥

शिबिरिति ॥ शतयज्ञोपलक्षण इति ॥ शताश्वमेधकर्तृत्वेनोपलक्षितं सहस्राक्षत्ववज्रित्वादिचिह्नं सर्वेन्द्राणां समम्, * सर्वमन्वंतरेन्द्रास्ते विज्ञेयास्तुल्यलक्षणाः, इति वायूक्तेः ॥ १७—२३ ॥

स्वारोचिष इति ॥ आदिसर्गे प्रथमषष्ठमन्वोरन्वयस्योक्तत्वादिह स्वारोचिषादिचतुष्कस्यान्वयमाह—प्रियव्रतान्वया इति ॥ २४—३४ ॥

विष्णुशक्तिरनौपम्या सत्त्वोद्रिक्ता स्थितौ स्थिता। मन्वन्तरेष्वशेषेषु देवत्वेनाधितिष्ठति॥ ३५॥
अंशेन तस्या जज्ञेऽसौ यज्ञस्स्वायंभुवेऽन्तरे। आकूत्यां मानसो देव उत्पन्नः प्रथमेऽन्तरे॥ ३६॥
ततः पुनस्स वै देवः प्राप्ते स्वारोचिषेऽन्तरे। तुषितायां समुत्पन्नो ह्यजितस्तुषितैस्सह॥ ३७॥
औत्तमेऽप्यन्तरे देवस्तुषितस्तु पुनस्स वै। सत्यायामभवत्सत्यः सत्यैस्सह सुरोत्तमैः॥ ३८॥
तामसस्यान्तरे चैव संप्राप्ते पुनरेव हि। हर्यायां हरिभिस्साद्र्धं हरिरेव बभूव ह॥ ३९॥
रैवतेऽप्यन्तरे देवस्संभूत्यां मानसोऽभवत्। संभूतो रैवतैस्साद्र्धं देवैर्देववरो हरिः॥ ४०॥
चाक्षुषे चान्तरे देवो वैकुण्ठः पुरुषोत्तमः। विकुण्ठायामसौ जज्ञे वैकुंठैर्दैवतैः सह॥ ४१॥
मन्वन्तरेऽत्र संप्राप्ते तथा वैवस्वते द्विज। वामनः काश्यपाद्विष्णुरदित्यां संबभूव ह॥ ४२॥
त्रिभिः क्रमैरिमाँल्लोकाञ्जित्वा येन महात्मना। पुरंदराय त्रैलोक्यं दत्तं निहतकंटकम्॥ ४३॥
इत्येतास्तनवस्तस्य सप्त मन्वन्तरेषु वै। सप्तस्वेवाभवन्विप्र याभिः संवर्धिताः प्रजाः॥ ४४॥
यस्माद्विष्टमिदं विश्वं तस्य शक्त्या महात्मनः। तस्मात्स प्रोच्यते विष्णुर्विशेर्धातोः प्रवेशनात्॥ ४५॥

सर्वे च देवा मनवस्समस्तास्सप्तर्षयो ये मनुसूनवश्च।
इन्द्रश्च योऽयं त्रिदशेशभूतो विष्णोरशेषास्तु विभूतयस्ताः॥ ४६॥

इति श्रीविष्णुपुराणे तृतीयेंऽशे प्रथमोऽध्यायः॥ १॥

## अथ द्वितीयोऽध्यायः

मैत्रेयः—

प्रोक्तान्येतानि भवता सप्त मन्वंतराणि वै। भविष्याण्यपि विप्रर्षे ममाख्यातुं त्वमर्हसि॥ १॥

श्रीपराशरः—

सूर्यस्य पत्नी संज्ञाऽभूत्तनया विश्वकर्मणः। मनुर्यमो यमी चैव तदपत्यानि वै मुने॥ २॥

---

विष्णुशक्तिरिति॥ विष्णुशक्तिः—विष्णोरंशः। देवत्वेन मन्वादिजगद्रक्षकेण यज्ञादिदेवतारूपेणाधितिष्ठति, मन्वादीनिति शेषः॥ ३५॥

अंशेनेति॥ तस्य—विष्णोरंशेन स्वायंभुवेऽन्तरे यज्ञो जज्ञे। तस्येति पुँल्लिंगनिर्देशः पाठान्तरे। कथं जज्ञे इत्यत्राह—आकूत्यामिति॥ ३६—४५॥

विष्णुत्वमेव विवृणोति— सर्वे चेति॥ ४६॥

इति श्रीविष्णुचित्तीये विष्णुपुराणव्याख्याने तृतीयेंऽशे प्रथमोऽध्यायः॥ १॥

## अथ द्वितीयोऽध्यायः

सूर्यस्येति॥ अष्टममनोः प्रसंगाद् यमादीनां जन्मेतिहासः॥ १, २॥

असहन्ती तु सा भर्तुस्तेजश्छायां युयोज वै। भर्तृश्शुश्रूषणेऽरण्यं स्वयं च तपसे ययौ ॥ ३ ॥
संज्ञेयमित्यथार्कश्च छायायामात्मजत्रयम्। शनैश्चरं मनुं चान्यं तपतीं चाप्यजीजनत् ॥ ४ ॥
छायासंज्ञा ददौ शापं यमाय कुपिता यदा। तदाऽन्येयमसौ बुद्धिरित्यासीद्यमसूर्ययोः ॥ ५ ॥
ततो विवस्वानाख्यातां तयैवारण्यसंस्थिताम्। समाधिदृष्ट्या ददृशे तामश्वां तपसि स्थिताम् ॥ ६ ॥
वाजिरूपधरस्सोऽथ तस्यां देवावथाश्विनौ। जनयामास रेवन्तं रेतसोऽन्ते च भास्करः ॥ ७ ॥
आनिन्ये च पुनः संज्ञां स्वस्थानं भगवान्रविः। तेजसश्शमनं चास्य विश्वकर्मा चकार ह ॥ ८ ॥
भ्रममारोप्य सूर्यं तु तस्य तेजोनिशातनम्। कृतवानष्टमं भागं स व्यशातयदव्ययम् ॥ ९ ॥
यत्तस्माद्वैष्णवं तेजश्शातितं विश्वकर्मणा। जाज्वल्यमानमपतत्तद्भूमौ मुनिसत्तम ॥ १० ॥
त्वष्टैव तेजसा तेन विष्णोश्चक्रमकल्पयत्। त्रिशूलं चैव शर्वस्य शिबिकां धनदस्य च ॥ ११ ॥
शक्तिं गुहस्य देवानामन्येषां च यदायुधम्। तत्सर्वं तेजसा तेन विश्वकर्मा व्यवर्धयत् ॥ १२ ॥
छायासंज्ञासुतो योऽसौ द्वितीयः कथितो मनुः। पूर्वजस्य सवर्णोऽसौ सावर्णिस्तेन कथ्यते ॥ १३ ॥
तस्य मन्वन्तरं ह्येतत्सावर्णिकमथाष्टमम्। तच्छृणुष्व महाभाग भविष्यत्कथयामि ते ॥ १४ ॥
सावर्णिस्तु मनुर्योऽसौ मैत्रेय भविता ततः। सुतपाश्चामिताभाश्च मुख्याश्चापि तथा सुराः ॥ १५ ॥
तेषां गणाश्च देवानामेकैको विंशकः स्मृतः। सप्तर्षीनपि वक्ष्यामि भविष्यान्मुनिसत्तम ॥ १६ ॥
दीप्तिमान् गालवो रामः कृपो द्रौणिस्तथा परः। मत्पुत्रश्च तथा व्यास ऋष्यशृंगश्च सप्तमः ॥ १७ ॥
विष्णुप्रसादादनघः पातालान्तरगोचरः। विरोचनसुतस्तेषां बलिरिन्द्रो भविष्यति ॥ १८ ॥
विराजश्चोर्वरीवांश्च निर्मोकाद्यास्तथाऽपरे। सावर्णेस्तु मनोः पुत्रा भविष्यन्ति नरेश्वराः ॥ १९ ॥
नवमो दक्षसावर्णिर्भविष्यति मुने मनुः ॥ २० ॥

---

असहन्तीति ॥ छायां—प्रतिकृतिं, तद्वदत्यन्तात्मसदृशीं कांचित्स्त्रियं कृत्वा, शुश्रूषणे युयोज—न्ययुंक्त ॥ ३, ४ ॥

छायेति ॥ छायारूपा संज्ञा स्वपुत्रपक्षपातिनी कुपिताय आत्मानं पदा जिघांसते यमाय तव पादः पतत्विति यदा शापं ददौ तदा जनन्याः शापो न संभवतीति अन्येयमित्यसौ बुद्धिरासीत् ॥ ५, ६ ॥

वाजिरूपधर इति ॥ रेतसोऽन्त इति रेवन्तत्वनिरुक्तिः ॥ ७, ८ ॥

भ्रममिति ॥ भ्रमः—खड्गादीनां नैशित्यकरणं कषणशाणचक्रम् ॥ ९, १० ॥

त्वष्टैवेति ॥ शिबिकां— पुष्पकाख्याम् * विमानयोधी धनदो व्यनदत्पुष्पके स्थितः, इति हरिवंशोक्तेः। आयुधविशेषो वा ॥ ११ ॥

शक्तिमिति ॥ व्यवर्धयत्-व्यरचयत्। व्यकल्पयदिति च पाठः ॥ १२—१४ ॥

सावर्णिरिति ॥ ततः—तस्मिन्मनौ ॥ १५, १६ ॥

पारा मरीचिगर्भाश्च सुधर्माणश्च ते त्रिधा । भविष्यन्ति तथा देवा ह्येकैको द्वादशो गणः ॥ २१ ॥

तेषामिन्द्रो महावीर्यो भविष्यत्यद्भुतो द्विज ॥ २२ ॥

सवनो द्युतिमान् भव्यो वसुर्मेधातिथिस्तथा । ज्योतिष्मान् सप्तमः सत्यस्तत्रैते च महर्षयः ॥ २३ ॥

धृतकेतुर्दीप्तिकेतुः पञ्चहस्तनिरामयौ । पृथुश्रवाद्याश्च तथा दक्षसावर्णिकात्मजाः ॥ २४ ॥

दशमो ब्रह्मसावर्णिर्भविष्यति मुने मनुः । सुधामानो विशुद्धाश्च शतसंख्यास्तथा सुराः ॥ २५ ॥

तेषामिन्द्रश्च भविता शान्तिर्नाम महाबलः । सप्तर्षयो भविष्यन्ति ये तदा ताञ्छृणुष्व ह ॥ २६ ॥

हविष्मान्सुकृतस्सत्यस्तपोमूर्तिस्तथाऽपरः । नाभागोऽप्रतिमौजाश्च सत्यकेतुस्तथैव च ॥ २७ ॥

सुक्षेत्रश्चोत्तमौजाश्च भूरिषेणादयो दश । ब्रह्मसावर्णिपुत्रास्तु रक्षिष्यन्ति वसुंधराम् ॥ २८ ॥

एकादशश्च भविता धर्मसावर्णिको मनुः ॥ २९ ॥

विहंगमाः कामगमा निर्वाणा रुचयस्तथा । गणास्त्वेते तदा मुख्या देवानां च भविष्यताम् । एकैकस्त्रिंशकस्तेषां गणश्चेन्द्रश्च वै वृषा ॥ ३० ॥

निस्स्वरश्चाग्नितेजाश्च वपुष्मान्घृणिरारुणिः । हविष्माननघश्चैव भाव्याः सप्तर्षयस्तथा ॥ ३१ ॥

सर्वत्रगस्सुधर्मा च देवानीकादयस्तथा । भविष्यन्ति मनोस्तस्य तनयाः पृथिवीश्वराः ॥ ३२ ॥

रुद्रपुत्रस्तु सावर्णिर्भविता द्वादशो मनुः । ऋतुधामा च तत्रेन्द्रो भविता शृणु मे सुरान् ॥ ३३ ॥

हरिता रोहिता देवास्तथा सुमनसो द्विज । सुकर्माणस्सुरापाश्च दशकाः पंच वै गणाः ॥ ३४ ॥

तपस्वी सुतपाश्चैव तपोमूर्तिस्तपोरतिः । तपोधृतिर्द्युतिश्चान्यः सप्तमस्तु तपोधनः । सप्तर्षयस्त्विमे तस्य पुत्रानपि निबोध मे ॥ ३५ ॥

देववानुपदेवश्च देवश्रेष्ठादयस्तथा । मनोस्तस्य महावीर्या भविष्यन्ति सुता नृपाः ॥ ३६ ॥

त्रयोदशो रुचिर्नामा भविष्यति मुने मनुः ॥ ३७ ॥

सुत्रामाणस्सुकर्माणः सुधर्माणस्तथामराः । त्रयस्त्रिंशद्विभेदास्ते देवानां यत्र वै गणाः ॥ ३८ ॥

दिवस्पतिर्महावीर्यस्तेषामिन्द्रो भविष्यति ॥ ३९ ॥

निर्मोहस्तत्त्वदर्शी च निष्प्रकम्प्यो निरुत्सुकः । धृतिमानव्ययश्चान्यस्सप्तमस्सुतपा मुनिः । सप्तर्षयस्त्विमे तस्य पुत्रानपि निबोध मे ॥ ४० ॥

चित्रसेनविचित्राद्या भविष्यन्ति महीक्षितः ॥ ४१ ॥

भौमश्चतुर्दशश्चात्र मैत्रेय भविता मनुः । शुचिरिन्द्रस्सुरगणास्तत्र पञ्च शृणुष्व तान् ॥ ४२ ॥

---

* दीप्तिमानिति ॥ व्यासादीनां ब्रह्मापरोक्ष्ये सत्यपि आधिकारिककर्मक्षयावधि स्थातव्यत्वात्, पुनस्सप्तर्षित्वेऽप्यविरोधः, * यावदधिकारमवस्थितिराधिकारिकाणामिति न्यायात् ॥ १७—२७ ॥

सुक्षेत्रेति ॥ सुक्षेत्रादयो मनुपुत्राः ॥ २८—४२ ॥

चाक्षुपाश्च पवित्राश्च कनिष्ठा आजिकास्तथा। वाचावृद्धाश्च वै देवास्सप्तर्षीनपि मे शृणु ॥ ४३ ॥
अग्निबाहुश्शुचिश्शुक्रो मागधोऽग्नीध्र एव च। युक्तस्तथाजितश्चान्यो मनुपुत्रानतः शृणु ॥ ४४ ॥
ऊरुगंभीरबुद्ध्याद्या मनोस्तस्य सुता नृपाः। कथिता मुनिशार्दूल पालयिष्यन्ति ये महीम् ॥ ४५ ॥
चतुर्युगान्ते वेदानां जायते किल विप्लवः। प्रवर्तयन्ति तानेत्य भुवं सप्तर्षयो दिवः ॥ ४६ ॥
कृतेकृते स्मृतेर्विप्र प्रणेता जायते मनुः। देवा यज्ञभुजस्ते तु यावन्मन्वन्तरं तु तत् ॥ ४७ ॥
भवन्ति ये मनोः पुत्रा यावन्मन्वन्तरं तु तैः। तदन्वयोद्भवैश्चैव तावद्भूः परिपाल्यते ॥ ४८ ॥
मनुस्सप्तर्षयो देवा भूपालाश्च मनोस्सुताः। मन्वन्तरे भवन्त्येते शक्रश्चैवाधिकारिणः ॥ ४९ ॥
चतुर्दशभिरेतैस्तु गतैर्मन्वन्तरैर्द्विज। सहस्रयुगपर्यन्तः कल्पो निश्शेष उच्यते ॥ ५० ॥
तावत्प्रमाणा च निशा ततो भवति सत्तम। ब्रह्मरूपधरश्शेते शेषाहावम्बुसंप्लवे ॥ ५१ ॥
त्रैलोक्यमखिलं ग्रस्त्वा भगवानादिकृद्विभुः। स्वमायासंस्थितो विप्र सर्वभूतो जनार्दनः ॥ ५२ ॥
ततः प्रबुद्धो भगवान् यथा पूर्वं तथा पुनः। सृष्टिं करोत्यव्ययात्मा कल्पेकल्पे रजोगुणः ॥ ५३ ॥
मनवो भूभुजस्सेन्द्रा देवास्सप्तर्षयस्तथा। सात्त्विकोंशः स्थितिकरो जगतो द्विजसत्तम ॥ ५४ ॥
चतुर्युगेऽप्यसौ विष्णुः स्थितिव्यापारलक्षणः। युगव्यवस्थां कुरुते यथा मैत्रेय तच्छृणु ॥ ५५ ॥
कृते युगे परं ज्ञानं कपिलादिस्वरूपधृक्। ददाति सर्वभूतात्मा सर्वभूतहिते रतः ॥ ५६ ॥
चक्रवर्तिस्वरूपेण त्रेतायामपि स प्रभुः। दुष्टानां निग्रहं कुर्वन्परिपाति जगत्त्रयम् ॥ ५७ ॥
वेदमेकं चतुर्भेदं कृत्वा शाखाशतैर्विभुः। करोति बहुलं भूयो वेदव्यासस्वरूपधृक् ॥ ५८ ॥
वेदांस्तु द्वापरे व्यस्य कलेरन्ते पुनर्हरिः। कल्किस्वरूपी दुर्वृत्तान्मार्गे स्थापयति प्रभुः ॥ ५९ ॥
एवमेतज्जगत्सर्वं शश्वत्पाति करोति च। हन्ति चान्तेऽप्यनन्तात्मा नास्त्यस्माद्व्यतिरेकि यत् ॥ ६० ॥

---

चाक्षुषा इति ॥ चाक्षुषाद्या गणास्सप्तकाः ॥ ४३—४५ ॥

चतुर्युगान्त इति ॥ चतुर्युगान्त इत्यादिना मन्वन्तराधिकारिकृत्योक्तिः। तान् कलियुगान्ते अनध्ययनादुत्सन्नसंप्रदायान् वेदान् कृतारंभे भुव्यंशेनावतीर्य प्रवर्तयन्ति ॥ ४६ ॥

कृतेकृत इति ॥ मनुस्तु प्राचीनाः स्मृतीः स्वायंभुवदक्षादिकृताः प्रवर्तयति ॥ ४७—५० ॥

तावत्प्रमाणेति ॥ ब्रह्मरूपधरः—ब्रह्मशरीरमधिष्ठाय ॥ ५१ ॥

त्रैलोक्यमिति ॥ स्वमायासंस्थितः—* आत्ममायामयीं दिव्यां योगनिद्रां समास्थितः *; संकल्पज्ञानं वा माया ॥ ५२, ५३ ॥ मनव इति ॥ सात्विकोंऽशः—भगवतस्सात्त्विकतनुः ॥ ५४ ॥

चतुर्युगेऽपि, न केवलं मन्वन्तरे ॥ ५५—५७ ॥

वेदमिति ॥ चतुर्भेदम्—ऋगादिरूपेण शाखाशतैर्बहुलमित्यन्वयः ॥ ५८—६० ॥

भूतं भव्यं भविष्यं च सर्वभूतान्महात्मनः। तदत्रान्यत्र वा विप्र सद्भावः कथितस्तव ॥ ६१ ॥
मन्वन्तराण्यशेषाणि कथितानि मया तव। मन्वन्तराधिपाश्चैव किमन्यत्कथयामि ते ॥ ६२ ॥

इति श्रीविष्णुपुराणे तृतीयेंऽशे द्वितीयोऽध्यायः ॥ २ ॥

## अथ तृतीयोऽध्यायः

मैत्रेयः—

ज्ञातमेतन्मया त्वत्तो यथा सर्वमिदं जगत्। विष्णुर्विष्णौ विष्णुतश्च न परं विद्यते ततः ॥ १ ॥
एतत्तु श्रोतुमिच्छामि व्यस्ता वेदा महात्मना। वेदव्यासस्वरूपेण यथा तेन युगेयुगे ॥ २ ॥
यस्मिन्यस्मिन्युगे व्यासो यो य आसीन्महामुने। तंतमाचक्ष्व भगवञ्छाखाभेदांश्च मे वद ॥ ३ ॥

श्रीपराशरः—

वेदद्रुमस्य मैत्रेय शाखाभेदास्सहस्रशः। न शक्या विस्तराद्वक्तुं संक्षेपेण शृणुष्व तम् ॥ ४ ॥
द्वापरेद्वापरे विष्णुर्व्यासरूपी महामुने। वेदमेकं सुबहुधा कुरुते जगतो हितः ॥ ५ ॥
वीर्यं तेजो बलं चाल्पं मनुष्याणामवेक्ष्य च। हिताय सर्वभूतानां वेदभेदान्करोति सः ॥ ६ ॥
ययाऽसौ कुरुते तन्वा वेदमेकं पृथक् प्रभुः। वेदव्यासाभिधाना तु सा च मूर्तिर्मधुद्विषः ॥ ७ ॥
यस्मिन्मन्वन्तरे व्यासा येये स्युस्तान्निबोध मे। यथा च भेदश्शाखानां व्यासेन क्रियते मुने ॥८॥
अष्टाविंशतिकृत्वो वै वेदो व्यस्तो महर्षिभिः। वैवस्वतेऽन्तरे तस्मिन्द्वापरेषु पुनःपुनः ॥ ९ ॥
वेदव्यासा व्यतीता ये ह्यष्टाविंशति सत्तम। चतुर्धा यैः कृतो वेदो द्वापरेषु पुनःपुनः ॥ १० ॥

---

भूतमिति ॥ उपसंहरति—तदत्रेति। सर्वभूताद्भगवतो व्यतिरिक्तं नास्तीत्येष सद्भावोऽत्र प्रकरणान्तरे च कथितः ॥ ६१, ६२ ॥

इति श्रीविष्णुचित्तीये विष्णुपुराणव्याख्याने तृतीयेंऽशे द्वितीयोऽध्यायः ॥ २ ॥

## अथ तृतीयोऽध्यायः

ज्ञातमिति ॥ जगद्विष्णुरिति तदात्मकत्वमुक्तं, विष्णाविति लयस्थित्योः स्थानत्वं, विष्णुत इति कारणत्वम् ॥ १—५ ॥

वीर्यमिति ॥ वीर्यम्—उत्साहः, तेजः—तपोयोगादिजनितः प्रभावः, बलं—धारणाशक्तिः ॥ ६—९ ॥

वेदव्यासा इति ॥ व्यतीताः—निवृत्ताधिकाराः। अष्टाविंशतीत्यार्षस्सुलोपः ॥ १० ॥

द्वापरे प्रथमे व्यस्तस्स्वयं वेदस्स्वयंभुवा । द्वितीये द्वापरे चैव वेदव्यासः प्रजापतिः ॥ ११ ॥
तृतीये चोशना व्यासश्चतुर्थे च बृहस्पतिः । सविता पंचमे व्यासः षष्ठे मृत्युस्स्मृतः प्रभुः ॥ १२ ॥
सप्तमे च तथैवेन्द्रो वसिष्ठश्चाष्टमे स्मृतः । सारस्वतश्च नवमे त्रिधामा दशमे स्मृतः ॥ १३ ॥
एकादशे तु त्रिशिखो भरद्वाजस्ततः परः । त्रयोदशे चान्तरिक्षो वर्णी चापि चतुर्दशे ॥ १४ ॥
त्रय्यारुणः पंचदशे षोडशे तु धनंजयः । ऋतुंजयः सप्तदशे तदूर्ध्वं च जयस्स्मृतः ॥ १५ ॥
ततो व्यासो भरद्वाजो भरद्वाजाच्च गौतमः । गौतमादुत्तरो व्यासो हर्यात्मा योऽभिधीयते ॥ १६ ॥
अथ हर्यात्मनोऽन्ते च स्मृतो वाजश्रवा मुनिः । सोमशुष्कायणस्तस्मात्तृणबिंदुरिति स्मृतः ॥ १७ ॥
ऋक्षोऽभूद्भार्गवस्तस्माद्वाल्मीकिर्योऽभिधीयते । तस्मादस्मत्पिता शक्तिर्व्यासस्तस्मादहं मुने ॥ १८ ॥
जातुकर्णोऽभवन्मत्तः कृष्णद्वैपायनस्ततः । अष्टाविंशतिरित्येते वेदव्यासाः प्रकीर्तिताः ॥ १९ ॥
एको वेदश्चतुर्धा तु तैः कृतो द्वापरादिषु ॥ २० ॥
भविष्ये द्वापरे चापि द्रौणिर्व्यासो भविष्यति । व्यतीते मम पुत्रेऽस्मिन् कृष्णद्वैपायने मुने ॥ २१ ॥
ध्रुवमेकाक्षरं ब्रह्म ओमित्येव व्यवस्थितम् । बृहत्वाद्बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते ॥ २२ ॥
प्रणवावस्थितं नित्यं भूर्भुवस्स्वरितीर्यते । ऋग्यजुस्सामाथर्वाणो यत्तस्मै ब्रह्मणे नमः ॥ २३ ॥
जगतः प्रलयोत्पत्त्योर्यत्तत्कारणसंज्ञितम् । महतः परमं गुह्यं तस्मै सुब्रह्मणे नमः ॥ २४ ॥

---

द्वापर इति । द्वितीयो मनुर्व्यासः, * ब्रह्मा मनुमुवाचेदं वेदान्व्यस्य प्रजापते, इति वायूक्तेः ॥ ११—१५ ॥ तत इति ॥ उत्तमादिचतुष्कस्य पुराणान्तरप्रसिद्धानि हर्यात्मादिनामान्तराणि ॥ १६—१९ ॥

एक इति ॥ द्वापरादिषु—द्वापरः आदिर्येषां तानि द्वापरादीनि तेषु, द्वापरसन्ध्यंशेष्वित्यर्थः, द्वापरान्ते वेदविभागप्रसिद्धेः । * द्वापरे तु परावृत्ते मनोस्स्वायंभुवेऽन्तरे । ब्रह्मा मनुमुवाचेदं वेदान्व्यस्य प्रजापते * इति वायूक्तेः, शंतनुसमकाले द्वैपायनोत्पत्तिप्रसिद्धेश्च ॥ २०, २१ ॥

अथ वेदविभागान् वक्ष्यन् प्रथमं परतत्त्वप्राप्त्युपायतयोपास्यमिति दर्शयितुं प्रणवात्मकं शब्दब्रह्म प्रणमति—ध्रुवमिति द्वयेन ॥ ध्रुवमिति ॥ ध्रुवम्—अविनाशि, ओमित्येव व्यवस्थितं—वेदविभागेऽप्यविभक्तम् अविकृतं च, यत्प्रणवाख्यमेकाक्षरं ब्रह्म तद्बृहत्त्वबृंहणत्वाभ्यां ब्रह्मेत्यभिधीयते, * यस्मादुच्चार्यमाण एव बृहति बृंहयति तस्मादुच्यते परं ब्रह्म * इति श्रुतेः ॥ २२ ॥

बृहत्त्वबृंहणत्वे उपपादयति—प्रणवावस्थितमिति ॥ व्याहृतित्रयमृगादिचतुष्टयं च प्रणवावस्थितमीर्यत इति यावत्, तस्माच्छब्दात्मने तस्मै ब्रह्मणे नम इत्यन्वयः । प्रणवस्य कारणावस्थायामन्तर्गतव्याहृत्यादिकत्वेन बृहत्त्वम् । कार्यावस्थायां व्याहृतिवेदरूपेण परिणामात् बृंहणत्वमिति भावः ॥ २३ ॥

अथ प्रणवं कारणतया प्रधानतादात्म्येन स्तुवन् प्रणमति—जगत इत्यादिना बहुधात्मकमित्यन्तेन ॥ जगत इति ॥ प्रलयोत्पत्त्योरिति । प्रधानाद्धि जगदुत्पत्तिः, तस्मिन् लयः, तस्मात्तयोस्तत्कारणम् ॥ २४ ॥

गाधापारमक्षय्यं जगत्संमोहनालयम् । स्वप्रकाशप्रवृत्तिभ्यां पुरुषार्थप्रयोजनम् ॥ २५ ॥
ांख्यज्ञानवतां निष्ठा गतिश्शमदमात्मनाम् । यत्तदव्यक्तममृतं प्रवृत्तिर्ब्रह्म शाश्वतम् ॥ २६ ॥
धानमात्मयोनिश्च गुहासंस्थं च शब्दते । अविभागं तथा शुक्रमक्षयं बहुधात्मकम् ॥ २७ ॥
रमब्रह्मणे तस्मै नित्यमेव नमोनमः । यद्रूपं वासुदेवस्य परमात्मस्वरूपिणः ॥ २८ ॥
एतद्ब्रह्म त्रिधा भेदमभेदमपि स प्रभुः । सर्वभूतेष्वमेदोऽसौ भिद्यते भिन्नबुद्धिभिः ॥ २९ ॥
स ऋङ्मयस्साममयः सर्वात्मा स यजुर्मयः । ऋग्यजुस्साससारात्मा स एवात्मा शरीरिणाम् ॥३०॥

स भिद्यते वेदमयस्स्ववेदं करोति वेदैर्बहुभिस्सशाखम् ।
शाखाप्रणेता स समस्तशाखाज्ञानस्वरूपो भगवाननन्तः ॥ ३१ ॥

इति श्रीविष्णुपुराणे तृतीयेंऽशे तृतीयोऽध्यायः ॥ ३ ॥

---

अगाधापारमिति ॥ जगत्संमोहनालयं—पापिनां संमोहनतमोगुणालयम् । स्वप्रकाशप्रवृत्तिभ्यां—सत्त्वरजःकार्याभ्यां ज्ञानकर्मभ्यां पुरुषार्थस्य साधनम् ॥ २५ ॥

सांख्येति ॥ निष्ठा—प्रतिष्ठा । पुरुषविवेकोपायतया शमदमात्मनां योगिनां गतिः—शमादिप्राप्त्युपायः ॥ २६ ॥

प्रधानमिति ॥ आत्मनो योनिः—आत्मा-परमात्मा, तस्य योनिः—उपनिषत्स्वव्यक्ताद्यक्षरान्तैः शब्दैर्यत् बहुधात्मकं—बहुविधं शब्द्यते तस्मै प्रधानात्मने शब्दब्रह्मणे नमः । कार्यदशायां महदादिरूपेण वा बहुधात्मकम् । उत्कैर्गुणैः पूजितत्वात्सुशब्दप्रयोगः ॥ २७ ॥

अथ प्रणवं भगवद्रूपत्वेन स्तुवन् प्रणमति—परमब्रह्मण इति ॥ परमब्रह्मत्वं च वासुदेवरूपत्वात् ॥ २८ ॥

एतदिति ॥ अकाराद्यवयवरूपेण त्रिधा भिन्नम्, अवयविरूपेण च अभिन्नम् एतत्—प्रणवरूपं ब्रह्म, स प्रभुः—वासुदेवः, तद्रूपत्वात्तद्वाचकत्वाच्च । स च सर्वभूतेष्वात्मतयाऽवस्थितोऽप्यभेदः—एकः, प्रभुत्वादकलुषश्च, स्वाधिष्ठिताभिर्भिन्नाभिर्मूर्तिभिरेव भिद्यते ॥ २९ ॥

अतस्सर्वात्मत्वात्स एव ऋगादिमूर्तिरित्याह—स ऋङ्मय इति ॥ सारः—ऋगादिप्रतिपाद्यश्चतुर्विधः पुरुषार्थः, तदात्मा । शरीरिणां—क्षेत्रज्ञानाम् ॥ ३० ॥

भगवतस्सर्वात्मत्वं निगमयति—स भिद्यत इति ॥ सः—अव्यस्तवेदमयस्सन् ऋग्वेदाद्यात्मना भिद्यते । स एव शाखाप्रणेतृभूतव्यासादिर्भूत्वा वेदं सशाखं बहुभिरवांतरशाखाभेदैर्भिन्नं च करोति । समस्तशाखाश्च स एव ॥ ३१ ॥

इति विष्णुचित्तीये श्रीविष्णुपुराणव्याख्याने तृतीयांशे तृतीयोऽध्यायः ॥ ३ ॥

---

## अथ चतुर्थोऽध्यायः

श्रीपराशरः—

आद्यो वेदश्चतुष्पादः शतसाहस्रसम्मितः । ततो दशगुणः कृत्स्नो यज्ञोऽयं सर्वकामधुक् ॥ १ ॥
ततोऽत्र मत्सुतो व्यासो अष्टाविंशतिमेऽन्तरे । वेदमेकं चतुष्पादं चतुर्द्धा व्यभजत्प्रभुः ॥ २ ॥
यथा च तेन ते व्यस्ता वेदव्यासेन धीमता । वेदास्तथा समस्तैस्तैर्व्यस्ता व्यासैस्तथा मया ॥ ३ ॥
तदनेनैव वेदानां शाखाभेदान्द्विजोत्तम । चतुर्युगेषु रचितान्समस्तेष्ववधारय ॥ ४ ॥
कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् । को ह्यन्यो भुवि मैत्रेय महाभारतकृद्भवेत् ॥ ५ ॥
तेन व्यस्ता यथा वेदा मत्पुत्रेण महात्मना । द्वापरे ह्यत्र मैत्रेय तन्मे शृणु यथातथम् ॥ ६ ॥
ब्रह्मणा चोदितो व्यासो वेदान्व्यस्तुं प्रचक्रमे । अथ शिष्यान्स जग्राह चतुरो वेदपारगान् ॥ ७ ॥
ऋग्वेदपाठकं पैलं जग्राह स महामुनिः । वैशंपायननामानं यजुर्वेदस्य चाग्रहीत् ॥ ८ ॥
जैमिनिं सामवेदस्य तथैवाथर्ववेदवित् । सुमंतुस्तस्य शिष्योऽभूद्वेदव्यासस्य धीमतः ॥ ९ ॥
रोमहर्षणनामानं महाबुद्धिं महामुनिः । सूतं जग्राह शिष्यं स इतिहासपुराणयोः ॥ १० ॥
एक आसीद्यजुर्वेदस्तं चतुर्द्धा व्यकल्पयत् । चातुर्होत्रमभूत्तस्मिंस्तेन यज्ञमथाकरोत् ॥ ११ ॥

---

## अथ चतुर्थोऽध्यायः

आद्य इति ॥ आद्यः सर्गादौ चतुर्मुखेनाविभक्तः पठितः । चतुष्पादः ऋगादिरूपेण । शतसाहस्रेति अनंतशाखासमुदायरूपः । ततः—तस्माद्दशगुणो यज्ञः प्रावर्तत । दशगुणो-दशविधः, स एष यज्ञः पंचविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुबन्धः सोम इति । तथा * पंच वा एते महायज्ञाः * इत्युपक्रम्य * देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञः * इति श्रुतौ वैतानिका गार्ह्याश्च दश यज्ञाः । * द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकम् । श्रद्धाऽवस्थाकृतिर्निष्ठा त्रैगुण्यास्सर्व एव हि इति भागवतोक्तगुणदशकवान् वा, अत्र पक्षे गुणशब्दोऽङ्गवचनः ॥ १ ॥

तत इति ॥ चतुर्द्धा—ऋगादिरूपेण ॥ २ ॥ यथेति ॥ तथा मया षड्विंशे व्यस्ताः ॥ ३ ॥

तदिति ॥ अनेन वर्तमानेन नारायणांशेन द्वैपायनेन निदर्शनभूतेन समस्तेषु चतुर्युगेषु वेदपारगैरेव शाखाभेदान् रचितानवधारयेत्यर्थः ॥ ४—९ ॥

रोमहर्षणेति ॥ * आर्षं बहुविधाख्यानं देवर्षिचरिताश्रयम् ॥ इतिहास इति प्रोक्तं भविष्यद्भूतकर्मगम ॥ १० ॥

एक इति ॥ यजुर्वेदे ह्यध्वर्युक्रियाबाहुल्याद्यजनसाधनत्वाच्च यजुःप्राचुर्यात्सर्वोऽपि वेदो यजुरित्युक्तम् । * यच्छिष्टं तु यजुर्वेदे तेन यज्ञमयुञ्जत ॥ यजनाद्धि यजुर्वेद इति शास्त्रस्य निश्चयः इति वायूक्तेः ॥ अध्वर्यूद्गातृहोतृब्रह्माख्यचतुर्होतृकर्तृकं कर्म चातुर्होत्रं तच्चतुर्धा कृते वेदेऽभूत् । तेन कर्मणा यज्ञमकरोत्—प्रावर्तयत् ॥ ११ ॥

ाध्वर्यवं यजुर्भिस्तं ऋग्भिर्होत्रं तथा मुनिः । औद्गात्रं सामभिश्चक्रे ब्रह्मत्वं चाप्यथर्वभिः ॥ १२ ॥

तस्स ऋच उद्धृत्य ऋग्वेदं कृतवान्मुनिः । यजूंषि च यजुर्वेदं सामवेदं च सामभिः ॥ १३ ॥

ाज्ञां चाथर्ववेदेन सर्वकर्माणि च प्रभुः । कारयामास मैत्रेय ब्रह्मत्वं च यथास्थिति ॥ १४ ॥

ोऽयमेको महावेदतरुस्तेन पृथक्कृतः । चतुर्धाऽथ ततो जातं वेदपादपकाननम् ॥ १५ ॥

बेभेद प्रथमं विप्र पैलो ऋग्वेदपादपम् । इन्द्रप्रमितये प्रादाद्बाष्कलाय च संहिते ॥ १६ ॥

ब्रतुर्धा स बिभेदाथ बाष्कलोऽपि च संहिताम् । बोधादिभ्यो ददौ ताश्च शिष्येभ्यस्स महामुनिः ॥१७॥

ोध्याग्निमाढकौ तद्वद्याज्ञवल्क्यपराशरौ । प्रतिशाखास्तु शाखायास्तस्यास्ते जगृहुर्मुने ॥ १८ ॥

द्रप्रमितिरेकां तु संहितां स्वसुतं ततः । मांडुकेयं महात्मानं मैत्रेयाध्यापयत्तदा ॥ १९ ॥

तस्य शिष्यप्रशिष्येभ्यः पुत्रशिष्यक्रमाद्ययौ ॥ २० ॥

ेदमित्रस्तु शाकल्यः संहितां तामधीतवान् । चकार संहिताः पंच शिष्येभ्यः प्रददौ च ताः ॥ २१ ॥

तस्य शिष्यास्तु ये पंच तेषां नामानि मे शृणु । मुद्गलो गोमुखश्चैव वात्स्यश्शालीय एव च ।
शिशिरः पंचमश्चासीन्मैत्रेय सुमहामतिः ॥ २२ ॥

संहितात्रितयं चक्रे शाकपूर्णस्तथेतरः । निरुक्तमकरोत्तद्वच्चतुर्थं मुनिसत्तम ॥ २३ ॥

क्रौंचो वैतालिकस्तद्वद्बलाकश्च महामुनिः । निरुक्तश्च चतुर्थोऽभूद्वेदवेदांगपारगः ॥ २४ ॥

---

एतदेव प्रपंचयति—आध्वर्यमिति ॥ ब्रह्मत्वं चाप्यथर्वभिरिति । अत्रापिशब्देन त्रयी समुच्चीयते, ब्रह्मत्वशब्देन ब्रह्मार्त्विज्यं पुरोहितकृत्यं चोच्यते, * नमो ब्रह्मण इति त्रिष्कृत्वो ब्रह्मणे नमस्करोति * इति श्रुतेः पुरोहितस्य ब्रह्मशब्दवाच्यत्वात् । अयमर्थः, * अथ केन ब्रह्मत्वं क्रियत इति त्रय्या विद्यया * इति ब्राह्मणात् * यज्ञं व्याख्यास्यामस्स त्रिभिर्वेदैर्विधीयते * इति सूत्राच्च ब्रह्मकृत्यं त्रिभिर्वेदैश्चक्रे । तथाऽथर्वणोक्तं राज्ञां शांतिकपौष्टिकाभिचारिकादिपुरोहितकृत्यमथर्वभिश्चक्र इति तं चतुर्द्धेत्युक्तम् ॥ १२ ॥

चातुर्विध्यं प्रपंचयति—ततस्स इति ॥ ततः—वेदसमुदायात् ॥ १३ ॥

राज्ञामिति ॥ यथास्थिति—शास्त्रमर्यादानतिक्रमेण ॥ १४ ॥

सोऽयमिति ॥ ततः—पृथक्कृतेभ्यः, अनंतशाखात्मकवेदपादपकाननं जातम् ॥ १५—१७ ॥

बोध्याग्निमाढकौ तद्वदिति ॥ तस्याः—बाष्कलसंहितायाः ॥ १८—२० ॥

वेदमित्र इति ॥ ताम्—इन्द्रप्रमितिसंहितां शाकल्यः पंचधा कृत्वा मुद्गलादिभ्योऽदात् ॥ २१, २२ ॥

संहितेति ॥ तामेव शाकल्यसब्रह्मचारी शाकपूर्णस्त्रिधा कृत्वा क्रौंचादिभ्योऽदात् । वेदशब्दनिर्वचनरूपं निरुक्ताख्यं वेदांगं च कृत्वा निरुक्ताख्यायादात् ॥ २३, २४ ॥

इत्येताः प्रतिशाखाभ्यो ह्यनुशाखा द्विजोत्तम । बाष्कलिश्चापरास्तिस्रस्संहिताः कृतवान्द्विज ॥ २५ ॥
इत्येते बह्वृचाः प्रोक्ताः संहिता यैः प्रवर्त्तिताः ॥ २६ ॥
इति श्रीविष्णुपुराणे तृतीयांशे चतुर्थोऽध्यायः ॥ ४ ॥

## अथ पञ्चमोऽध्यायः

श्रीपराशरः—
यजुर्वेदतरोश्शाखास्सप्तविंशन्महामुनिः । वैशंपायननामाऽसौ व्यासशिष्यश्चकार वै ॥ १ ॥
शिष्येभ्यः प्रददौ ताश्च जगृहुस्तेऽप्यनुक्रमात् ॥ २ ॥
याज्ञवल्क्यस्तु तत्राभूद्ब्रह्मरातसुतो द्विज । शिष्यः परमधर्मज्ञो गुरुवृत्तिपरस्सदा ॥ ३ ॥
ऋषिर्योऽद्य महामेरोः समाजे नागमिष्यति । तस्य वै सप्तरात्रात्तु ब्रह्महत्या भविष्यति ॥ ४ ॥
पूर्वमेवं मुनिगणैस्समयो यः कृतो द्विज । वैशंपायन एकस्तु तं व्यतिक्रान्तवांस्तदा ॥ ५ ॥
स्वस्रीयं बालकं सोऽथ पदा स्पृष्टमताडयत् ॥ ६ ॥
शिष्यानाह च भोः शिष्या ब्रह्महत्यापहं व्रतम् । चरध्वं मत्कृते सर्वे न विचार्यमिदं तथा ॥ ७ ॥
अथाह याज्ञवल्क्यस्तु किमेभिर्भगवन् द्विजैः । क्लेशितैरल्पतेजोभिश्चरिष्येऽहमिदं व्रतम् ॥ ८ ॥
ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामुनिम् । मुच्यतां यत्त्वयाऽधीतं मत्तो विप्रावमानक ॥ ९ ॥
निस्तेजसो वदस्येनान्यत्त्वं ब्राह्मणपुंगवान् । तेन शिष्येण नार्थोऽस्ति ममाज्ञाभंगकारिणा ॥ १० ॥
याज्ञवल्क्यस्ततः प्राह भक्त्यैतत्ते मयोदितम् । ममाप्यलं त्वयाऽधीतं यन्मया तदिदं द्विज ॥ ११ ॥
श्रीपराशरः—
इत्युक्त्वा रुधिराक्तानि सरूपाणि यजूंषि सः । छर्दयित्वा ददौ तस्मै ययौ च स्वेच्छया मुनिः ॥१२॥

---

इतीति ॥ तामेवान्यश्शाकल्यसब्रह्मचारी बाष्कलिस्तिस्रस्संहिताः कृतवान् । तस्य शिष्याः कालायन्यादयस्तेभ्योऽदादित्यर्थः ॥ २५, २६ ॥

इति श्रीविष्णुचित्तीये विष्णुपुराणव्याख्याने तृतीयांशे चतुर्थोऽध्यायः ॥ ४ ॥

## अथ पञ्चमोऽध्यायः

यजुर्वेदतरोरिति ॥ सप्तविंशतिं यजुषः प्रधानशाखाः । ब्रह्मांडोक्तः षडशीतिपक्षः तत्प्रतिशाखाविवक्षया। ताश्च काण्वादिशुक्लयजु पंचदशकं च संहत्यैकशतमध्वर्युशाखाः आपस्तंबोक्तास्स्युः ॥ १—३ ॥

ऋषिरिति ॥ अद्य—अस्मिन् दिने ॥ ॥ ४—६ ॥

यद्गुरुणा कार्यं तत्तस्य पुत्रशिष्यादिभिरपि कार्यमिति भावेनाह—शिष्यानिति ॥ ७—१० ॥

याज्ञवल्क्य इति । ममापि त्वया अलं—नार्थोऽस्तीत्यर्थः ॥ ११ ॥ इत्युक्त्वेति ॥ इत्युक्त्वा, सरूपाणि—मूर्तानि ॥ १२ ॥

यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विज । जगृहुस्तित्तिरा भूत्वा तैत्तिरीयास्तु ते ततः ॥ १३ ॥

ब्रह्महत्याव्रतं चीर्णं गुरुणा चोदितैस्तु यैः । चकुराध्वर्यवं ते तु चरणान्मुनिसत्तम ॥ १४ ॥

याज्ञवल्क्योऽपि मैत्रेय प्राणायामपरायणः । तुष्टाव प्रणतस्सूर्यं यजूंष्यभिलषंस्ततः ॥ १५ ॥

याज्ञवल्क्यः—

नमस्सवित्रे द्वाराय मुक्तेरमिततेजसे । ऋग्यजुस्सामभूताय त्रयीधाम्ने च ते नमः ॥ १६ ॥

नमोऽग्नीषोमभूताय जगतः कारणात्मने । भास्कराय परं तेजस्सौषुम्नरुचि बिभ्रते ॥ १७ ॥

कलाकाष्ठानिमेषादिकालसंज्ञात्मने नमः । ध्येयाय विष्णुरूपाय परमाक्षररूपिणे ॥ १८ ॥

बिभर्ति यस्सुरगणानाप्यायेन्दुं स्वरश्मिभिः । स्वधामृतेन च पितॄंस्तस्मै धृत्यात्मने नमः ॥ १९ ॥

हिमांबुघर्मवृष्टीनां कर्ता भर्ता च यः प्रभुः । तस्मै त्रिकालरूपाय नमस्सूर्याय वेधसे ॥ २० ॥

अपहन्ति तमो यश्च जगतोऽस्य जगत्पतिः । सत्त्वधामधरो देवो नमस्तस्मै विवस्वते ॥ २१ ॥

सत्कर्मयोग्यो न जनो नैवापः शुद्धिकारणम् । यस्मिन्ननुदिते तस्मै नमो देवाय भास्वते ॥ २२ ॥

स्पृष्टो यदंशुभिर्लोकः क्रियायोग्योऽभिजायते । पवित्रकारणात्माय तस्मै शुद्धात्मने नमः ॥ २३ ॥

नमस्सवित्रे सूर्याय भास्कराय विवस्वते । आदित्यायादिभूताय देवादीनां नमो नमः ॥ २४ ॥

---

यजूंषीति ॥ याज्ञवल्क्यव्यतिरिक्तशिष्याश्छर्दितं विप्ररूपेण गृहीतुमनुचितमिति तित्तिरीभूता जगृहुः ॥ १३ ॥

ब्रह्महत्येति ॥ चीर्णम्—चरितम् ॥ अध्वर्यवः—यजुश्शाखाध्यायिनः । यजुश्शाखाध्ययनादध्वर्युत्वम् ॥ १४ ॥ याज्ञवल्क्य इति ॥ यजूंषि वैशंपायनादधीतानि ॥ १५, १६ ॥

नम इति ॥ अग्नीषोमात्मत्वमातपवृष्टिहेतुत्वात् । कारणात्मने * याभिरादित्यस्तपति रश्मिभिः * इति प्रक्रियया । सौषुम्नं-सोमपोषकममृतम् ॥ १७ ॥

कलेति ॥ कालसंज्ञात्मने—कालस्य संज्ञापनाय । कालज्ञानात्मन इति च पाठः । परमाक्षरं-प्रणवः, * ओमिति प्रस्तुत्य * एतत्परममक्षरम् * इति श्रुतेः ॥ १८ ॥

बिभर्तीति ॥ धृत्यात्मने—धारयित्रे ॥ तृप्त्यात्मन इति च पाठः ॥ १९—२२ ॥

स्पृष्ट इति ॥ पवित्रकरणात्मने इति पाठः । पवित्रकारणात्मायेति पाठे अदन्तत्वमार्षम् ॥ २३ ॥

नम इति ॥ सविता—प्रेरकः । षू प्रेरण इति धातोस्सवितेति रूपनिष्पत्तिः । सूर्यो जनकः । * सूयते रा इति निरुक्तिः । विवस्वान्—तमसो विनाशकः ॥ २४ ॥

हिरण्मयं रथं यस्य केतवोऽमृतवाजिनः। वहन्ति भूतानालोकचक्षुषं तं नमाम्यहम्॥ २५॥

श्रीपराशरः—

इत्येवमादिभिस्तेन स्तूयमानस्य वै रविः। वाजिरूपधरः प्राह व्रीयतामिति वाञ्छितम्॥ २६॥

याज्ञवल्क्यस्तदा प्राह प्रणिपत्य दिवाकरम्। यजूंषि तानि मे देहि यानि सन्ति न मे गुरौ॥ २७॥

श्रीपराशरः—

एवमुक्तो ददौ तस्मै यजूंषि भगवा न्रविः। अयातयामसंज्ञानि यानि वेत्ति न तद्गुरुः॥ २८॥

यजूंषि यैरधीतानि तानि विप्रैर्द्विजोत्तम। वाजिनस्ते समाख्याताः सूर्योऽश्वस्सोऽभवद्यतः॥ २९॥

शाखाभेदास्तु तेषां वै दश पंच च वाजिनाम्। कण्वाद्यास्सुमहाभाग याज्ञवल्क्याः प्रकीर्तिताः॥

इति श्रीविष्णुपुराणे तृतीयेंऽशे पंचमोऽध्यायः॥ ५॥

---

## अथ षष्ठोऽध्यायः

श्रीपराशरः—

सामवेदतरोश्शाखा व्यासशिष्यस्स जैमिनिः। क्रमेण येन मैत्रेय बिभेद शृणु तं मम॥ १॥

सुमंतुस्तस्य पुत्रोऽभूत्सुत्वा तस्याप्यभूत्सुतः। अधीतवन्तौ चैकैकां संहितां तौ महामती॥ २॥

सहस्रसंहिताभेदं सुकर्मा तत्सुतस्ततः। चकार तं च तच्छिष्यौ जगृहाते महाव्रतौ॥ ३॥

हिरण्यनाभः कौसल्यः पौष्पिंजिश्च द्विजोत्तम। उदीच्यास्सामगाः शिष्यास्तस्य पंचशतं स्मृताः॥

हिरण्यनाभाच्चावत्यस्संहिता यैर्द्विजोत्तमैः। गृहीतास्तेऽपि चोच्यन्ते पण्डितैः प्राच्यसामगाः॥ ५॥

लोकाक्षिः कौमुदिश्चैव कक्षीवाँल्लांगलिस्तथा। पौष्पिंजिशिष्यास्तद्भेदैस्संहिता बहुलीकृताः॥ ६॥

---

हिरण्मयमिति॥ हिरण्मयम्—अतिहितरमणीयतेजोमयम्। केतवः—प्रज्ञानरूपाः। अमृताः—नित्याः॥ २५—३०॥

इति श्रीविष्णुचित्तीये विष्णुपुराणव्याख्याने तृतीयांशे पंचमोऽध्यायः॥ ५॥

---

## अथ षष्ठोऽध्यायः

सुमंतुरिति॥ तां जैमिनिसंहितां तत्पुत्रपौत्रावेकैकावयौगपद्येन स्वस्वपितुरधीतवन्तौ॥ २॥

सहस्रेति॥ एवं सुत्वनः पुत्रः सुकर्माऽपि स्वपितुरधीत्य सहस्रसंहिताभेदं चकार * पुत्रमध्यापयामास सुमंतुमथ जैमिनिः। सुमंतुश्चापि सुत्वानं पुत्रमध्यापयन्मुनिः॥ सुकर्माणं सुतं सुत्वा * इति वायूक्तेः॥३॥

हिरण्यनाभ इति॥ तस्य—पौष्पिंजेर्वक्ष्यमाणा लोकाक्ष्याद्याः पंचशतं शिष्याः उदीच्यास्सामगाः स्मृताः॥ ४—५॥ लोकाक्षिरिति॥ तद्भेदैः—पौष्पिंजिशिष्यभेदैः, बहुलीकृताः—व्यापिताः॥ ६॥

हिरण्यनाभशिष्यस्तु चतुर्विंशति संहिताः । प्रोवाच कृतनामासौ शिष्येभ्यश्च महामुनिः ॥ ७ ॥
तैश्चापि सामवेदोऽसौ शाखाभिर्बहुलीकृतः । अथर्वणामथो वक्ष्ये संहितानां समुच्चयम् ।
अथर्ववेदं स मुनिस्सुमंतुरमितद्युतिः ॥ ८ ॥
शिष्यमध्यापयामास कबंधं सोऽपि तं द्विधा । कृत्वा तु देवदर्शाय तथा पथ्याय दत्तवान् ॥ ९ ॥
देवदर्शस्य शिष्यास्तु मेधो ब्रह्मबलिस्तथा । शौल्कायनिः पिप्पलादस्तथाऽन्यो द्विजसत्तम ॥ १० ॥
पथ्यस्यापि त्रयश्शिष्याः कृता यैर्द्विज संहिताः । जाबालिः कुमुदादिश्च तृतीयश्शौनको द्विज ॥११॥
शौनकस्तु द्विधा कृत्वा ददावेकां तु बभ्रवे । द्वितीयां संहितां प्रादात्सैंधवाय च संज्ञिने ॥ १२ ॥
सैंधवान्मुंजिकेशश्च द्वेधाभिन्नास्त्रिधा पुनः । नक्षत्रकल्पो वेदानां संहितानां तथैव च ॥ १३ ॥
चतुर्थस्स्यादांगिरसश्शांतिकल्पश्च पंचमः । श्रेष्ठास्त्वथर्वणामेते संहितानां विकल्पकाः ॥ १४ ॥
आख्यानैश्चाप्युपाख्यानैर्गाथाभिः कल्पशुद्धिभिः । पुराणसंहितां चक्रे पुराणार्थविशारदः ॥ १५ ॥
प्रख्यातो व्यासशिष्योऽभूत्सुतो वै रोमहर्षणः । पुराणसंहितां तस्मै ददौ व्यासो महामतिः ॥ १६ ॥
सुमतिश्चाग्निवर्चाश्च मित्रायुश्शांसपायनः । अकृतव्रणोऽथ सावर्णिष्षट्शिष्यास्तस्य चाभवन् ॥ १७ ॥

---

हिरण्यनाभ इति ॥ कृतनामा राजा प्राच्यसामगेष्वन्यतमः ॥ ७ ॥ सुमंतुर्व्यासशिष्यः ॥ ८, ९ ॥

देवदर्शस्येति ॥ अथर्ववेदे देवदर्शसंहिताश्चतस्रो मेधाद्यैर्गृहीताः ॥ १०–१२ ॥

सैंधवादिति ॥ मुंजिकेशसंहितयोश्शिष्या अन्येऽष्टौ ययोर्भेदेषु सुबहूपयोगाः पंच भेदाः नक्षत्रकल्पाद्याः । कल्पशब्दो वेदादिभिः प्रत्येकं संबध्यते । तथा वायुः—* नक्षत्रकल्पो वैतानस्संहितानां तथा विधिः । चतुर्थोऽगिरसां कल्पश्शांतिकल्पश्च पंचमः ॥ श्रेष्ठास्त्वथर्वणामेते संहितानां विकल्पकाः ॥ इति । नक्षत्रकल्पो ज्योतिषामंशः । वैतानकल्पो वेदकल्पो ब्रह्मत्वादियज्ञविधिः । संहिताकल्पो मंत्रभागविधिः ॥ १३ ॥

चतुर्थ इति ॥ आंगिरसः कल्पोऽभिचारविधिः । शांतिकल्पोऽष्टादशमहाशांत्यादिविधिः ॥ १४ ॥

आख्यानैरिति ॥ आख्यानैः—भारतादीतिहासैः, उपाख्यानैः—तत्प्रसक्तैः ऋभुनिदाघकथाद्यैः । गाथाः पितृपृथ्वीगीताद्याः । कल्पशुद्धिः—वाराहादिकल्पवृत्तांतनिर्णयः । पितृकल्पमंत्रकल्पविधिर्वा । एतैस्सह सर्गादिपंचलक्षणां पुराणसंहिताम्–अष्टादशपुराणानां संक्षेपरूपां व्यासश्चक्रे । यथोक्तं मात्स्ये—* पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणं स्मृतम् । अनंतरं तु वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥ पुराणमेकमेवासीच्छतकोटिप्रविस्तरम् * इति । धर्मसंहितायां च * ब्राह्ममेव कृते चाद्यं पुराणं श्रुतिसंमितम् । अष्टादशविधं तच्च शतकोटिप्रभेदतः ॥ तस्मात् त्रेतायुगे प्रोक्तं शतमेकादशोत्तरम् । पुराणसंहिताकर्ता द्वापरे व्यास एव हि ॥ इति । पुनर्मात्स्ये च * तदर्थोऽत्र चतुर्लक्षैस्संक्षेपेण निवेशितः । पुराणानि दशाष्टौ च सांप्रतं तदिहोच्यते ॥ इति । अयमर्थः–कृतयुगे वेदात्पूर्वं ब्रह्मणा सृष्टस्य शतकोटिप्रविस्तरस्य पुराणस्कंधस्य ब्राह्मसंज्ञस्य पुनस्त्रेतायां ब्रह्माद्यष्टादशर्षिभिः ग्रंथकोट्या संक्षिप्य ब्राह्माद्यष्टादशात्मना विभक्तस्यैकादशाधिकशतसंहितस्य पुनर्द्वापरांते तस्य सारं वेदव्यासः चतुर्लक्षेण संक्षिप्याष्टादशपुराणसंहितां कृत्वा रोमहर्षणं सूतमध्यापयदिति ॥ १५, १६ ॥

सुमतिरिति ॥ सुमतिरित्यादि । तस्य—रोमहर्षणस्य ॥ १७ ॥

काश्यपस्संहिताकर्ता सावर्णिश्शांसपायनः । रोमहर्षणिका चान्या तिसृणां मूलसंहिता ॥ १८ ॥
चतुष्टयेन भेदेन संहितानामिदं मुने ॥ १९ ॥
आद्यं सर्वपुराणानां पुराणं ब्राह्ममुच्यते । अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते ॥ २० ॥
ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा । तथाऽन्यं नारदीयं च मार्कंडेयं च सप्तमम् ॥ २१ ॥
आग्नेयमष्टमं चैव भविष्यन्नवमं स्मृतम् । दशमं ब्रह्मवैवर्त्तं लैंगमेकादशं स्मृतम् ॥ २२ ॥

---

काश्यप इति ॥ काश्यपः—अकृतव्रणः, * काश्यपो ह्यकृतव्रणः * इति वायूक्तेः । तिसृणां काश्यपादिकृतानां संहितानां चतुर्थी रोमहर्षणिकाख्यया व्यासेन संक्षिप्ता । रोमहर्षणेनाधीता स्वशिष्येभ्यः प्रतिपादिता । रोमहर्षणिना उग्रश्रवसाऽपि शौनकादिभ्यः ख्यापिता । तथा च मात्स्ये—* चतुर्लक्षमिदं प्रोक्तं व्यासेनाद्भुतकर्मणा । मत्पित्रे मम पित्रा तु मया तुभ्यं निवेदितम् ॥ इति । एवं त मूलास्सर्वाः पुराणसंहिताः कलौ चतुर्विधाः, * सर्वास्ता हि चतुष्पादाः सर्वास्ताश्चार्थवादिकाः । पाठांतरपृथग्भूता वेदशाखा यथा तथा ॥ इति वायूक्तेः । कौर्मे तु स्वस्य स्वेनैव चतुर्भेदत्वमुक्तम्, * इदं तु पंचदशमं पुराणं कौर्ममुत्तमम् । चतुर्द्धा संस्थितं पुण्यं संहितानां प्रभेदतः ॥ इति ॥ १८ ॥

चतुष्टयेनेति ॥ पुराणसंहितानामेतेन चतुष्टयेन मूलभूतेन तदर्थं स्मृत्वा पुरुषभेदकालभेदानुगुण्येन मया इदं—वैष्णवं पुराणं कृतमित्यर्थः । एतत्संहिताचतुष्टयमूलत्वं सर्वपुराणानां साधारणम् ॥ १९ ॥

ब्राह्मं पुराणं प्रशंसति—आद्यमिति । आद्यं—मूलभूतम् । पुराणसंख्यामाह—अष्टादशेति ॥ २० ॥

तान्येवानुक्रामति—ब्राह्ममिति ॥ पुराणानां सर्वेषां चतुर्भेदत्वमुक्तम् । वैष्णवं तु षड्भेदम् । तेन पुराणान्तरेषु वैष्णवस्य दशसहस्राष्टसहस्रत्वाद्युक्तिस्संहिताभेदमानविषया कल्प्या । यथा लैंगे * पुराणं वैष्णवं चक्रे प्रसादाद्वै पराशरः । षट्प्रकारं समस्तार्थसूचकं ज्ञानसंचयम् ॥ दशसाहस्रसंमितं सर्ववेदार्थसंयुतम् ॥ * शैवमात्स्ययोस्तु—* वैष्णवं चाष्टसाहस्रमिति ; क्वचिद्देशे नवसहस्रमुच्यते, क्वचिच्चतुर्विंशतिसहस्रं क्वचित् द्वाविंशतिसहस्रम् । इदं तु षट्सहस्रमस्माभिर्व्याख्यायमानम् । सर्गादिपंचकं पुराणानां सामान्यलक्षणम् । वैशेषिकं तु मात्स्योक्तम् । यथा—* ब्रह्मणाऽभिहितं पूर्वं यावन्मात्रं मरीचये । ब्राह्मं तद्दशसाहस्रं पुराणं परिकीर्त्यते ॥ एतदेव च वै ब्राह्मं पाद्मकल्पे जगद्धितम् । पाद्मं तत्पंचपंचाशत्सहस्राणि निगद्यते ॥ वाराहकल्पवृत्तान्तमधिकृत्य पराशरः । यान्प्राह धर्मानखिलान् तद्युक्तं वैष्णवं विदुः ॥ विष्णवाख्यमष्टसाहस्रं तत्पुराणं विदुर्बुधाः । श्वेतकल्पे प्रसंगेन धर्मान् वायुरिहाब्रवीत् ॥ यत्र तद्वायवीयं स्याद्रुद्रमाहात्म्यसंयुतम् । चतुर्विंशत्सहस्राणि पुराणं शैवमुच्यते ॥ यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः । वृत्रासुरवधो यत्र तद्भागवतमुच्यते ॥ सारस्वतस्य मुनयो यच्छुश्रुवुर्नरामराः । अष्टादशसहस्राणि तद्भागवतमुच्यते ॥ यत्राह नारदो धर्मान् बृहत्कल्पाश्रयानि ह । पंचविंशत्सहस्राणि नारदीयं तदुच्यते ॥ यत्राधिकृत्य शकुनिं धर्माधर्मविचारणा ॥ तद्द्वात्रिंशत्सहस्रं वै मार्कंडेयमिहोच्यते ॥ २१ ॥

आग्नेयमिति ॥ * शापावसाने भृगुणा ऋषिणा यत्प्रकाशितम् । चयनानां समुत्पत्तिरिष्टकागणनं तथा ॥ क्रतुसंख्यादितः कृत्वा ह्याग्नेयं तदिहोच्यते । आग्नेयं चाष्टसाहस्रं सर्वक्रतुफलप्रदम् ॥ शतानीकेन पृष्टेन व्यासशिष्येण धीमता । सौरा धर्मा विशेषेण व्याख्यातास्तु सुमंतुना ॥ एकत्रिंशत्सहस्राणि भविष्याख्यं सुभाषितम् । यत्र वै वैष्णवा धर्मा वसिष्ठेन महात्मना ॥ अंबरीषस्य वै प्रोक्तास्सर्गो ब्राह्मस्तथैव च ॥ पुराणं ब्रह्मवैवर्तं तद्द्वादशसहस्रकम् ॥ यत्तदीशानकल्पस्य वृत्तान्तमधिकृत्य च । नंदिना लैंगमित्युक्तमेकादशसहस्रकम् ॥ २२ ॥

वाराहं द्वादशं चैव स्कान्दं चात्र त्रयोदशम् । चतुर्दशं वामनं च कौर्मं पंचदशं तथा ।
मात्स्यं च गारुडं चैव ब्रह्माण्डं च ततः परम् । [महापुराणान्येतानि ह्यष्टादश महामुने ॥ २३ ॥
तथा चोपपुराणानि मुनिभिः कथितानि च ।] सर्गश्च प्रतिसर्गश्च वंशमन्वन्तराणि च ।
सर्वेष्वेतेषु कथ्यन्ते वंशानुचरितं च यत् ॥ २४ ॥
यदेतत्तव मैत्रेय पुराणं कथ्यते मया । एतद्वैष्णवसंज्ञं वै पाद्मस्य समनन्तरम् ॥ २५ ॥
सर्गे च प्रतिसर्गे च वंशमन्वंतरादिषु । कथ्यते भगवान्विष्णुरशेषेष्वेव सत्तम ॥ २६ ॥
अंगानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ २७ ॥
आयुर्वेदो धनुर्वेदो गांधर्वश्चैव ते त्रयः । अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव ताः ॥ २८ ॥
ज्ञेया ब्रह्मर्षयः पूर्वं तेभ्यो देवर्षयः पुनः । राजर्षयः पुनस्तेभ्यो ऋषिप्रकृतयस्त्रयः ॥ २९ ॥
इति शाखास्समाख्याताश्शाखाभेदास्तथैव च । कर्तारश्चैव शाखानां भेदहेतुस्तवोदितः ॥ ३० ॥

---

वाराहमिति ॥ * महावराहस्य पुनर्माहात्म्यमधिकृत्य च । विष्णुनाऽभिहितं क्षोण्यास्तद्वाराहमिहोच्यते । मानवस्य प्रसङ्गेन कल्पस्य मुनिसत्तमाः । चतुर्विंशत्सहस्राणि तत्पुराणमिहोच्यते ॥ यत्र माहेश्वरान् धर्मानधिकृत्य च षण्मुखः । कल्पे तत्पुरुषे रुद्रचरितैरुपबृंहितम् ॥ स्कांदं नाम पुराणं तत्सहस्रशतसम्मितम् । त्रिविक्रमस्य माहात्म्यमधिकृत्य चतुर्मुखः ॥ त्रिवर्गं च त्रिदैवत्यं वामनं परिकीर्त्यते ॥ चतुर्दशसहस्राणि श्वेतकल्पानुगं शिवम् ॥ यत्र धर्मार्थकामानां मोक्षस्य च रसातले । माहात्म्यं कथयामास कूर्मरूपी जनार्दनः ॥ इन्द्रद्युम्नप्रसंगेन ऋषिभ्यश्शक्रसन्निधौ । कौर्मं तत् षट्सहस्राणि (लक्ष्मी) अग्निकल्पानुषंगिकम् ॥ श्रुतीनां यत्र कल्पादौ प्रवृत्त्यर्थं जनार्दनः । मत्स्यरूपी च मनवे नरसिंहोपवर्णनम् । अधिकृत्याब्रवीत्सप्तकल्पवृत्तं सहव्रतम् । तन्मात्स्यमिति जानीध्वं सहस्राणि चतुर्दश ॥ यथा च गारुडे कल्पे विश्वांडं गरुडोद्भवम् । अधिकृत्याब्रवीद्विष्णुर्गारुडं तदिहोच्यते ॥ तत् षोडशसहस्राणि नृपते त्विह पठ्यते । ब्रह्मा ब्रह्मांडमाहात्म्य मधिकृत्याब्रवीत्पुनः ॥ तच्च द्वादशसाहस्रं ब्रह्मांडं द्विशताधिकम् । भविष्याणां च कल्पानां श्रूयते यत्र विस्तरः ॥ तद्ब्रह्माण्डं पुराणं तु ब्रह्मणा समुदाहृतम् ॥ इत्यादि ॥ २३—२५ ॥

सर्गे चेति ॥ अशेषेषु पुराणेषु सर्गप्रतिसर्गादिषु कर्तृत्वेन भगवान् विष्णुः कथ्यते, सर्गादेस्तत्कर्तृकत्वात् * यतो वा इमानि भूतानि * इत्यादिश्रुतेः । * विष्णुर्ब्रह्मा शिवो विष्णुर्विष्णुरादित्य एव च । सर्वं विष्णुमयं ब्रह्मन्निति पौराणिकं वचः ॥ एवमेव पुराणेषु दशस्वष्टसु नान्यथा । अन्यथा ये प्रपद्यन्ते नारकास्ते भवन्ति वै ॥ इत्यादित्यपुराणम् ॥ २६ ॥

पुराणानां वेदोपबृंहकत्वेन धर्मवेदनहेतुत्वाद्धर्मविद्यास्थानेषु अन्तर्भावं दर्शयति—अंगानीति ॥ इतिहासस्य पुराणेऽन्तर्भावः, * इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् * इति वचनात् ॥ २७ ॥

आयुरिति ॥ आयुर्वेदादिचतुष्कस्य दृष्टप्राधान्यात्केवलविद्यास्थानत्वात् न धर्मस्थानत्वमिति तस्य पृथगुक्तिः । * आयुर्वेदो वैद्यशास्त्रं गांधर्वो गीतशासनम् । अर्थशास्त्रं दण्डनीतिर्धनुर्वेदोऽस्त्रशासनम् ॥ चत्वार उपवेदास्ते * इति वैजयन्ती ॥ २८ ॥

वेदप्रसंगात्तद्दर्शिन ऋषयो वंशभेदात् त्रिधोक्ताः ज्ञेया इत्यादिना ॥ ऋषिप्रकृतयः-ऋषिस्वभावाः ॥ २९ ॥

इतीति ॥ भेदहेतुः मनुष्याणां बलाद्यल्पत्वम् ॥ ३० ॥

सर्वमन्वन्तरेष्वेवं शाखाभेदास्समाः स्मृताः ॥ ३१ ॥
प्राजापत्या श्रुतिर्नित्या तद्विकल्पास्त्विमे द्विज ॥ ३२ ॥
एतत्ते कथितं सर्वं यत्पृष्टोऽहमिह त्वया । मैत्रेय वेदसंबन्धं किमन्यत्कथयामि ते ॥ ३३ ॥

इति श्रीविष्णुपुराणे तृतीयेंऽशे षष्ठोऽध्यायः ॥ ६ ॥

---

## अथ सप्तमोऽध्यायः

मैत्रेयः—
यथावत्कथितं सर्वं यत्पृष्टोऽसि मया गुरो । श्रोतुमिच्छाम्यहं त्वेकं तद्भवान्प्रब्रवीतु मे ॥ १ ॥
सप्त द्वीपानि पातालवीथयश्च महामुने । सप्तलोकाश्च येऽन्तस्था ब्रह्माण्डस्यास्य सर्वतः ॥ २ ॥
स्थूलैस्सूक्ष्मैस्तथा सूक्ष्मसूक्ष्मैस्सूक्ष्मतरै स्तथा । स्थूलात्स्थूलतरैश्चैव सर्वं प्राणिभिरावृतम् ॥ ३ ॥
अंगुलस्याष्टभागोऽपि न सोऽस्ति मुनिसत्तम । न सन्ति प्राणिनो यत्र कर्मबंधनिबंधनाः ॥ ४ ॥
सर्वे चैते वशं यान्ति यमस्य भगवन् किल । आयुषोऽन्ते तथा यान्ति यातनास्तत्प्रचोदिताः ॥ ५ ॥
यातनाभ्यः परिभ्रष्टा देवाद्यास्वथ योनिषु । जन्तवः परिवर्त्तन्ते शास्त्राणामेष निर्णयः ॥ ६ ॥
सोऽहमिच्छामि तच्छ्रोतुं यमस्य वशवर्तिनः । न भवन्ति नरा येन तत्कर्म कथयस्व मे ॥ ७ ॥
श्रीपराशरः—
अयमेव मुने प्रश्नो नकुलेन महात्मना । पृष्टः पितामहः प्राह भीष्मो यत्तच्छृणुष्व मे ॥ ८ ॥
भीष्म :—
पुरा ममागतो वत्स सखा कालिंगको द्विजः । स मामुवाच पृष्टो वै मया जातिस्मरो मुनिः ॥ ९ ॥

---

सर्वमन्वन्तरेष्विति ॥ प्राजापत्या—ब्रह्मदृष्टा ; तद्विकल्पाः—तस्या विभागभूताः इमे अधीयमानाः शाखा-भेदाः अनित्या इव प्रतिद्वापरं किंचिद्भिन्नपाठतया शाखांतरत्वं नीताः सन्तः समन्तात् नित्या एव तथातथा दृश्यन्ते ॥ ३१—३३ ॥

इति श्रीविष्णुचित्तीये विष्णुपुराणव्याख्याने तृतीयेंऽशे षष्ठोऽध्यायः ॥ ६ ॥

---

## अथ सप्तमोऽध्यायः

अथ श्रुत्याद्युक्तो धर्मो भगवदाराधनतयाऽनुष्ठितो निःश्रेयसायेत्येतदर्थं यमभटसंवादं प्रस्तौति—यथावदिति ॥ १—७ ॥

अयमिति ॥ अयमेव प्रश्नो नकुलेन भीष्मं प्रति पृष्टः ; अतस्स नकुलायाहेत्यन्वयः ॥ ८ ॥

स कालिंगको मुनिस्त्वया पृष्टमिममर्थं मया पृष्टो मां प्रत्युवाचेत्याह—पुरेति ॥ ९ ॥

तेनाख्यातमिदं सर्वमित्थं चैतद्भविष्यति । तथा च तदभूद्वत्स यथोक्तं तेन धीमता ॥ १० ॥

स पृष्टश्च मया भूयः श्रद्दधानेन वै द्विजः । यद्यदाह न तद्दृष्टमन्यथा हि मया क्वचित् ॥ ११ ॥

एकदा तु मया पृष्टमेतद्यद्भवतोदितम् । प्राह कालिंगको विप्रस्स्मृत्वा तस्य मुनेर्वचः ॥ १२ ॥

जातिस्मरेण कथितो रहस्यः परमो मम । यमकिंकरयोर्योऽभूत्संवादस्तं ब्रवीमि ते ॥ १३ ॥

स्वपुरुष मभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले ।
परिहर मधुसूदनप्रपन्नान्प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ १४ ॥

अहममर(गणा)वरार्चितेन धात्रा यम इति लोकहिताहिते नियुक्तः ।
हरिगुरुवशगोऽस्मि न स्वतंत्रः प्रभवति संयमने ममापि विष्णुः ॥ १५ ॥

कटकमकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम् ।
सुरपशुमनुजादिकल्पनाभिर्हरिरखिलाभिरुदीर्यते तथैकः ॥ १६ ॥

क्षितितलपरमाणवोऽनिलान्ते पुनरपि यान्ति यथैकतां धरित्र्या ।
सुरपशुमनुजादयस्तथान्ते गुणकलुषेण सनातनेन तेन ॥ १७ ॥

---

स्वस्य तं प्रत्यस्यार्थस्य प्रश्नकारणं तस्य सत्यवादित्वमित्याह—तेनेति॥ इदमित्थम्, इदानीं स देशान्तरे वर्तते, एतच्चेत्थं भविष्यति, इति व्यवहितं विप्रकृष्टं च तेन यथाऽऽख्यातं तत्तथाऽभूत् ॥ १०, ११ ॥

एवं तस्य प्रत्ययितत्वेन त्वया पृष्टमेतदर्थरूपं मया पृष्टः प्रत्युवाचेत्याह—एकदेति ॥ किं प्रत्युवाचेत्यपेक्षायामाह—स्मृत्वेति ॥ १२ ॥

जातिस्मरेणेति ॥ तेन जातिस्मरेण यो यमकिंकरसंवादः कथितोऽभूत्तं संवादं तस्य मुनेर्वचस्स्मृत्वा ते ब्रवीमीत्यन्वयः ॥ १३ ॥

स्वपुरुषमिति ॥ स्वपुरुषमित्यादि कालिंगवचनम् । परिहरेत्यादि यमवचनम् । प्रभुभिः स्वप्रभावभंगस्थानं न प्रकाश्यमिति नीत्या विष्णुनामसूच्चैरुच्चारितेषु नारकिणोऽपि तच्छ्रवणादिना नरकान्मुच्येरन् तेन स्वाधिकारहानिरिति भीत्या च कर्णमूले कथनम्, 'राजदारान्मागाः' इति वचनवद्रहसि कथनीयत्वाच्च । यमस्य वैष्णवेष्वप्रभुत्वे प्रमाणम्—* द्रवन्ति दैत्याः प्रणमन्ति देवाः * प्रभवो भगवद्भक्ता मादृशानाम्" इत्यादि ॥ १४ ॥

अत्र हेतुमाह—अहमिति ॥ धात्रा—ईश्वरेण, हिताहिते—हितप्रवर्तने अहितनिवर्तने च ॥ १५ ॥

विष्णुत्वविवरणमुखेनाखिलैश्वर्यमेव दर्शयाते—कटकेति ॥ अभेदं—भेदरहितं, तादात्म्यवत् । यथा—कारणभूतं कनकं कार्यभूतकटकादितादात्म्येऽपि एकमिष्यते । एवं कारणभूतो हरिः कार्यभूतसुरपशुमनुजादिभेदैः भिन्नोऽपि तदात्मभूत एक उदीर्यते । कारणत्वेन सर्वत्रैकस्यैव व्याप्य स्थितत्वात् स एवेश्वर इत्यर्थः ॥१६॥

अथ तस्य संहर्तृत्वमाह—क्षितितलेति ॥ अनिलान्ते—उत्थापकानिलावसाने, कलुषं—कालुष्यम्, ईश्वरसंकल्पकृतगुणवैषम्येणोत्थापितास्सुरादयस्तस्य गुणकालुष्यस्य नाशे तमःशरीरेण तेन सनातनेनैकतां यान्ति ॥१७॥

हरिममर(गणा)वरार्चितांघ्रिपद्मं प्रणमति यः परमार्थतो हि मर्त्यः ।
तमपगतसमस्तपापबंधं व्रज परिहृत्य यथाग्निमाज्यसिक्तम् ॥ १८ ॥
इति यमवचनं निशम्य पाशी यमपुरुषस्तमुवाच धर्मराजम् ।
कथय मम विभो समस्तधातुर्भवति हरेः खलु यादृशोऽस्य भक्तः ॥ १९ ॥

यमः— न चलति निजवर्णधर्मतो यस्सममतिरात्मसुहृद्विपक्षपक्षे ।
न हरति न च हन्ति किंचिदुच्चैः स्थितमनसं तमवेहि विष्णुभक्तम् ॥ २० ॥
कलिकलुषमलेन यस्य नात्मा विमलमतेर्मलिनीकृतस्तमेनम् ।
मनसि कृतजनार्दनं मनुष्यं सततमवेहि हरेरतीव भक्तम् ॥ २१ ॥
कनकमपि रहस्यवेक्ष्य बुद्ध्या तृणमिव यस्समवैति वै परस्वम् ।
भवति च भगवत्यनन्यचेताः पुरुषवरं तमवेहि विष्णुभक्तम् ॥ २२ ॥
स्फटिकगिरिशिलामलः क्व विष्णुर्मनसि नृणां क्व च मत्सरादिदोषः ।
न हि तुहिनमयूखरश्मिपुंजे भवति हुताशनदीप्तिजः प्रतापः ॥ २३ ॥
विमलमतिरमत्सरः प्रशान्तश्शुचिचरितोऽखिलसत्त्वमित्रभूतः ।
प्रियहितवचनोऽस्तमानमायो वसति सदा हृदि तस्य वासुदेवः ॥ २४ ॥
वसति हृदि सनातने च तस्मिन्भवति पुमाञ्जगतोऽस्य सौम्यरूपः ।
क्षितिरसमतिरम्यमात्मनोऽन्तः कथयति चारुतयैव सालपोतः ॥ २५ ॥
यमनियमविधूतकल्मषाणामनुदिनमच्युतसक्तमानसानाम् ।
अपगतमदमानमत्सराणां व्रज भट दूरतरेण मानवानाम् ॥ २६ ॥
हृदि यदि भगवाननादिरास्ते हरिरसिशंखगदाधरोऽव्ययात्मा ।
तदघमघविघातकर्तृभिन्नं भवति कथं सति चान्धकारमर्के ॥ २७ ॥

---

हरिमिति ॥ परमार्थतः—निरुपाधिकम् । अग्निदृष्टान्तो भक्तसंसर्गिणामपि परिहारार्थः ॥ १८—२० ॥

कलिकलुषेति ॥ कलिकलुषं—कलिकालुष्यं रागद्वेषादि, तदेव मलम् ॥ २१, २२ ॥

स्फटिकेति ॥ सकलदोषप्रतिभटे कल्याणगुणात्मके भगवति मनसि स्थिते नृणां मत्सरादिदोषो न भवतीत्यर्थः । न हीत्यादि । वसतीति शेषः ॥ २३ ॥

विमलमतिरिति ॥ यस्य हृदि वासुदेवः स निरस्तनिखिलदोषः कल्याणगुणयुक्तश्च भवतीत्यर्थः । मानः—गर्वः, माया—शाठ्यम् ॥ २४ ॥

भगवद्ध्यानपरो भक्तश्चाक्षुषेण सौम्यत्वादिगुणेन ज्ञातुं शक्य इत्याह—वसतीति ॥ सौम्यरूपः— * स्तब्धोऽस्युत तमादेशमप्राक्ष्यः, * ब्रह्मविद इव सौम्य ते मुखं भाति * इत्यादिवत् । बालसालतरुरात्मनश्चारुतयैव क्षितेरन्तस्थमतिरम्यं रसं सारं सूचयति ॥ २५, २६ ॥

हृदीति ॥ तदघं—ध्यातुः पापम् अघविघातकर्त्रा भगवता भिन्नं—विदीर्णं भवति । अर्के सत्यपि कथमंधकारम् ? ॥ २७ ॥

हरति परधनं निहन्ति जन्तून्वदति तथाऽनृतनिष्ठुराणि यश्च ।
अशुभजनितदुर्मदस्य पुंसः कलुषमतेर्हृदि तस्य नास्त्यनन्तः ॥ २८ ॥
न सहति परसंपदं विनिन्दां कलुषमतिः कुरुते सतामसाधुः ।
न यजति न ददाति यश्च सन्तं मनसि न तस्य जनार्दनोऽधमस्य ॥ २९ ॥
परमसुहृदि बांधवे कलत्रे सुततनयापितृमातृभृत्यवर्गे ।
शठमतिरुपयाति योऽर्थतृष्णां तमधमचेष्टमवेहि नास्य भक्तम् ॥ ३० ॥
अशुभमतिरसत्प्रवृत्तिसक्तस्सततमनार्यकुशीलसंगमत्तः ।
अनुदिनकृतपापबंधयुक्तः पुरुषपशुर्न हि वासुदेवभक्तः ॥ ३१ ॥
सकलमिदमहं च वासुदेवः परमपुमान्परमेश्वरस्स एकः ।
इति मतिरचला भवत्यनन्ते हृदयगते व्रज तान्विहाय दूरात् ॥ ३२ ॥
कमलनयन वासुदेव विष्णो धरणिधराच्युत शंखचक्रपाणे ।
भव शरणमितीरयन्ति ये वै त्यज भट दूरतरेण तानपापान् ॥ ३३ ॥
वसति मनसि यस्य सोऽव्ययात्मा पुरुषवरस्य न तस्य दृष्टिपाते ।
तव गतिरथ वा ममास्ति चक्रप्रतिहतवीर्यबलस्य सोऽन्यलोक्यः ॥ ३४ ॥

कालिङ्गः—इति निजभटशासनाय देवो रवितनयस्स किलाह धर्मराजः ।
मम कथितमिदं च तेन तुभ्यं कुरुवर सम्यगिदं मयाऽपि चोक्तम् ॥ ३५ ॥

भीष्मः—

नकुलैतन्ममाख्यातं पूर्वं तेन द्विजन्मना । कलिङ्गदेशादभ्येत्य प्रीतेन सुमहात्मना ॥ ३६ ॥
मयाऽप्येतद्यथान्यायं सम्यग्वत्स तवोदितम् । यथा विष्णुमृते नान्यत्त्राणं संसारसागरे ॥ ३७ ॥

---

परहिंसादिना दोषेणाभक्तस्य हृदि भगवदसन्निधिर्ज्ञातुं शक्य इत्याह—हरतीत्यादिचतुर्भिः॥ हरतीति॥ निष्ठुराणि—परुषाणि ॥ २८ ॥

नेति ॥ न यजति सन्तं—विष्णुं नार्चयति, न ददाति तद्भक्ताय ॥ २९ ॥

परमेति ॥ अवेहि नास्य भक्तमिति भक्तपदेन नञः संबन्धः । अभक्तमवेहीत्यर्थः ॥ ३० ॥

अशुभमतिरिति ॥ अनार्यम्—अमंगलं, कुशीलं—दुःशीलं, संगो विषयसंगः ; तैर्मत्तः पुरुषपशुः—अविवेकी । अनार्यकुशीलसंगमत्त इति पाठः ॥ ३१ ॥ भक्तस्य लक्षणान्तरमाह—सकलमिति ॥ ३२ ॥

कमलनयनेति ॥ ईरयन्तीति वचनादर्थज्ञानमन्तरेणापि नामोच्चारणमात्रमेव पापहरमिति सूचितम् । ईरणं श्रवणादेरप्युपलक्षणम् ॥ ३३ ॥

वसतीति ॥ यस्य मनसि हरिर्वसति तस्य यावद्दृष्टिपातं चक्रं परिभ्रमति, अतस्तद्दृष्टिपाते तत्प्रतिहतवीर्यबलस्य तव मम वा गतिर्नास्ति । स त्वन्यलोक्यः—अन्यलोकार्हः, न त्वस्मल्लोकार्हः, * न खलु भागवता यमविषयं गच्छन्तीति वचनात् ॥ ३४ ॥ इतीति ॥ तेन—यमभटेन ॥ ३५—३७ ॥

किंकराः पाशदंडाश्च न यमो न च यातनाः। समर्थास्तस्य यस्यात्मा केशवालम्बनस्सदा ॥ ३८ ॥

श्रीपराशरः—

एतन्मुने समाख्यातं गीतं वैवस्वतेन यत्। त्वत्प्रश्नानुगतं सम्यक्किमन्यच्छ्रोतुमिच्छसि ॥ ३९ ॥

इति श्रीविष्णुपुराणे तृतीयेंऽशे सप्तमोऽध्यायः ॥ ७ ॥

---

## अथ अष्टमोऽध्यायः

मैत्रेयः—

भगवन्भगवान्देवः संसारविजिगीषुभिः। समाख्याहि जगन्नाथो विष्णुराराध्यते यथा ॥ १ ॥

आराधिताच्च गोविंदादाराधनपरैर्नरैः। यत्प्राप्यते फलं श्रोतुं तच्चेच्छामि महामुने ॥ २ ॥

श्रीपराशरः—

यत्पृच्छति भवानेतत्सगरेण महात्मना। और्वः प्राह यथा पृष्टस्तन्मे निगदतश्शृणु ॥ ३ ॥

सगरः प्रणिपत्यैनमौर्वं पप्रच्छ भार्गवम्। विष्णोराराधनोपायसंबन्धं मुनिसत्तम ॥ ४ ॥

फलं चाराधिते विष्णौ यत्पुंसामभिजायते। स चाह पृष्टो यत्तेन तस्मै तन्मेऽखिलं शृणु ॥ ५ ॥

और्वः—

भौमं मनोरथं स्वर्गं स्वर्गिवन्द्यं च यत्पदम्। प्राप्नोत्याराधिते विष्णौ निर्वाणमपि चोत्तमम् ॥ ६ ॥

यद्यदिच्छति यावच्च फलमाराधितेऽच्युते। तत्तदाप्नोति राजेन्द्र भूरि स्वल्पमथापि वा ॥ ७ ॥

यत्तु पृच्छसि भूपाल कथमाराध्यते हरिः। तदहं सकलं तुभ्यं कथयामि निबोध मे ॥ ८ ॥

---

किंकरा इति ॥ यस्यात्मा केशवालंबन इत्यात्मनिवेदनोक्तिः। * श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥ इति भक्तेर्नवविधत्वोक्तेः। एवमुक्तश्रवणादिनवविधान्तरंगा वक्ष्यमाणसदाचारोपलक्षणा भगवदेकचित्ततास्वरूपलक्षणा भगवति निरुपाधिकप्रीतिरूपा भक्तिरेव यमवश्यत्वनिवारिकेत्यध्यायार्थः। अथवा अस्मिन् अध्याये जातिस्मरो नाम कश्चिन्मुनिः, तदुक्तिमूला कालिंगोक्तिः भीष्मेण नकुलायोच्यते। तत्रेयं योजना—पुरा ममेत्यादि मामुवाचेत्यन्तं भीष्मवचनम्। पृष्टो वै मयेत्यारभ्य अन्यथा हि मया कचिदित्यन्तं कालिंगवाक्यं, तत्र वत्सेति भीष्मस्य संबोधनम्। द्विजो जातिस्मरः। एकादा त्विति श्लोको भीष्मवाक्यम्। जातिस्मरेण कथित इत्यादि मयापि चोक्तमित्यन्तं कालिंगवाक्यम्। मम कथितमिदं च तेनेत्यत्र तच्छब्देन जातिस्मरस्य परामर्शः ॥ ३८, ३९ ॥

इति श्रीविष्णुचित्तीये विष्णुपुराणव्याख्याने तृतीयांशे सप्तमोऽध्यायः ॥ ७ ॥

---

## अथ अष्टमोऽध्यायः

पूर्वं भगवदाज्ञारूपश्रुतिस्मृत्युक्तवर्णाश्रमधर्मानुष्ठानं भक्तिलक्षणमुक्तम्। इदानीं तदेव चतुर्वर्गसाधनमित्युच्यते भगवन्नित्यध्यायनवकेन ॥ १—८ ॥

वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पंथा नान्यस्तत्तोषकारकः ॥ ९ ॥
यजन्यज्ञान्यजत्येनं जपत्येनं जपन्नृप । निघ्नन्न्यान्हिनस्त्येनं सर्वभूतो यतो हरिः ॥ १० ॥
तस्मात्सदाचारवता पुरुषेण जनार्दनः । आराध्यते स्ववर्णोक्तधर्मानुष्ठानकारिणा ॥ ११ ॥
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्च पृथिवीपते । स्वधर्मतत्परो विष्णुमाराधयति नान्यथा ॥ १२ ॥
परापवादं पैशुन्यमनृतं च न भाषते । अन्योद्वेगकरं वाऽपि तोष्यते तेन केशवः ॥ १३ ॥
परदारपरद्रव्यपरहिंसासु यो रतिम् । न करोति पुमान्भूप तोष्यते तेन केशवः ॥ १४ ॥
न ताडयति नो हन्ति प्राणिनो नासदीहते । यो मनुष्यो मनुष्येन्द्र तोष्यते तेन केशवः ॥ १५ ॥
देवद्विजगुरूणां यः शुश्रूषासु सदोद्यतः । तोष्यते तेन गोविन्दः पुरुषेण नरेश्वर ॥ १६ ॥
यथात्मनि च पुत्रे च सर्वभूतेषु यस्तथा । हितकामो हरिस्तेन सर्वदा तोष्यते सुखम् ॥ १७ ॥
यस्य रागादिदोषेण न दुष्टं नृप मानसम् । विशुद्धचेतसा विष्णुस्तोष्यते तेन सर्वदा ॥ १८ ॥
वर्णाश्रमेषु ये धर्माश्शास्त्रोक्ता नृपसत्तम । तेषु तिष्ठन्नरो विष्णुमाराधयति नान्यथा ॥ १९ ॥
सगरः—तदहं श्रोतुमिच्छामि वर्णधर्मानशेषतः । तथैवाश्रमधर्मांश्च द्विजवर्य ब्रवीहि तान् ॥ २० ॥
 और्वः—
ब्राह्मणक्षत्रियविशां शूद्राणां च यथाक्रमम् । त्वमेकाग्रमतिर्भूत्वा शृणु धर्मान्मयोदितान् ॥ २१ ॥
दानं दद्याद्यजेद्देवान्यज्ञैः स्वाध्यायतत्परः । नित्योदकी भवेद्विप्रः कुर्याच्चाग्निपरिग्रहम् ॥ २२ ॥
वृत्त्यर्थं याजयेच्चान्यानन्यानध्यापयेत्तथा । कुर्यात्प्रतिग्रहादानं शुक्लार्थान्न्यायतो द्विजः ॥ २३ ॥
सर्वभूतहितं कुर्यान्नाहितं कस्य चिद्द्विजः । मैत्री समस्तभूतेषु ब्राह्मणस्योत्तमं धनम् ॥ २४ ॥

---

वर्णाश्रमेति ॥ आचारवतेत्यत्राचारग्रहणं यज्ञादेः कर्मणोऽप्युपलक्षणम् ॥ ९ ॥

ननु वर्णाश्रमधर्मो यदि देवताविषयः कथमस्य भगवदाराधनत्वमित्यत्राह—यजन्निति ॥ सर्वभूतः—सर्वात्मभूतः * ये यजन्ति पितॄन् देवान् ब्राह्मणान् सहुताशनान् । सर्वभूतान्तरात्मानं विष्णुमेव यजंति ते ॥ इति स्मृतेः । * येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ इति, * गावो हि द्विजमुख्याश्च * इत्यादि च ॥ १०—१८ ॥

वर्णाश्रमेष्विति ॥ तेषु तिष्ठन्—ताननुतिष्ठन् ॥ १९–२१ ॥

दानमिति ॥ नित्योदकी–(नित्योदक) स्नानतर्पणादिकृत् । अग्निपरिग्रहं-स्मार्तस्यौपासनाग्नेः, श्रौताग्नित्रयस्य च परिग्रहम् ॥ २२ ॥

वृत्त्यर्थमिति ॥ प्रतिग्रहः—प्रतिग्राह्यो गवादि ॥ शुक्लार्थात्—न्यायार्जितशुक्लधनात् । विप्रादेस्स्ववृत्त्युपात्तं विशेषामेव शुक्लम् । * क्रमागतं प्रीतिदायं प्राप्तं च सह भार्यया । अविशेषेण सर्वेषां धनं शुक्लमुदाहृतम् ॥ इति विष्णुः । * श्रुतशौर्यतपःकन्यायाज्यशिष्यान्वयागतम् । धनं सप्तविधं शुक्लम् * इति नारदः । न्यायतः—कालकृषदानादिनिषिद्धप्रतिग्रहादिवृत्तिं विना । आपदि, शुद्धाद्राजादेर्ग्राह्यम् * राजांतेवासियाज्येभ्यः सीदन्निच्छेद्धनं क्षुधा * इति ॥ * न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः * इति स्मृतेश्च ॥ २३, २४ ॥

ग्राव्णि रत्ने च पारक्ये समबुद्धिर्भवेद्द्विजः । ऋतावभिगमः पत्न्यां शस्यते चास्य पार्थिव ॥ २५ ॥
दानानि दद्यादिच्छातो द्विजेभ्यः क्षत्रियोऽपि हि । यजेच्च विविधैर्यज्ञैरधीयीत च पार्थिव ॥ २६ ॥
शस्त्राजीवो महीरक्षा प्रवरा तस्य जीविका । तत्रापि प्रथमः कल्पः पृथिवीपरिपालनम् ॥ २७ ॥
धरित्रीपालनेनैव कृतकृत्या नराधिपाः । भवन्ति नृपतेरंशा यतो यज्ञादिकर्मणाम् ॥ २८ ॥
मि/ दुष्टानां शासनाद्राजा शिष्टानां परिपालनात् । प्राप्नोत्यभिमताँल्लोकान्वर्णसंस्थां करोति यः ॥२९॥
पाशुपाल्यं च वाणिज्यं कृषिं च मनुजेश्वर । वैश्याय जीविकां ब्रह्मा ददौ लोकपितामहः ॥ ३० ॥
तस्याप्यध्ययनं यज्ञो दानं धर्मश्च शस्यते । नित्यनैमित्तिकादीनामनुष्ठानं च कर्मणाम् ॥ ३१ ॥
द्विजातिसंश्रितं कर्म तादर्थ्यं तेन पोषणम् । क्रयविक्रयजैर्वापि धनैः कारूद्भवेन वा ॥ ३२ ॥
शूद्रस्य सन्नतिश्शौचं सेवा स्वामिन्यमायया । अमंत्रयज्ञो ह्यस्तेयं तत्संगो विप्ररक्षणम् ॥ ३३ ॥
दानं च दद्याच्छूद्रोऽपि पाकयज्ञैर्यजेत च । पित्र्यादिकं च तत्सर्वं शूद्रः कुर्वीत तेन वै ॥ ३४ ॥
भृत्यादिभरणार्थाय सर्वेषां च परिग्रहः । ऋतुकालेऽभिगमनं स्वदारेषु महीपते ॥ ३५ ॥
दया समस्तभूतेषु तितिक्षा नातिमानिता । सत्यं शौचमनायासो मंगलं प्रियवादिता ॥ ३६ ॥
मैत्र्यस्पृहा तथा तद्वदकार्पण्यं नरेश्वर । अनसूया च सामान्या वर्णानां कथिता गुणाः ॥ ३७ ॥

---

ग्राव्णीति ॥ ऋतावभिगमः—चतुर्थीप्रभृत्याषोडशमित्यादि । * षोडशर्तुर्निशाः स्त्रीणां तस्मिन्युग्मासु संविशेत् । ब्रह्मचार्येव पर्वाद्याश्चतस्रस्तु विवर्जयेत् ॥ इति च ॥ २५, २६ ॥

शस्त्राजीव इति ॥ तत्रापि—वृत्तिद्वयेऽपि, पृथिवीपालनं प्रथमः कल्पः—मुख्यत्वेन प्रवृत्त इति शेषः॥२७॥

धरित्रीति ॥ अंशाः—षष्ठतुरीयार्धत्रिपादाख्याः । तत्र राज्ञां देशस्थितेः कृतस्य षष्ठांशस्स्यात् । अहं त्वां रक्षामीत्यभयप्रदाने पादः । तद्रक्षार्थमन्नदानेऽर्धम् । सत्कुल्यान्नदाने त्रिपादम् । * धर्मषष्ठांशभागी स्यात्प्रजा धर्मेण पालयन् * इति भारते । * यथा चतुर्थं धर्मस्य रक्षिता लभते फलम् । पापस्यापि तथा मूढो भागं प्राप्नोत्यरक्षिता ॥ रक्षिष्यामीति चोक्तं ते न च शक्नोषि रक्षितुम् ॥ इति हरिवंशे अर्जुनं प्रति ब्राह्मणवचनम् ॥ * यस्यान्नपानपुष्टांगः कुरुते धर्मसंचयम् ॥ अन्नप्रदातुस्तस्यार्धं कर्तुश्चार्धं न संशयः ॥ इति, * अन्नदातुस्त्रयः पादाः कर्ता पादेन लिप्यते * इति च वचनान्तरम् ॥ २८—३१ ॥

द्विजातीति ॥ शूद्रस्य कर्म द्विजातिसंश्रितं तच्छुश्रूषारूपं, तादर्थ्यं—तच्छेषत्वं च, तेन तद्द्विजशुश्रूषा-दिजन्यधनेनात्मपोषणं मुख्यम् । आपदि तु वाणिज्येन कारूद्भवेन—तक्षादिकारुवृत्त्योत्पन्नधनेन वा, * शूद्रस्य द्विजशुश्रूषा तयाऽजीवन् वणिग्भवेत् * इत्यादिस्मृतेः ॥ ३२ ॥

दानमिति ॥ पाकयज्ञैः-अल्पयज्ञैः * पाकोऽल्पेऽपि शिशावपि * इति वैजयंती । वैश्वदेवाद्यैः नमस्कारैकमन्त्रैः लौकिकानां पाकयज्ञशब्द इत्यापस्तंबः । * नमस्कारेण मंत्रेण पंचयज्ञान्न हापयेत् * इति याज्ञवल्क्यः ॥ ३३ ॥

भृत्यादीति ॥ परिग्रहः—अन्यैरस्वीकृतानां तृणकाष्ठादीनां स्वीकारः, स तु सर्वेषां वर्णानां साधारणः ॥ ३४—३७ ॥

आश्रमाणां च सर्वेषामेते सामान्यलक्षणाः । गुणांस्तथापद्धर्मांश्च विप्रादीनामिमाञ्छृणु ॥ ३८ ॥
क्षात्रं कर्म द्विजस्योक्तं वैश्यकर्म तथाऽऽपदि । राजन्यस्य च वैश्योक्तं शूद्रकर्म न चैतयोः ॥ ३९ ॥
सामर्थ्ये सति तत्त्याज्यमुभाभ्यामपि पार्थिव । तदेवापदि कर्तव्यं न कुर्यात्कर्मसंकरम् ॥ ४० ॥
इत्येते कथिता राजन्वर्णधर्मा मया तव । धर्मानाश्रमिणां सम्यग्ब्रुवतो मे निशामय ॥ ४१ ॥

इति श्रीविष्णुपुराणे तृतीयांशेऽष्टमोऽध्यायः ॥ ८ ॥

## अथ नवमोऽध्यायः

और्व उवाच :—

बालः कृतोपनयनो वेदाहरणतत्परः । गुरुगेहे वसेद्भूप ब्रह्मचारी समाहितः ॥ १ ॥
शौचाचारवता तत्र कार्यं शुश्रूषणं गुरोः । व्रतानि चरता ग्राह्यो वेदश्च कृतबुद्धिना ॥ २ ॥
उभे संध्ये रविं भूप तथैवाग्निं समाहितः । उपतिष्ठेत्तथा कुर्याद्गुरोरप्यभिवादनम् ॥ ३ ॥
स्थिते तिष्ठेद्व्रजेद्याते नीचैरासीत चासति । शिष्यो गुरोर्नृपश्रेष्ठ प्रतिकूलं न संचरेत् ॥ ४ ॥
तेनैवोक्तः पठेद्वेदं नान्यचित्तः पुरःस्थितः । अनुज्ञातश्च भिक्षान्नमश्नीयाद्गुरुणा ततः ॥ ५ ॥
अवगाहेदपः पूर्वमाचार्येणावगाहिताः । समिज्जलादिकं चास्य काल्यं काल्यमुपानयेत् ॥ ६ ॥
गृहीतग्राह्यवेदश्च ततोऽनुज्ञामवाप्य च । गार्हस्थ्यमाविशेत्प्राज्ञो निष्पन्नगुरुनिष्कृतिः ॥ ७ ॥

---

आश्रमाणामिति ॥ सर्वेषां वर्णानां साधारणाः ॥ ३८ ॥

क्षात्रमिति ॥ आपदि तु ब्राह्मणस्य क्षात्रं कर्मोक्तम् । राजन्यस्य वैश्यं कर्म । शूद्रकर्म वैश्योक्तं—वैश्यस्योक्तम् । एतयोः—ब्राह्मणराजन्ययोः न चोक्तम् ॥ ३९ ॥

सामर्थ्य इति ॥ उभाभ्यां—ब्राह्मणराजन्याभ्यां, सामर्थ्ये सति—शक्तौ सत्यां, तत्—आपत्कर्म, त्याज्यम् । शक्तस्य अनुकल्पाश्रयः, अशक्तस्य मुख्यकल्पनिर्बन्धश्च कर्मसंकरः, व्यत्ययो व्यतिकरो वा ॥ ४०, ४१ ॥

इति श्रीविष्णुचित्तीये विष्णुपुराणव्याख्याने तृतीयांशे अष्टमोऽध्यायः ॥ ८ ॥

## अथ नवमोऽध्यायः

१ ॥ शौचाचारवतेति ॥ व्रतानि—प्राजापत्यादीनि मधुमांसादिवर्जनादीनि च । कृतबुद्धिना—अवहितबुद्धिना ॥ २—३ ॥ स्थित इति ॥ आसति—आसीने गुरौ ॥ ४, ५ ॥ अवगाहेदिति ॥ काल्यं—प्रातः ॥ ६ ॥

गृहीतेति ॥ गृहीतग्राह्यवेदः—अर्थज्ञानपर्यन्तं गृहीतस्वशाखः, * स्वाध्यायोऽध्येतव्यः * इति, * स्थाणुरयं भारवहः किलाभूत् अधीत्य वेदं न विजानाति योऽर्थम्, योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा * इति श्रुतेः । गुरोर्निष्कृतिरत्र दक्षिणा ॥ ७ ॥

विधिनाऽवाप्तदारस्तु धनं प्राप्य स्वकर्मणा । गृहस्थकार्यमखिलं कुर्याद्भूपाल शक्तितः ॥ ८ ॥
निवापेन पितॄनर्चन्यज्ञैर्देवांस्तथाऽतिथीन् । अन्नैर्मुनींश्च स्वाध्यायैरपत्येन प्रजापतिम् ॥ ९ ॥
भूतानि बलिभिश्चैव वात्सल्येनाखिलं जगत् । प्राप्नोति लोकान्पुरुषो निजकर्मसमार्जितान् ॥ १० ॥
भिक्षाभुजश्च ये केचित्परिव्राड्ब्रह्मचारिणः । तेऽप्यत्रैव प्रतिष्ठन्ते गार्हस्थ्यं तेन वै परम् ॥ ११ ॥
वेदाहरणकार्याय तीर्थस्नानाय च प्रभो । अटन्ति वसुधां विप्राः पृथिवीदर्शनाय च ॥ १२ ॥
अनिकेता ह्यनाहारा यत्रसायंगृहाश्च ये । तेषां गृहस्थः सर्वेषां प्रतिष्ठा योनिरेव च ॥ १३ ॥
तेषां स्वागतदानादि वक्तव्यं मधुरं नृप । गृहागतानां दद्याच्च शयनासनभोजनम् ॥ १४ ॥
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते । स दत्त्वा दुष्कृतं तस्मै पुण्यमादाय गच्छति ॥ १५ ॥
अवज्ञानमहंकारो दंभश्चैव गृहे सतः । परितापोपघातौ च पारुष्यं च न शस्यते ॥ १६ ॥
यस्तु सम्यक्करोत्येवं गृहस्थः परमं विधिम् । सर्वबंधविमुक्तोऽसौ लोकानाप्नोत्यनुत्तमान् ॥ १७ ॥
वयःपरिणतौ राजन्कृतकृत्यो गृहाश्रमी । पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत्सहैव वा ॥ १८ ॥
पर्णमूलफलाहारः केशश्मश्रुजटाधरः । भूमिशायी भवेत्तत्र मुनिस्सर्वार्थनिस्स्पृहः ॥ १९ ॥
चर्मकाशकुशैः कुर्यात्परिधानोत्तरीयके । तद्वत्त्रिषवणं स्नानं शस्तमस्य नरेश्वर ॥ २० ॥
देवताभ्यर्चनं होमस्सर्वाभ्यागतपूजनम् । भिक्षाबलिप्रदानं च शस्तमस्य नरेश्वर ॥ २१ ॥
वन्यस्नेहेन गात्राणामभ्यंगश्चास्य शस्यते । तपश्च तस्य राजेन्द्र शीतोष्णादिसहिष्णुता ॥ २२ ॥
यस्त्वेतां नियतश्चर्यां वानप्रस्थश्चरेन्मुनिः । स दहत्यग्निवद्दोषाञ्जयेल्लोकांश्च शाश्वतान् ॥ २३ ॥
चतुर्थश्चाश्रमो भिक्षोः प्रोच्यते यो मनीषिभिः । तस्य स्वरूपं गदतो मम श्रोतुं नृपार्हसि ॥ २४ ॥
पुत्रद्रव्यकलत्रेषु त्यक्तस्नेहो नराधिप । चतुर्थमाश्रमस्थानं गच्छेन्निर्धूतमत्सरः ॥ २५ ॥

---

विधिनेति ॥ विधिना—स्वगृह्योक्तप्रकारेण । स्वकर्मणा—याजनादिवृत्त्या ॥ ८ ॥

निवापेनेति ॥ निवापः—पितृदानम ॥ ९ ॥

भूतानीति ॥ निजकर्मसमार्जितान्—स्वीयकर्मसाधितान् प्राजापत्यादीन् । * सर्व एते पुण्यलोका भवन्ति * इति श्रुतौ, * य एतानव्यग्रो यथोपदेशं कुरुते नित्यस्वर्गः पुष्टश्च * इति स्मृतौ च नित्यानां प्रत्यवायव्यतिरेकं फलान्तरस्य चोक्तेः ॥ १०—१२ ॥

अनिकेता इति ॥ यत्र सायं स्यात् तत्रैव गृहं स्थितिर्येषां ते ज्ञानिनः । प्रतिष्ठा—आश्रयः, योनिः—माता, अन्नादिना देहपोषकत्वात् ॥ १३—१५ ॥

अतिथिं प्रति अवज्ञानं न कार्यमित्याह—अवज्ञानमित्यादि ॥ परितापः—दानानुशयः, उपघातः—ताडनादिः ॥ १६ ॥ यस्त्विति ॥ तत्तद्वर्णोक्तनित्याकरणजप्रत्यवायरूपात् तत्तल्लोकप्राप्तिप्रतिबंधान्मुक्तः ॥ १७, १८ ॥

वर्णेति ॥ अत्र केशशब्दो लोमवचनः ॥ १९, २० ॥

देवतेति ॥ नास्त्यागतस्य तिथिः—एकदिनमपीत्यतिथिः, धर्मार्थ्यर्थी नूतनोऽतिथिः अज्ञातपूर्वः, अन्ये अभ्यागताः ॥ २१—२५ ॥

त्रैवर्गिकांस्त्यजेत्सर्वानारंभानवनीपते । मित्रारिषु समो मैत्रस्समस्तेष्वेव जन्तुषु ॥ २६ ॥

जरायुजांडजादीनां वाङ्मनःकायकर्मभिः । युक्तः कुर्वीत न द्रोहं सर्वसंगांश्च वर्जयेत् ॥ २७ ॥

एकरात्रस्थितिर्ग्रामे पंचरात्रस्थितिः पुरे । तथा तिष्ठेद्यथा प्रीतिर्द्वेषो वा नास्य जायते ॥ २८ ॥

प्राणयात्रानिमित्तं च व्यंगारे भुक्तवज्जने । काले प्रशस्तवर्णानां भिक्षार्थं पर्यटेद्गृहान् ॥ २९ ॥

कामः क्रोधस्तथा दर्पः मोहलोभादयश्च ये । तांस्तु सर्वान्परित्यज्य परिव्राण्णिर्ममो भवेत् ॥ ३० ॥

अभयं सर्वभूतेभ्यो दत्त्वा यश्चरते मुनिः । तस्यापि सर्वभूतेभ्यो न भयं विद्यते क्वचित् ॥ ३१ ॥

कृत्वाऽग्निहोत्रं स्वशरीरसंस्थं शारीरमग्निं स्वमुखे जुहोति ।
विप्रस्तु भैक्षोपहितैर्हविर्भिश्चिताग्निकानां व्रजति स्म लोकान् ॥ ३२ ॥

मोक्षाश्रमं यश्चरते यथोक्तं शुचिस्सुसंकल्पितबुद्धियुक्तः ।
अनिंधनं ज्योतिरिव प्रशांतस्स ब्रह्मलोकं श्रयते द्विजातिः ॥ ३३ ॥

इति श्रीविष्णुपुराणे तृतीयांशे नवमोऽध्यायः ॥ ९ ॥

---

त्रैवर्गिकानिति॥ त्रैवर्गिकान्—धर्मार्थकामसाधनभूतान्, आरंभान्—लौकिकवैदिकोद्योगान्, त्यक्त्वा मुक्त्यर्थं ब्रह्मज्ञाने निष्ठा कार्या * ब्रह्मसंस्थोऽमृतत्वमेति * इति श्रुतेः, संन्यासस्य च मोक्षमार्गत्वात्। तदशक्तस्य च जपतीर्थयात्रादि चानुमतम्। * प्रणवात्मको वेदः प्रणवं ध्यायेदिति, * प्रणवो ब्रह्मभूयाय कल्पत इति च ॥ २६, २७ ॥

एकेति॥ * अष्टौ मासान्विहारास्तु यतेरुक्ता मनीषिभिः। वाराणसीं प्रविष्टस्य विद्यते न हि संचरः॥ इति वचनाच्च ॥ २८ ॥ प्राणयात्रेति ॥ प्रशस्तवर्णाः अभिशस्तपतितवर्जिताः ॥ २९–३१ ॥

कृत्वेति ॥ प्राजापत्येष्ट्यनन्तरमग्निहोत्रं स्वशरीरसंस्थं कृत्वा—आत्मन्यारोप्येत्यर्थः । शारीरमग्निं जाठराग्निभूतं प्राणादियुक्तम्। तमुद्दिश्य मुखे कुंडस्थानीये अग्निहोत्रबुद्ध्या भिक्षान्नरूपैः हविर्भिर्यो जुहोति "प्राणोऽग्निरेवेदमत्ति चान्नं नाहं भोक्ता" इत्यनुसंधाय, सः चिताग्नीनाम्—अग्निचितां लोकान् व्रजति। तृतीयान्त-पाठे चिताग्निना—ज्ञानाग्निना दर्शितान् लोकान् व्रजति । अयमविद्वद्विषयश्लोकः, उत्तरस्तु ब्रह्मविद्विषयः ॥ ३२ ॥

मोक्षाश्रममिति ॥ मोक्षाश्रमं—पारिव्राज्यं, सुसंकल्पितबुद्धियुक्तः—सम्यक् संपादितबुद्धियोगयुक्तः । लोक्यत इति लोकः, ब्रह्मैव लोको ब्रह्मलोकः, ब्रह्मणो लोक इति वा विग्रहः । द्विजातिरिति विप्रस्यैव संन्यासे अधिकारोक्तिः । * गतिस्तुर्याश्रमे नास्ति बाहुजोरुजयोः क्वचित् । तुर्याश्रमे गतिः प्रोक्ता मुखजानां स्वयंभुवा ॥ इति दत्तात्रेयोक्तेः ॥ ३३ ॥

इति श्रीविष्णुचित्तीये विष्णुपुराणव्याख्याने तृतीयांशे नवमोऽध्यायः ॥ ९ ॥

## अथ दशमोऽध्यायः

सगरः—कथितं चातुराश्रम्यं चातुर्वर्ण्यक्रियास्तथा । पुंसः क्रियामहं श्रोतुमिच्छामि द्विजसत्तम ॥१॥
नित्यनैमित्तिकाः काम्याः क्रियाः पुंसामशेषतः । समाख्याहि भृगुश्रेष्ठ सर्वज्ञो ह्यसि मे मतः ॥ २ ॥
और्वः—यदेतदुक्तं भवता नित्यनैमित्तिकाश्रयम् । तदहं कथयिष्यामि शृणुष्वैकमना मम ॥ ३ ॥
जातस्य जातकर्मादिक्रियाकाण्डमशेषतः । पुत्रस्य कुर्वीत पिता श्राद्धं चाभ्युदयात्मकम् ॥ ४ ॥
युग्मांस्तु प्राङ्मुखान्विप्रान्भोजयेन्मनुजेश्वर । यथा तृप्तिस्तथा कुर्याद्दैवं पित्र्यं द्विजन्मनाम् ॥ ५ ॥
दध्ना यवैस्सबदरैर्मिश्रान्पिंडान्मुदा युतः । नांदीमुखेभ्यस्तीर्थेन दद्याद्दैवेन पार्थिव ॥ ६ ॥
प्राजापत्येन वा सर्वमुपचारं प्रदक्षिणम् । कुर्वीत तत्तथाऽशेषवृद्धिकालेषु भूपते ॥ ७ ॥
ततश्च नाम कुर्वीत पितैव दशमेऽहनि । देवपूर्वं नराख्यं हि शर्मवर्मादिसंयुतम् ॥ ८ ॥
शर्मेति ब्राह्मणस्योक्तं वर्मेति क्षत्रसंश्रयम् । गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥ ९ ॥
नार्थहीनं न चाशस्तं नापशब्दयुतं तथा । नामंगल्यं जुगुप्सावन्नाम कुर्यात्समाक्षरम् ॥ १० ॥
नातिदीर्घं नातिह्रस्वं नातिगुर्वक्षरान्वितम् । सुखोच्चार्यं तु तन्नाम कुर्याद्यत्प्रवणाक्षरम् ॥ ११ ॥
ततोऽनन्तरसंस्कारसंस्कृतो गुरुवेश्मनि । यथोक्तविधिमाश्रित्य कुर्याद्विद्यापरिग्रहम् ॥ १२ ॥

---

## अथ दशमोऽध्यायः

कथितमिति ॥ पुंसः क्रियां—षोडशसंस्काररूपाम् । गर्भाधानपुंसवनसीमंतोन्नयनविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनचूडोपनयनवेदव्रतचतुष्टयसमावर्तनविवाहाः षोडशसंस्काराः ॥ १, २ ॥

यदेतदिति ॥ नित्यनैमित्तिकाश्रयमिति काम्यस्याप्युपलक्षणम् ॥ ३ ॥

जातस्येति ॥ जातकर्मग्रहणमाधानपुंसवनादीनामप्युपलक्षणम् ॥ ४, ५ ॥

दध्नेति ॥ नान्दी—उत्सवः, तत्प्रधाना नान्दीमुखाः । दैवेन—कराग्रेण ॥ ६ ॥

प्राजापत्येनेति ॥ प्राजापत्येन—कनिष्ठिकाया मूलेन । तदुक्तम् * कनिष्ठदेशिन्यंगुष्ठमूलान्यग्रं करस्य तु । प्रजापतिपितृब्रह्मदैवतीर्थान्यनुक्रमात् ॥ इति मनुः । वृद्धिकालाः—कन्यापुत्रविवाहेत्यत्र वक्ष्यमाणाः ॥ ७ ॥

तत इति ॥ दशमेऽहनीति स्मृत्युक्तकालोपलक्षणम् । * अहन्येकादशे नाम * नामधेयं दशम्यां च केचिदिच्छन्ति पार्थिव । द्वादश्यामथ वा रात्र्यां मासे पूर्णे तथाऽपरे ॥ इति च स्मृतेः । देवपूर्वं—* कुलदेवतानामसंबद्धं नाम कुर्यात् * इति शंखोक्तेः । नराख्यं—पुंवाचि, शर्मवर्मादिसंयुतम्—शर्मवर्मगुप्तदासयुक्तं यन्नाम, यथा—विष्णुशर्मा इंद्रवर्मा चंद्रगुप्तः हरिदास इति । देवशब्दः ऋषिपित्रादिस्वपूज्यवाची वा ॥ ८, ९ ॥

नार्थहीनमिति ॥ अशस्तम्—अश्लीलं, व्रीडाकरम् ॥ १० ॥

नेति ॥ नातिदीर्घं—द्व्यक्षरं चतुरक्षरं वा । प्रवणाक्षरं—सुखाभिव्यक्ततरम् ॥ ११ ॥

तत इति ॥ अनंतराः—उपनिष्क्रमणाद्युपनयनान्ताः ॥ १२ ॥

गृहीतविद्यो गुरवे दत्त्वा च गुरुदक्षिणाम् । गार्हस्थ्यमिच्छन्भूपाल कुर्याद्दारपरिग्रहम् ॥ १३ ॥
ब्रह्मचर्येण वा कालं कुर्यात्संकल्पपूर्वकम् । गुरोश्शुश्रूषणं कुर्यात्तत्पुत्रादेरथापि वा ॥ १४ ॥
वैखानसो वाऽपि भवेत्परिव्राडथ वेच्छया । पूर्वसंकल्पितं यादृक् तादृक्कुर्यान्नराधिप ॥ १५ ॥
वर्षैरेकगुणां भार्यामुद्वहेत्त्रिगुणस्स्वयम् । नातिकेशामकेशां वा नातिकृष्णां न पिंगलाम् ॥ १६ ॥
निसर्गतोऽधिकाङ्गीं वा न्यूनाङ्गामपि नोद्वहेत् । नाविशुद्धां सरोमां वाऽकुलजां वाऽपि रोगिणीम् ॥१७॥
न दुष्टां दुष्टवाक्यां वा व्यंगिनीं पितृमातृतः । न श्मश्रुव्यंजनवतीं न चैव पुरुषाकृतिम् ॥ १८ ॥
न घर्घरस्वरां क्षामां तथा काकस्वरां न च । नानिबंधेक्षणां तद्वद्वृत्ताक्षीं नोद्वहेद्बुधः ॥ १९ ॥
यस्याश्च रोमशे जंघे गुल्फौ यस्यास्तथोन्नतौ । गंडयोः कूपकौ यस्या हसन्त्यास्तां न चोद्वहेत् ॥ २० ॥
नातिरूक्षच्छविं पाण्डुकरजामरुणेक्षणाम् । आपीनहस्तपादां च न कन्यामुद्वहेद्बुधः ॥ २१ ॥
न वामनां नातिदीर्घां नोद्वहेत्संहतभ्रुवम् । न चातिच्छिद्रदशनां न करालमुखीं नरः ॥ २२ ॥
पंचमीं मातृपक्षाच्च पितृपक्षाच्च सप्तमीम् । गृहस्थश्चोद्वहेत्कन्यां न्यायेन विधिना नृप ॥ २३ ॥
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः । गांधर्वराक्षसौ चान्यौ पैशाचश्चाष्टमो मतः ॥ २४ ॥
एतेषां यस्य यो धर्मो वर्णस्योक्तो महर्षिभिः । कुर्वीत दारग्रहणं तेनान्यं परिवर्जयेत् ॥ २५ ॥
सधर्मचारिणीं प्राप्य गार्हस्थ्यं सहितस्तया । समुद्वहेद्ददात्येतत्सम्यगूढं महाफलम् ॥ २६ ॥

इति श्रीविष्णुपुराणे तृतीयांशे दशमोऽध्यायः ॥ १० ॥

---

गृहीतेति ॥ गुरुदक्षिणां--गुरुत्वनिमित्तां दक्षिणाम् । उपकुर्वाणस्तु गृहीतविद्यः समावृत्य गृही स्यात्, वैखानसो, यतिर्वा स्यात् ॥ १३ ॥

ब्रह्मचर्येणेति ॥ नैष्ठिकः सन् ब्रह्मचर्याश्रमेण वा यावदायुः कालं नयेत् ॥ किं च यावज्जीवमयमेव ममाश्रम इति पूर्वं संकल्पितं चेत्तत्रैव तिष्ठेत्; न त्वाश्रमान्तरं गच्छेत् । तत्रापि विरक्तौ सत्यां यतिः स्यादेव, न त्वाश्रमान्तरगामी, * यदहरेव विरज्येत्तदहरेव प्रव्रजेत् * इति श्रुतेः ॥ १४, १५ ॥

वर्षैरिति ॥ एकगुणामिति यवीयसीत्वोपलक्षणम् । * अष्टवर्षा भवेत्कन्या नववर्षा तु रोहिणी । दशवर्षा भवेद्गौरी अत ऊर्ध्वं रजस्वला * इति कन्यायाः दशवर्षातपरमविवाहात्वस्मरणात्, * असपिण्डां यवीयसीम् * इति स्मृतेश्च ॥ १६, १७ ॥

न दुष्टामिति ॥ व्यंगिनीमिति । व्यंगिनीं—निंद्याम् । व्यंगमातापितृजां, व्यंगाख्यत्वग्दोषमातापितृजां वा । श्मश्रुरेव व्यञ्जनं पुंस्त्वचिह्नम् ॥ १८—२१ ॥ न वामनामिति ॥ करालं—दंतुरम् ॥ २२ ॥

पंचमीमिति ॥ स्वमातुः प्रपितामहस्य कूटस्थस्य पंचमस्य संतानान्तरजा तावत्संख्यजनव्यवहिता कन्या मातृपक्षात्पंचमी । तथा वरप्रपितामहस्य कूटस्थस्य सप्तमस्य संतानान्तरजाता तावत्संख्यजनव्यवहिता कन्या पितृपक्षात्सप्तमी । इदं न पंचमीसप्तमीभ्यामर्वाङ् निषेधपरम् । तयोर्न विवाहविधिपरम् । * पंचमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा * इति स्मृतेः ॥ २३ ॥ ब्राह्म इति ॥ ब्राह्मादिविवाहानां स्वरूपं स्मृतिषु द्रष्टव्यम् ॥२४—२६॥

इति श्रीविष्णुचित्तीये विष्णुपुराणव्याख्याने तृतीयांशे दशमोऽध्यायः ॥ १० ॥

## अथैकादशोऽध्यायः

सगरः—गृहस्थस्य सदाचारं श्रोतुमिच्छाम्यहं मुने। लोकादस्मात्परस्माच्च यमातिष्ठन्न हीयते ॥ १ ॥
और्वः—श्रूयतां पृथिवीपाल सदाचारस्य लक्षणम्। सदाचारवता पुंसा जितौ लोकावुभावपि ॥ २ ॥
साधवः क्षीणदोषास्तु सच्छब्दः साधुवाचकः। तेषामाचरणं यत्तु सदाचारस्स उच्यते ॥ ३ ॥
सप्तर्षयोऽथ मनवः प्रजानां पतयस्तथा। सदाचारस्य वक्तारः कर्तारश्च महीपते ॥ ४ ॥
ब्राह्मे मुहूर्ते चोत्थाय मनसा मतिमान्नृप। प्रबुद्धश्चिन्तयेद्धर्ममर्थं चाप्यविरोधिनम् ॥ ५ ॥
अपीडया तयोः काममुभयोरपि चिन्तयेत्। दृष्टादृष्टाविनाशाय त्रिवर्गे समदर्शनः ॥ ६ ॥
परित्यजेदर्थकामौ धर्मपीडाकरौ नृप। धर्ममप्यसुखोदर्कं लोकविद्विष्टमेव च ॥ ७ ॥
ततः काल्यं समुत्थाय कुर्यान्मैत्रं नरेश्वर ॥ ८ ॥
नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः। दूरादावसथान्मूत्रं पुरीषं च विसर्जयेत् ॥ ९ ॥
पादावनेजनोच्छिष्टे प्रक्षिपेन्न गृहांगणे ॥ १० ॥
आत्मच्छायां तरुच्छायां गोसूर्याग्न्यनिलांस्तथा। गुरुद्विजादींस्तु बुधो नाधिमेहेत्कदाचन ॥ ११ ॥
न कृष्टे सस्यमध्ये वा गोव्रजे जनसंसदि। न वर्त्मनि न नद्यादितीर्थेषु पुरुषर्षभ ॥ १२ ॥
नाप्सु नैवांभसस्तीरे श्मशाने न समाचरेत्। उत्सर्गं वै पुरीषस्य मूत्रस्य च विसर्जनम् ॥ १३ ॥
उदङ्मुखो दिवा मूत्रं विपरीतमुखो निशि। कुर्वीतानापदि प्राज्ञो मूत्रोत्सर्गं च पार्थिव ॥ १४ ॥
तृणैरास्तीर्य वसुधां वस्त्रप्रावृतमस्तकः। तिष्ठेन्नातिचिरं तत्र नैव किंचिदुदीरयेत् ॥ १५ ॥
वल्मीकमूषिकोत्खातां मृदं नांतर्जलात्तथा। शौचावशिष्टां गेहाच्च नादद्याल्लेपसंभवाम् ॥ १६ ॥
अणुप्राण्युपपन्नां च हलोत्खातां च पार्थिव। परित्यजेन्मृदो ह्येतास्सकलाश्शौचकर्मणि ॥ १७ ॥

---

## अथ एकादशोऽध्यायः

१–४ ॥ ब्राह्म इति ॥ ब्राह्मस्सूर्योदयात्प्राक् तृतीयो मुहूर्तः ॥ ५—७ ॥

तत्र इति ॥ मैत्रं—मित्रदैवत्यं पायुकृत्यं मलोत्सर्गादिकम् ॥ ८ ॥

नैर्ऋत्यामिति ॥ नैर्ऋत्यां दिशि ग्रामात्, तदसंभवे स्वावसथात् दूरे ॥ ९, १० ॥

आत्मच्छायामिति ॥ आत्मच्छायामित्यादि प्रतीतिशेषः ॥ ११–१३ ॥

उदङ्मुख इति ॥ दिवेति संध्ययोरुपलक्षणम्—* दिवासंध्यासु कर्णस्थयज्ञसूत्र उदङ्मुखः * इति स्मृतेः ॥ १४, १५ ॥ वल्मीकेति ॥ लेपसंभवां—मूत्रादिलेपगताम् ॥ १६, १७ ॥

एका लिंगे गुदे तिस्रो दश वामकरे नृप। हस्तद्वये च सप्त स्युर्मृदश्शौचोपपादिकाः ॥ १८ ॥
अच्छेनागंधफेनेन जलेनाबुद्बुदेन च। आचामेच्च मृदं भूयस्तथा दद्यात्समाहितः ॥ १९ ॥
निष्पादितांघ्रिशौचस्तु पादावभ्युक्ष्य वै पुनः। त्रिःपिबेत्सलिलं तेन तथा द्विः परिमार्जयेत् ॥ २० ॥
शीर्षण्यानि ततः खानि मूर्धानं च समालभेत्। बाहू नाभिं च तोयेन हृदयं चापि संस्पृशेत् ॥२१॥
स्वाचान्तश्च ततः कुर्यात्पुमान्केशप्रसाधनम्। आदर्शांजनमांगल्यं दूर्वाद्यालंभनानि च ॥ २२ ॥
ततस्स्ववर्णधर्मेण वृत्त्यर्थं च धनार्जनम्। कुर्वीत श्रुतिसंपन्नो यजेच्च पृथिवीपते ॥ २३ ॥
सोमसंस्था हविस्संस्थाः पाकसंस्थाश्च संस्थिताः। धने यतो मनुष्याणां यतेतातो धनार्जने ॥ २४ ॥
नदीनदतटाकेषु देवखातजलेषु च। नित्यक्रियार्थं स्नायीत गिरिप्रस्रवणेषु च ॥ २५ ॥
कूपेषूद्धृततोयेन स्नानं कुर्वीत वा भुवि। गृहेषूद्धृततोयेन ह्यथवा भुव्यसंभवे ॥ २६ ॥
शुचिवस्त्रधरः स्नातो देवर्षिपितृतर्पणम्। तेषामेव हि तीर्थेन कुर्वीत सुसमाहितः ॥ २७ ॥
त्रिरपः प्रीणनार्थाय देवानामपवर्जयेत्। ऋषीणां च यथान्यायं सकृच्चापि प्रजापतेः ॥ २८ ॥
पितॄणां प्रीणनार्थाय त्रिरपः पृथिवीपते। पितामहेभ्यश्च तथा प्रीणयेत्प्रपितामहान् ॥ २९ ॥
मातामहाय तत्पित्रे तत्पित्रे च समाहितः। दद्यात्पैत्रेण तीर्थेन काम्यं चान्यच्छृणुष्व मे ॥ ३० ॥
मात्रे प्रमात्रे तन्मात्रे गुरुपत्न्यै तथा नृप। गुरूणां मातुलानां च स्निग्धमित्राय भूभुजे ॥ ३१ ॥
इदं चापि जपेदंबु दद्यादात्मेच्छया नृप। उपकाराय भूतानां कृतदेवादितर्पणम् ॥ ३२ ॥
देवासुरास्तथा यक्षा नागगंधर्वराक्षसाः। पिशाचा गुह्यकास्सिद्धाः कूष्मांडाः पशवः खगाः ॥ ३३ ॥
जलेचरा भूनिलया वाय्वाहाराश्च जन्तवः। तृप्तिमेतेन यान्त्वाशु मद्दत्तेनांबुनाऽखिलाः ॥ ३४ ॥
नरकेषु समस्तेषु यातनासु च ये स्थिताः। तेषामाप्यायनायैतद्दीयते सलिलं मया ॥ ३५ ॥
येऽबांधवा बांधवा ये येऽन्यजन्मनि बांधवाः। ते तृप्तिमखिला यान्तु ये चास्मत्तोऽम्बुकांक्षिणः ॥ ३६ ॥
यत्रक्वचनसंस्थानां क्षुत्तृष्णोपहतात्मनाम्। इदमाप्यायनायास्तु मया दत्तं तिलोदकम् ॥ ३७ ॥
काम्योदकप्रदानं ते मयैतत्कथितं नृप। यद्दत्त्वा प्रीणयत्येतन्मनुष्यस्सकलं जगत्।
जगदाप्यायनोद्भूतं पुण्यमाप्नोति चानघ ॥ ३८ ॥

---

एकेति ॥ पूर्वं गंधलेपक्षयकरं शौचं कृत्वा अथैकादिसंख्यं मृच्छौचम्, अथ पादशौचमथाचमनमथ संध्यावंदनादिकमिति क्रमः ॥ १८—२३ ॥

सोमसंस्था इति॥ सोमसंस्थादयो गौतमोक्ताः * औपासनाष्टकापार्वणश्राद्धश्रावण्याग्रहायणीचैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः। अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रहायणी चातुर्मास्यादिनिरूढपशुबंधस्सौत्रामणिरिति सप्त हविर्यज्ञसंस्थाः। अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्र आप्तोर्याम इति सप्त सोमसंस्थाः * इति। यतः एताः संस्थाः धने संस्थिताः—धनायत्ता इति, अतो धनार्जने यतेत ॥ २४ ॥

नदीति ॥ तटाको मनुष्यखातः; मनुष्यैरखातो द्रोण्यादिर्देवखातः ॥ २५ ॥

कूपेष्विति ॥ भुवि—कूपतटभूमौ, भुव्यसंभवे—तत्र तटभुवि स्नातुं शक्त्यसंभवे, तेनोद्धृततोयेन गृहे स्नायात् ॥ २६—३९ ॥

दत्त्वा काम्योदकं सम्यगेतेभ्यः श्रद्धयाऽन्वितः। आचम्य च ततो दद्यात्सूर्याय सलिलाञ्जलिम् ॥ ३९ ॥
नमो विवस्वते ब्रह्मभास्वते विष्णुतेजसे। जगत्सवित्रे शुचये सवित्रे कर्मसाक्षिणे ॥ ४० ॥
ततो गृहार्चनं कुर्यादभीष्टसुरपूजनम्। जलाभिषेकैः पुष्पैश्च धूपाद्यैश्च निवेदनैः ॥ ४१ ॥
अपूर्वमग्निहोत्रं च कुर्यात्प्राग्ब्रह्मणे नृप ॥ ४२ ॥
प्रजापतिं समुद्दिश्य दद्यादाहुतिमादरात्। गृहेभ्यः काश्यपायाथ ततोऽनुमतये क्रमात् ॥ ४३ ॥
तच्छेषं मणिके पृथ्वीपर्जन्याभ्यां क्षिपेत्ततः। द्वारे धातुर्विधातुश्च मध्ये च ब्रह्मणः क्षिपेत् ॥ ४४ ॥
गृहस्य पुरुषव्याघ्र दिग्देवानपि मे शृणु ॥ ४५ ॥
इंद्राय धर्मराजाय वरुणाय तथेन्दवे। प्राच्यादिषु बुधो दद्याद्धुतशेषात्मकं बलिम् ॥ ४६ ॥
प्रागुत्तरे च दिग्भागे धन्वंतरिबलिं बुधः। निर्वपेद्वैश्वदेवं च कर्म कुर्यादतः परम् ॥ ४७ ॥
वायव्यां वायवे दिक्षु समस्तासु यथादिशम्। ब्रह्मणे चान्तरिक्षाय भानवे च क्षिपेद्बलिम् ॥ ४८ ॥
विश्वेदेवान्विश्वभूतांस्तथा विश्वपतिं पितॄन्। यक्षाणां च समुद्दिश्य बलिं दद्यान्नरेश्वर ॥ ४९ ॥
ततोऽन्यदन्नमादाय भूमिभागे शुचौ बुधः। दद्यादशेषभूतेभ्यस्स्वेच्छया सुसमाहितः ॥ ५० ॥
देवा मनुष्याः पशवो वयांसि सिद्धास्सयक्षोरगदैत्यसंघाः।
प्रेताः पिशाचास्तरवस्समस्ता ये चान्नमिच्छन्ति मयाऽत्र दत्तम् ॥ ५१ ॥
पिपीलिकाः कीटपतंगकाद्या बुभुक्षिताः कर्मनिबंधबद्धाः।
प्रयान्तु ते तृप्तिमिदं मयाऽन्नं तेभ्यो निसृष्टं सुखिनो भवन्तु ॥ ५२ ॥

---

नम इति ॥ ब्रह्मभास्वते—वेदैः प्रकाशमानाय, सवित्रे—प्रेरकाय ॥ ४० ॥

तत इति ॥ गृहार्चनम्—गृहस्यार्चनम्, अभीष्टसुरपूजनं कुर्यादित्येव। अपूर्वमित्यस्मात्प्राक् निर्वपेद्वैश्वदेवं चेत्यर्धं पठितव्यम्। तदर्थः—देवपूजनात्परं विश्वेभ्यो देवेभ्यो जुष्टं निर्वपामीति वैश्वदेवं हविर्निरूप्यते तेन देवयज्ञादिकर्म कुर्यात् ॥ ४१ ॥

तत्कथमित्यत्राह—अपूर्वमिति ॥ पूर्वमस्य प्रकृतिभूतं होमान्तरं नास्तीत्यपूर्वं, होमांतरप्रकृतित्वाभावात्। अग्निहोत्रम्—अग्नौ दर्वीहोमं वैश्वदेवयज्ञाख्यं ब्रह्माहुत्यादिपंचाहुतिकम्। * अपूर्वो दर्वीहोमो जुहोतिचोदनस्वाहाकारप्रधानः * इत्यापस्तंबः ॥ ४२, ४३ ॥

तदिति ॥ अथ भूतयज्ञः। तच्छेषमिति। पृथ्वीपर्जन्यादिबलिः। मणिके—उदधाने ॥ ४४—४७ ॥

वायव्यामिति ॥ वायव्यां वायव इति—वीप्सया प्रतिदिशं वायुबलिः। दिशां च बलिः प्राच्यै दिश इत्यादि। ब्रह्मादिबलित्रयं मध्ये। तदुत्तरतो विश्वदेवादिबलिद्वयम्। परं विश्वपतिबलिः। दक्षिणतः पितृबलिः। वायव्ये यक्षबलिः। अयं क्रमः पारस्करगृह्ये द्रष्टव्यः। तथा च पारस्करगृह्यम्—काण्वानां वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयात्, ब्रह्मणे प्रजापतये गृह्ये(हे)भ्यः काश्यपायानुमतय इति भूतगृहेभ्यो मणिके त्रीन् पर्जन्यायाद्भ्यः पृथिव्यै धात्रे विधात्रे च द्वार्ययोः प्रतिदिशं वायवे दिशां च मध्ये च त्रीन् ब्रह्मणेऽन्तरिक्षाय सूर्याय विश्वेभ्यो देवेभ्यो विश्वेभ्यश्च भूतेभ्यः तेषामुत्तरत उषसे भूतानां च पतये परं पितृभ्यस्स्वधा नम इति दक्षिणतः पात्रं निर्णिज्योत्तरपूर्वस्यां दिशि निनयेद्यक्ष्मैतत्त इत्युद्धृत्यान्नं ब्राह्मणायावनेज्य दद्याद्धाऽन्तत इति ॥ ४८—५२ ॥

येषां न माता न पिता न बंधुर्नैवान्नसिद्धिर्न तथाऽन्यदस्ति ।
तत्तृप्तयेऽन्नं भुवि दत्तमेतत्ते यान्तु तृप्तिं मुदिता भवन्तु ॥ ५३ ॥

भूतानि सर्वाणि तथाऽन्नमेतदहं च विष्णुर्न यतोऽन्यदस्ति ।
तस्मादहं भूतनिकायभूतमन्नं प्रयच्छामि भवाय तेषाम् ॥ ५४ ॥

चतुर्दशो भूतगणो य एषस्तत्र स्थिता येऽखिलभूतसंघाः ।
तृप्त्यर्थमन्नं हि मया निसृष्टं तेषामिदं ते मुदिता भवन्तु ॥ ५५ ॥

इत्युच्चार्य नरो दद्यादन्नं श्रद्धासमन्वितः । भुवि सर्वोपकाराय गृही सर्वाश्रयो यतः ॥ ५६ ॥

श्वचंडालविहंगानां भुवि दद्यात्ततो नरः । ये चान्ये पतिताः केचिदपुत्रा स्सन्ति मानवाः ॥ ५७ ॥

ततो गोदोहमात्रं वै कालं तिष्ठेद्गृहांगणे । अतिथिग्रहणार्थाय तदूर्ध्वं तु यथेच्छया ॥ ५८ ॥

अतिथिं तत्र संप्राप्तं पूजयेत्स्वागतादिना । तथासनप्रदानेन पादप्रक्षालनेन च ॥ ५९ ॥

श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च । गच्छतश्चानुयानेन प्रीतिमुत्पादयेद्गृही ॥ ६० ॥

अज्ञातकुलनामानमन्यदेशादुपागतम् । पूजयेदतिथिं सम्यङ्‌ नैकग्रामनिवासिनम् ॥ ६१ ॥

अकिंचनमसंबंधमज्ञातकुलशीलिनम् । असंभोज्यातिथिं भुञ्जन् भोक्तुकामं व्रजत्यधः ॥ ६२ ॥

स्वाध्यायगोत्रचरणमपृष्ट्वा च तथा कुलम् । हिरण्यगर्भबुद्ध्या तं मन्येताभ्यागतं गृही ॥ ६३ ॥

पित्रर्थं चापरं विप्रमेकमप्याशयेन्नृप । तद्देश्यं विदिताचारसंभूतिं पाञ्चयज्ञिकम् ॥ ६४ ॥

---

येषामिति ॥ सिद्धिः—सामग्री ॥ ५३ ॥

भूतानीति ॥ भूतनिकायभूतं—प्राणिनां शरीरभूतम् ॥ ५४ ॥

चतुर्दश इति ॥ चतुर्दशो गणः * देवा मनुष्याः पितरः * इत्यादिना प्रागुक्तः । * अष्टविधं दैवत्यं तैर्यग्योन्यं च पंचधा भवति । मानुष्यं चैकविधं समासतो भौतिकः सर्गः ॥ * इति, * सिद्धगुह्यकगंधर्वयक्षराक्षसपन्नगाः । विद्याधराः पिशाचाश्च निर्दिष्टा देवयोनयः * इति, * सरीसृपा वानराश्च पशवो मृगपक्षिणः । तिर्यञ्च इति कथ्यन्ते पञ्चैताः प्राणिजातयः ॥ * इति, * मनुष्या एकजातिरिति ॥ ५५–५७ ॥

तत इति ॥ नाडिकायाश्चतुर्भागो गोदोहः ॥ ५८–६१ ॥

अकिंचनमिति ॥ असंभोज्यातिथिं भक्तं भोक्तुकामं व्रजत्यधः इति वा पाठः । भक्तमश्नन् भुंजन् इति वा पाठः ॥ ६२ ॥

स्वाध्यायेति ॥ चरणं—वेदावांतरशाखाः, पूर्वाचारो वा ॥ ६३ ॥ पित्रर्थमिति ॥ पित्रर्थम्—नित्यश्राद्धार्थम् । पांचयज्ञिकं—पंचयज्ञकारिणम ॥ ६४ ॥

अन्नाग्रं च समुद्धृत्य हन्तकारोपकल्पितम् । निर्वापभूतं भूपाल श्रोत्रियायोपपादयेत् ॥ ६५ ॥
दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणाम् । इच्छया च बुधो दद्याद्विभवे सत्यवारितम् ॥ ६६ ॥
इत्येतेऽतिथयः प्रोक्ताः प्रागुक्ता भिक्षवश्च ये । चतुरः पूजयित्वैतान्नृप पापात्प्रमुच्यते ॥ ६७ ॥
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते । स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥ ६८ ॥
धाता प्रजापतिः शक्रो वह्निर्वसुगणोऽर्यमा । प्रविश्यातिथिमेते वै भुञ्जतेऽन्नं नरेश्वर ॥ ६९ ॥
तस्मादतिथिपूजायां यतेत सततं नरः । स केवलमघं भुंक्ते यो भुंक्ते ह्यतिथिं विना ॥ ७० ॥
ततः स्ववासिनीं दुःखीं गुर्विणीं वृद्धबालकान् । भोजयेत्संस्कृतान्नेन प्रथमं चरमं गृही ॥ ७१ ॥
अभुक्तवत्सु चैतेषु भुंजन्भुंक्ते स दुष्कृतम् । मृतश्च गत्वा नरकं श्लेष्मभुग्जायते नरः ॥ ७२ ॥
अस्नाताशी मलं भुंक्ते ह्यजपी पूयशोणितम् । असंस्कृतान्नभुङ्मूत्रं बालादेः प्रथमं शकृत् ॥ ७३ ॥
अहोमी च क्रिमीन्भुंक्ते अदत्वा विषमश्नुते ॥ ७४ ॥
तस्माच्छृणुष्व राजेन्द्र यथा भुञ्जीत वै गृही । भुञ्जतश्च यथा पुंसः पापबंधो न जायते ॥ ७५ ॥
इह चारोग्यमतुलं बलवृद्धिस्तथा नृप । भवत्यरिष्टशान्तिश्च वैरिपक्षाभिचारतः ॥ ७६ ॥
स्नातो यथावत्कृत्वा च देवर्षिपितृतर्पणम् । प्रशस्तरत्नपाणिस्तु भुंजीत प्रयतो गृही ॥ ७७ ॥
कृते जपे हुते वह्नौ शुद्धवस्त्रधरो नृप । दत्त्वाऽतिथिभ्यो विप्रेभ्यो गुरुभ्यस्संश्रिताय च ।
पुण्यगंधधरश्शस्तमाल्यधारी नरेश्वर ॥ ७८ ॥
नैकवस्त्रधरोऽनार्द्रपाणिपादो महीपते । विशुद्धवदनः प्रीतो भुञ्जीत न विदिङ्मुखः ॥ ७९ ॥
प्राङ्मुखोदङ्मुखो वापि न चैवान्यमना नरः । अन्नं प्रशस्तं पथ्यं च प्रोक्षितं प्रोक्षणोदकैः ॥ ८० ॥
न कुत्सिताहृतं नैव जुगुप्सावदसंस्कृतम् । दत्त्वा तु भुंक्ते शिष्टेभ्यः क्षुधितेभ्यस्तथा गृही ॥ ८१ ॥
प्रशस्तशुद्धपात्रे तु भुञ्जीताकुपितो द्विजः ॥ ८२ ॥

---

अन्नाग्रमिति ॥ अग्रं—भोजनाद्यनुच्छिष्टम्, * ग्रासमात्रं भवेद्भिक्षा अग्रं ग्रासचतुष्टयम् । अग्राण्येव तु चत्वारि हंतकारं प्रचक्षते ॥ * इति । निर्वपामीति पाकात्सिद्धं निर्वापभूतं मनुष्येभ्यो हंतेतिमंत्रेण श्रोत्रियाय देयमन्नं हंतकाराख्यम् ॥ ६५, ६६ ॥

इत्येत इति ॥ एते अतिथयः * अज्ञातकुलनामानमित्युक्तश्च, श्रोत्रियश्च, परिव्राड्ब्रह्मचारिवर्गश्च, * वेदाहरणकार्येणेति प्रागुक्तश्चेत्येतांश्चतुरो वर्गान् पूजयेत् ॥ ६७–७० ॥

तत इति ॥ परिणीता पितृगेहे स्थिता स्ववासिनी । चरमं—पश्चात् । गृही भुंजीतेति शेषः ॥ ७१, ७२ ॥ अस्नातेति । असंस्कृतं—वैश्वदेवादिना ॥ ७३–८० ॥

नेति ॥ असंस्कृतं वैश्वदेवादिना ॥ ८१, ८२ ॥

नासंदिसंस्थिते पात्रे नादेशे च नरेश्वर । नाकाशे नातिसंकीर्णे दत्त्वाऽग्रं च नरोऽग्नये ॥ ८३ ॥
मंत्राभिमंत्रितं शस्तं न च पर्युषितं नृप । अन्यत्र फलमूलेभ्यश्शुष्कशाखादिकात्तथा ॥ ८४ ॥
तद्वद्धरीतकेभ्यश्च गुडभक्ष्येभ्य एव च । भुंजीतोद्धृतसाराणि न कदापि नरेश्वर ॥ ८५ ॥
न शेषं पुरुषोऽश्नीयादन्यत्र जगतीपते । मध्वंबुदधिसर्पिभ्यस्सक्तुभ्यश्च विवेकवान् ॥ ८६ ॥
अश्नीयात्तन्मयो भूत्वा पूर्वं तु मधुरं रसम् । लवणाम्लौ तथा मध्ये कटुतिक्तादिकांस्ततः ॥ ८७ ॥
प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये कठिनभोजनः । अन्ते पुनर्द्रवाशी तु बलारोग्ये न मुंचति ॥ ८८ ॥
अनिन्द्यं भक्षयेदित्थं वाग्यतोऽन्नमकुत्सयन् । पंचग्रासं महामौनं प्राणाद्याप्यायनं हि तत् ॥ ८९ ॥
भुक्त्वा सम्यगथाचम्य प्राङ्मुखोदङ्मुखोऽपि वा । यथावत्पुनराचामेत्पाणी प्रक्षाल्य मूलतः ॥९०॥
स्वस्थः प्रशान्तचित्तस्तु कृतासनपरिग्रहः । अभीष्टदेवतानां तु कुर्वीत स्मरणं नरः ॥ ९१ ॥
अग्निराप्याययेद्धातुं पार्थिवं पवनेरितः । दत्तावकाशं नभसा जरयत्वस्तु मे सुखम् ॥ ९२ ॥
अन्नं बलाय मे भूमेरपामग्न्यनिलस्य च । भवत्वेतत्परिणतं ममास्त्वव्याहतं सुखम् ॥ ९३ ॥
प्राणापानसमानानामुदानव्यानयोस्तथा । अन्नं पुष्टिकरं चास्तु ममाप्यव्याहतं सुखम् ॥ ९४ ॥

अगस्तिरग्निर्बडबानलश्च भुक्तं मयाऽन्नं जरयत्वशेषम् ।
सुखं च मे तत्परिणामसंभवं यच्छत्वरोगं मम चास्तु देहे ॥ ९५ ॥
विष्णुस्समस्तेन्द्रियदेहदेही प्रधानभूतो भगवान्यथैकः ।
सत्येन तेनात्तमशेषमन्नमारोग्यदं मे परिणाममेतु ॥ ९६ ॥

विष्णुरत्ता तथैवान्नं परिणामश्च वै तथा । सत्येन तेन मद्भुक्तं जीर्यत्वन्नमिदं तथा ॥ ९७ ॥
इत्युच्चार्य स्वहस्तेन परिमृज्य तथोदरम् । अनायासप्रदायीनि कुर्यात्कर्माण्यतन्द्रितः ॥ ९८ ॥
सच्छास्त्रादिविनोदेन सन्मार्गादविरोधिना । दिनं नयेत्ततस्सन्ध्यामुपतिष्ठेत्समाहितः ॥ ९९ ॥
दिनान्तसंध्यां सूर्येण पूर्वामृक्षैर्युतां बुधः । उपतिष्ठेद्यथान्याय्यं सम्यगाचम्य पार्थिव ॥ १०० ॥

---

नासंदीति ॥ आसन्दी- वेत्रादिमयं चतुष्पादमासनं * नान्यमासनमारोपयेदिति विष्णुस्मृतेः । अदेशे—कुत्सितस्थाने; आकाशे—अपुवृते। अकाले इति वा पाठः । अकाले—सन्ध्यादिसमये, ना* नांतरा भोजनं कुर्यादिति। अग्नयेऽग्रमिति । परिविष्टस्यान्नस्याग्रं मन्त्रं विनाऽग्नौ पक्षिपेदिति विधिः॥८३,८४॥ हरीतकमपक्वलेह्यादिभेदः॥८५॥

न शेषमिति ॥ शेषम्—स्वेनापि खादितशेषम् * खादितार्धं पुनः खादन्मोदकानि फलानि वा । दंपत्योर्भुक्तशेषं वा भुक्त्वा चान्द्रायणं चरेत् * इति स्मृतेः । नाशेषमिति पाठे निश्शेषं नाश्नीयात् ॥ ८६-८८ ॥

अनिन्द्यमिति ॥ अनिंद्यम्—अनिषिद्धं पंचग्रासं भक्षयेदिति शेषः । महामौनमिति क्रियाविशेषणम् ॥ ८९–९१ ॥ अग्निरिति ॥ पार्थिवं धातुं—देहं अन्नरसेनाप्याययन्नन्नं जरयत्विति शेषः ॥ ९२–९४ ॥

अगस्तिरिति ॥ तदन्नं परिणामसंभवम् अरोगं मम देहे यच्छतु मे सुखं चास्त्वित्यन्वयः ॥ ९५ ॥

विष्णुरिति ॥ अत्तम्—भुक्तम् ॥ ९६–१०० ॥

सर्वकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते । अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥ १०१ ॥

सूर्येणाभ्युदितो यश्च त्यक्तः सूर्येण वा स्वपन् । अन्यत्रातुरभावात्तु प्रायश्चित्ती भवेन्नरः ॥ १०२ ॥

तस्मादनुदिते सूर्ये समुत्थाय महीपते । उपतिष्ठेन्नरस्संध्यामस्वपंश्च दिनान्तजाम् ॥ १०३ ॥

उपतिष्ठन्ति वै सन्ध्यां ये न पूर्वां न पश्चिमाम् । व्रजन्ति ते दुरात्मानस्तामिस्रं नरकं नृप ॥ १०४ ॥

पुनः पाकमुपादाय सायमप्यवनीपते । वैश्वदेवनिमित्तं वै पत्न्या सार्द्धं बलिं हरेत् ॥ १०५ ॥

तत्रापि श्वपचादिभ्यस्तथैवान्नविसर्जनम् ॥ १०६ ॥

अतिथिं चागतं तत्र स्वशक्त्या पूजयेद्बुधः । पादशौचासनप्रह्वस्वागतोक्त्या च पूजनम् ॥
ततश्चान्नप्रदानेन शयनेन च पार्थिव ॥ १०७ ॥

दिवाऽतिथौ तु विमुखे गते यत्पातकं नृप । तदेवाष्टगुणं पुंसस्सूर्योढे विमुखे गते ॥ १०८ ॥

तस्मात्स्वशक्त्या राजेन्द्र सूर्योढमतिथिं नरः । पूजयेत्पूजिते तस्मिन्पूजितास्सर्वदेवताः ॥ १०९ ॥

अन्नशाकांबुदानेन स्वशक्त्या पूजयेत्पुमान् । शयनप्रस्तरमहीप्रदानैरथवाऽपि तम् ॥ ११० ॥

कृतपादादिशौचस्तु भुक्त्वा सायं ततो गृही । गच्छेच्छय्यामस्फुटितामपि दारुमयीं नृप ॥ १११ ॥

नाविशालां न वै भग्नां नासमां मलिनां न च । न च जन्तुमयीं शय्यामधितिष्ठेदनास्तृताम् ॥११२॥

प्राच्यां दिशि शिरश्शस्तं याम्यायामथ वा नृप । सदैव स्वपतः पुंसो विपरीतं तु रोगदम् ॥ ११३ ॥

ऋतावुपगमश्शस्तस्स्वपत्न्यामवनीपते । पुन्नामर्क्षे शुभे काले ज्येष्ठायुग्मासु रात्रिषु ॥ ११४ ॥

नाप्लुतां तु स्त्रियं गच्छेन्नातुरां न रजस्वलाम् । नानिष्टां न प्रकुपितां न त्रस्तां न च गर्भिणीम् ॥११५॥

नादक्षिणां नान्यकामां नाकामां नान्ययोषितम् । क्षुत्क्षामां नातिभुक्तां वा स्वयं चैभिर्गुणैर्युतः ॥११६॥

---

सर्वकालमिति ॥ विभ्रमः—उन्मादादिवैचित्र्यम् । आतुरेति । आतुरत्वं रोगभावः । आशौचभावः—आशौचसद्भावः ॥ १०१–१०४ ॥ पुनरिति ॥ वैश्वदेवप्रत्याम्नायत्वेनामन्त्रकं पत्नी बलिं हरेत् ॥ १०५, १०६ ॥

अतिथिमिति ॥ प्रह्वत्वं-नम्रभावः ॥ १०७ ॥

दिवेति ॥ * सूर्योढस्तु स संप्राप्तो यस्सूर्योऽस्तंगतेऽतिथिः * ॥ १०८–१०९ ॥

अन्नेति ॥ प्रस्तरः—तृणादिशयनम् ॥ ११० ॥

कृतेति ॥ अपि दारुमयीम्—अनिषिद्धद्रुमकृताम् ॥ १११–११३ ॥

ऋताविति ॥ पुन्नामर्क्षाणि दश बृहस्पत्युक्तानि—* सार्पाचतुष्कं रौद्रं च याम्यं त्वाष्ट्रिकं जलम् । वैश्वेन्द्रवासवं पौष्णं स्त्रीलिंगास्समुदाहृताः ॥ सौम्यवारुणमूलानि नपुंसकदिनानि तु । शेषाः पुँल्लिंगतां याताः * इति ॥ ज्येष्ठायुग्मासु-षष्ठ्यादियुग्मासु रात्रिषु, तत्रापि ज्येष्ठासु यथोत्तरं शुभास्वित्यर्थः । चतुर्थीप्रभृत्याषोडशीमित्यादिना ॥ ११४–११६ ॥

स्नातस्स्रग्गंधधृत् प्रीतो नाध्मातः क्षुधितोऽपि वा । सकामस्सानुरागश्च व्यवायं पुरुषो व्रजेत् ॥११७॥
चतुर्दश्यष्टमी चैव तथाऽमा चाथ पूर्णिमा । पर्वाण्येतानि राजेंद्र रविसंक्रान्तिरेव च ॥ ११८ ॥
तैलस्त्रीमांससंभोगी सर्वेष्वेतेषु वै पुमान् । विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः ॥ ११९ ॥
अशेषपर्वस्वेतेषु तस्मात्संयमिभिर्बुधैः । भाव्यं सच्छास्त्रदेवेज्याध्यानजप्यपरैर्नरैः ॥ १२० ॥
नान्ययोनावयोनौ वा नोपयुक्तौषधस्तथा । द्विजदेवगुरूणां च व्यवायी नाश्रये भवेत् ॥ १२१ ॥
चैत्यचत्वरतीर्थेषु नैव गोष्ठे चतुष्पथे । नैव श्मशानोपवने सलिलेषु महीपते ॥ १२२ ॥
प्रोक्तपर्वस्वशेषेषु नैव भूपाल सन्ध्ययोः । गच्छेद्व्यवायं मनसा न मूत्रोच्चारपीडितः ॥ १२३ ॥
पर्वस्वभिगमो निन्द्यो दिवा पापप्रदो नृप । भुवि रोगावहो नृणामप्रशस्तो जलाशये ॥ १२४ ॥
परदारान्न गच्छेत मनसाऽपि कथंचन । किमु वाचाऽस्थिबंधोऽपि नास्ति तेषु व्यवायिनाम् ॥१२५॥
मृतो नरकमभ्येति हीयतेऽत्रापि चायुषः । परदाररतिः पुंसामिह चामुत्र भीतिदा ॥ १२६ ॥
इति मत्वा स्वदारेषु ऋतुमत्सु बुधो व्रजेत् । यथोक्तदोषहीनेषु सकामेष्वनृतावपि ॥ १२७ ॥

इति श्रीविष्णुपुराणे तृतीयांशे एकादशोऽध्यायः ॥ ११ ॥

---

## अथ द्वादशोऽध्यायः

और्वः—देवगोब्राह्मणान्सिद्धान्वृद्धाचार्यां स्तथाऽर्चयेत् । द्विकालं च नमेत्संध्यामग्नीनुपचरेत्तथा ॥१॥
सदाऽनुपहते वस्त्रे प्रशस्ताश्च महौषधीः । गारुडानि च रत्नानि बिभृयात्प्रयतो नरः ॥ २ ॥
प्रस्निग्धामलकेशश्च सुगंधश्चारुवेषधृक् । सितास्सुमनसो हृद्या बिभृयाच्च नरस्सदा ॥ ३ ॥

---

स्नात इति ॥ कामो रिरंसा । रागः प्रीतिः ॥ ११७–१२० ॥

नान्ययोनाविति ॥ अन्ययोनौ—गवादियोनौ । औषधं रसायनादि । द्विजदेवादेराश्रये—तदालयस्थो व्यवायी न स्यात् ॥ १२१ ॥ चैत्येति ॥ चत्वरादिष्वपि न व्यवायी स्यात् ॥ १२२–१२४ ॥

परदारानिति ॥ तेषु—परदारेषु व्यवायिनामस्थिबंधो नास्ति । ते हि अनस्थिकृमिकीटादिजन्मानः स्युः ॥ १२५–१२७ ॥

इति श्रीविष्णुचित्तीये विष्णुपुराणव्याख्याने तृतीयांशे एकादशोऽध्यायः ॥ ११ ॥

---

## अथ द्वादशोऽध्यायः

सदेति ॥ ओषधीः—विष्णुक्रान्तादूर्वाद्याः । गारुडानि रत्नानि च—विषघ्नानि मरकतादीनि ॥ १, २ ॥

प्रस्निग्धा इति ॥ प्रस्निग्धाः—अलंकृताः अमलाः केशा यस्य॥ ३ ॥

किंचित्परस्वं न हरेन्नाल्पमप्यप्रियं वदेत् । प्रियं च नानृतं ब्रूयान्नान्यदोषानुदीरयेत् ॥ ४ ॥
नान्यस्त्रियं तथा वैरं रोचयेत्पुरुषर्षभ । न दुष्टं यानमारोहेत्कूलच्छायां न संश्रयेत् ॥ ५ ॥
विद्विष्टपतितोन्मत्तबहुवैरातिकीटकैः । बंधकीबंधकीभर्तृक्षुद्रानृतकथैस्सह ॥ ६ ॥
तथाऽतिव्ययशीलैश्च परिवादरतैश्शठैः । बुधो मैत्रीं न कुर्वीत नैकः पंथानमाश्रयेत् ॥ ७ ॥
नावगाहेज्जलौघस्य वेगमग्रे नरेश्वर । प्रदीप्तं वेश्म न विशेन्नारोहेच्छिखरं तरोः ॥ ८ ॥
न कुर्याद्दन्तसंघर्षं कृष्णीयाच्च न नासिकाम् । नासंवृतमुखो जृंभेच्छ्वासकासौ विसर्जयेत ॥ ९ ॥
नोच्चैर्हसेत्सशब्दं च न मुञ्चेत्पवनं बुधः । नखान्न खादयेच्छिन्द्यान्न तृणं न महीं लिखेत् ॥ १० ॥
न श्मश्रु भक्षयेल्लोष्टं न मृद्नीयाद्विचक्षणः । ज्योतींष्यमेध्यशस्तानि नाभिवीक्षेत च प्रभो ॥ ११ ॥
नग्नां परस्त्रियं चैव सूर्यं चास्तमयोदये । न हुंकुर्याच्छवं गंधं शवगंधो हि सोमजः ॥ १२ ॥
चतुष्पथं चैत्यतरुं श्मशानोपवनानि च । दुष्टस्त्रीसन्निकर्षं च वर्जयेन्निशि सर्वदा ॥ १३ ॥
पूज्यदेवद्विजज्योतिश्छायां नातिक्रमेद् बुधः । नैकश्शून्याटवीं गच्छेत्तथा शून्यगृहे वसेत् ॥ १४ ॥
केशास्थिकंटकामेध्यबलिभस्मतुषांस्तथा । स्नानार्द्रधरणीं चैव दूरतः परिवर्जयेत् ॥ १५ ॥
नानार्यानाश्रयेत्कांश्चिन्न जिह्मं रोचयेद्बुधः । उपसर्पेन्न वै व्यालं चिरं तिष्ठेन्न वोत्थितः ॥ १६ ॥
अतीव जागरस्वप्नौ तद्वत्स्थानासने बुधः । न सेवेत तथा शय्यां व्यायामं च नरेश्वर ॥ १७ ॥
दंष्ट्रिणश्शृंगिणश्चैव प्राज्ञो दूरेण वर्जयेत् । अवश्यायं च राजेन्द्र पुरोवातातपौ तथा ॥ १८ ॥
न स्नायान्न स्वपेन्नग्नो न चैवोपस्पृशेद्बुधः । मुक्त(कच्छश्च)केशश्च नाचामेद्देवाद्यर्चां च वर्जयेत्॥१९॥
होमदेवार्चनाद्यासु क्रियास्वाचमने तथा । नैकवस्त्रः प्रवर्तेत द्विजपादावनेजने ॥ २० ॥
नासमंजसशीलैस्तु सहासीत कथंचन । सद्वृत्तसन्निकर्षो हि क्षणार्धमपि शस्यते ॥ २१ ॥
विरोधं नोत्तमैर्गच्छेन्नाधमैश्च सदा बुधः । विवाहश्च विवादश्च तुल्यशीलैर्नृपेष्यते ॥ २२ ॥
नारभेत कलिं प्राज्ञश्शुष्कवैरं च वर्जयेत् । अप्यल्पहानिस्सोढव्या वैरेणार्थागमं त्यजेत् ॥ २३ ॥
स्नातो नाङ्गानि संमार्जेत्स्नानशाट्या न पाणिना । न च निर्धूनयेत्केशान्नाचामेच्चैव चो(च्छ्रितः)त्थितः॥२४॥
पादेन नाक्रमेत्पादं न पूज्याभिमुखं नयेत् । नोच्चासनं गुरोरग्रे भजेताविनयान्वितः ॥ २५ ॥

---

किञ्चिदिति ॥ किंचित्—किंचिदपि, न हरेत् ॥ ४ ॥ नेति ॥ कूलच्छाया—जलौघक्षतदेशच्छाया ॥५॥

विद्विष्टेति ॥ विद्विष्टादिभिः मैत्रीं न कुर्यात् । कीटकः—कीटकवत्पीडकः दरिद्रः । बंधकी—असती ॥ ॥ ६—८ ॥ न कुर्यादिति ॥ न कृष्णीयात्—न निष्कर्षेत । श्वासकासौ चासंवृतमुखो न विसर्जयेत् ॥ ९—११ ॥

नग्नामिति ॥ न हुंकुर्यादिति । शुक्लशोणितमयत्वेनाग्नीषोमीयस्य कायस्य अग्न्यंशे शुक्ले प्राणेन सह गते यस्सोमांशो रसः तदाहजः शवगंधो हि सोमजः; * अग्निरूपा रसस्सोमश्शरीरं तन्मयं यतः * इति-वचनात् ॥ १२ ॥ चतुष्पथमिति ॥ सवेदिकः पूजितो वृक्षश्चैत्यतरुः ॥ १३—२५ ॥

अपसव्यं न गच्छेच्च देवागारचतुष्पथान् । मंगल्यपूज्यांश्च तथा विपरीतान्न दक्षिणम् ॥ २६ ॥
सोमार्काग्न्यंबुवायूनां पूज्यानां च न संमुखम् । कुर्यान्निष्ठीवविण्मूत्रसमुत्सर्गं च पंडितः ॥ २७ ॥
तिष्ठन्न मूत्रयेत्तद्वत्पथिष्वपि न मूत्रयेत् । श्लेष्मविण्मूत्ररक्तानि सर्वदैव न लंघयेत् ॥ २८ ॥
श्लेष्मशिंघाणिकोत्सर्गो नान्नकाले प्रशस्यते । बलिमंगलजप्यादौ न होमे न महाजने ॥ २९ ॥
योषितो नावमन्येत न चासां विश्वसेद्बुधः । न चैवेर्ष्या भवेत्तासु (न धिकु) नाधिकुर्यात्कदाचन ॥ ३० ॥
मंगल्यपुष्परत्नाज्यपूज्यानननभिवाद्य च । न निष्क्रमेद्गृहात्प्राज्ञस्सदाचारपरो नरः ॥ ३१ ॥
चतुष्पथान्नमस्कुर्यात्काले होमपरो भवेत् । दीनानभ्युद्धरेत्साधूनुपासीत बहुश्रुतान् ॥ ३२ ॥
देवर्षिपूजकस्सम्यक्पितृपिंडोदकप्रदः । सत्कर्ता चातिथीनां यः स लोकानुत्तमान्व्रजेत् ॥ ३३ ॥
हितं मितं प्रियं काले वश्यात्मा योऽभिभाषते । स याति लोकानाह्लादहेतुभूतान्नृपाक्षयान् ॥ ३४ ॥
धीमान्हीमान्क्षमायुक्तो ह्यास्तिको विनयान्वितः । विद्याभिजनवृद्धानां याति लोकाननुत्तमान् ॥ ३५ ॥
अकालगर्जितादौ च पर्वस्वाशौचकादिषु । अनध्यायं बुधः कुर्यादुपरागादिके तथा ॥ ३६ ॥
शमं नयति यः क्रुद्धान्सर्वबंधुरमत्सरी । भीताश्वासनकृत्साधुस्स्वर्गस्तस्याल्पकं फलम् ॥ ३७ ॥
वर्षातपादिषु च्छत्री दंडी रात्र्यटवीषु च । शरीरत्राणकामो वै सोपानत्कस्सदा व्रजेत् ॥ ३८ ॥
नोर्ध्वं न तिर्यग्दूरं वा न पश्यन्पर्यटेद्बुधः । युगमात्रं महीपृष्ठं नरो गच्छेद्विलोकयन् ॥ ३९ ॥
दोषहेतूनशेषांश्च वश्यात्मा यो निरस्यति । तस्य धर्मार्थकामानां हानिर्नाल्पाऽपि जायते ॥ ४० ॥
सदाचाररतः प्राज्ञो विद्याविनयशिक्षितः । पापेऽप्यपापः परुषे ह्यभिधत्ते प्रियाणि यः ।
मैत्रीद्रवांतःकरणस्तस्य मुक्तिः करे स्थिता ॥ ४१ ॥
ये कामक्रोधलोभानां वीतरागा न गोचराः । सदाचारस्थितास्तेषामनुभावैर्धृता मही ॥ ४२ ॥
तस्मात्सत्यं वदेत्प्राज्ञो यत्परप्रीतिकारणम् । सत्यं यत्परदुःखाय तदा मौनपरो भवेत् ॥ ४३ ॥
प्रियमुक्तं हितं नैतदिति मत्वा न तद्वदेत् । श्रेयस्तत्र हितं वाच्यं यद्यप्यत्यन्तमप्रियम् ॥ ४४ ॥
प्राणिनामुपकाराय यथैवेह परत्र च । कर्मणा मनसा वाचा तदेव मतिमान्वदेत् ॥ ४५ ॥

इति श्रीविष्णुपुराणे तृतीयेंऽशे द्वादशोऽध्यायः ॥ १२ ॥

---

अपसव्यमिति ॥ विपरीतान्—अमंगल्यानपूज्यान्न प्रदक्षिणयेत् ॥ २६–२८ ॥
श्लेष्मेति ॥ शिंघाणो नासिकामलः ॥ २९ ॥
योषित इति ॥ नाधिकुर्यात्—योषिदधिकारं न कुर्यात् ॥ ३०–४० ॥
सदाचारेति ॥ पापे—पापकृत्येऽपि, अपापः—अद्रोग्धा परुषे—परुषवक्तर्यपि प्रियवादी ॥ ४१ ॥
य इति ॥ अनुभावैः—सत्यादिगुणैः, * सत्येनोत्तमिता भूमिः * इति श्रुतेः ॥ ४२—४५ ॥
इति विष्णुचित्तीये श्रीविष्णुपुराणव्याख्याने तृतीयेंऽशे द्वादशोऽध्यायः ॥ १२ ॥

## त्रयोदशोऽध्यायः



**और्वः—सचेलस्य पितुः स्नानं जाते पुत्रे विधीयते । जातकर्म तथा कुर्याच्छ्राद्धमभ्युदयं च यत् ॥१॥**
**युग्मान्देवांश्च पित्र्यांश्च सम्यक्सव्यक्रमाद्द्विजान् । पूजयेद्भोजयेच्चैव तन्मना नान्यमानसः ॥ २ ॥**
**दध्यक्षतैस्सबदरैः प्राङ्मुखोदङ्मुखोऽपि वा । देवतीर्थेन वै पिंडान्दद्यात्कायेन वा नृप ॥ ३ ॥**
**नान्दीमुखः पितृगणस्तेन श्राद्धेन पार्थिव । प्रीयते तत्तु कर्तव्यं पुरुषैस्सर्ववृद्धिषु ॥ ४ ॥**
**कन्यापुत्रविवाहेषु प्रवेशेषु च वेश्मनः । नामकर्मणि बालानां चूडाकर्मादिके तथा ॥ ५ ॥**
**सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने । नांदीमुखं पितृगणं पूजयेत्प्रयतो गृही ॥ ६ ॥**
**पितृपूजाक्रमः प्रोक्तो वृद्धावेष समासतः । श्रूयतामवनीपाल प्रेतकर्मक्रियाविधिः ॥ ७ ॥**
**प्रेतदेहं शुभैः स्नानैस्स्नापितं स्रग्विभूषितम् । दग्ध्वा ग्रामाद्बहिः स्नात्वा सचेलास्सलिलाशये ॥ ८ ॥**
**यत्र तत्र स्थितायैतदमुकायेति वादिनः । दक्षिणाभिमुखा दद्युर्बान्धवास्सलिलाञ्जलिम् ॥ ९ ॥**
**प्रविष्टाश्च समं गोभिर्ग्रामं नक्षत्रदर्शने । कटकर्म ततः कुर्युर्भूमौ प्रस्तरशायिनः ॥ १० ॥**
**दातव्योऽनुदिनं पिण्डः प्रेताय भुवि पार्थिव । दिवा च भक्तं भोक्तव्यममांसं मनुजर्षभ ॥ ११ ॥**
**दिनानि तानि चेच्छातः कर्तव्यं विप्रभोजनम् । प्रेता यान्ति तथा तृप्तिं बंधुवर्गेण भुञ्जता ॥ १२ ॥**
**प्रथमेऽह्नि तृतीये च सप्तमे नवमे तथा । वस्त्रत्यागबहिस्स्नाने कृत्वा दद्यात्तिलोदकम् ॥ १३ ॥**
**चतुर्थेऽह्नि च कर्तव्यं तस्यास्थिचयनं नृप । तदूर्ध्वमङ्गसंस्पर्शस्सपिण्डानामपीष्यते ॥ १४ ॥**
**योग्यस्सर्वक्रियाणां तु समानसलिलास्तथा । अनुलेपनपुष्पादिभोगादन्यत्र पार्थिव ॥ १५ ॥**
**शय्यासनोपभोगश्च सपिंडानामपीष्यते । भस्मास्थिचयनादूर्ध्वं संयोगो न तु योषिताम् ॥ १६ ॥**
**बाले देशान्तरस्थे च पतिते च मुनौ मृते । सद्यश्शौचं तथेच्छातो जलाग्न्युद्बंधनादिषु ॥ १७ ॥**

---

## अथ त्रयोदशोऽध्यायः



युग्मानिति ॥ सव्यक्रमात्—प्रदक्षिणक्रमात् ॥ १, २ ॥ दध्यक्षतैरिति ॥ कायेन—प्राजापत्येन ॥ ३—६ ॥

पितृपूजेति ॥ वृद्धौ—अभ्युदयश्राद्धे । प्रेतकर्म—प्रेतदेहस्नापनदहनादि । क्रियाविधिः—पिण्डोदकदानादिः ॥ ७ ॥ प्रेतदेहमिति ॥ स्नानैः—स्नानसाधनकैः ॥ ८ ॥ यत्रेति ॥ अमुकशब्दस्तत्तद्गोत्रनामोपलक्षकः ॥ ९ ॥

प्रविष्टा इति ॥ गोप्रवेशकाले वा नक्षत्रदर्शने वा प्रवेशः । कटकर्म—शवसंबंधमाशौचकृत्यं, प्रस्तरस्तृणादिशय्या ॥ १० ॥ दातव्य इति ॥ अनुदिनं—यावदाशौचम् ॥ ११—१४ ॥

योग्या इति ॥ सर्वक्रियाः—संध्योपासनादिकाः ॥ १५, १६ ॥

बाल इति ॥ इच्छात इति विशेषणात् अकामतस्तु जलादिभिः मृतानां यथोक्तमाशौचादिकं कार्यमेव, * यदि कश्चित्प्रमादेन म्रियेताग्न्युदकादिभिः । तत्राशौचं विधातव्यं कर्तव्या चोदकक्रिया ॥ * इति स्मृतेः ॥ १७ ॥

मृतबन्धोर्दशाहानि कुलस्यान्नं न भुज्यते । दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्तते ॥ १८ ॥
विप्रस्यैतद्द्वादशाहं राजन्यस्याप्यशौचकम् । अर्द्धमासं तु वैश्यस्य मासं शूद्रस्य शुद्धये ॥ १९ ॥
अयुजो भोजयेत्कामं द्विजानन्ते ततो दिने । दद्याद्दर्भेषु पिण्डं च प्रेतायोच्छिष्टसन्निधौ ॥ २० ॥
वार्यायुधप्रतोदास्तु दण्डश्च द्विजभोजनात् । स्प्रष्टव्योऽनन्तरं वर्णैः शुद्ध्येरंस्ते ततः क्रमात् ॥ २१ ॥
ततस्सवर्णधर्मा ये विप्रादीनामुदाहृताः । तान्कुर्वीत पुमाञ्जीवेन्निजधर्मार्जनैस्तथा ॥ २२ ॥
मृताहनि च कर्तव्यमेकोद्दिष्टमतः परम् । आह्वानादिक्रियादैवनियोगरहितं हि तत् ॥ २३ ॥
एकोऽर्घ्यस्तत्र दातव्यस्तथैवैकपवित्रकम् । प्रेताय पिण्डो दातव्यो भुक्तवत्सु द्विजातिषु ॥ २४ ॥
प्रश्नश्च तत्राभिरतिर्यजमानद्विजन्मनाम् । अक्षय्यममुकस्येति वक्तव्यं विरतौ तथा ॥ २५ ॥
एकोद्दिष्टमयो धर्म इत्थमावत्सरात्स्मृतः । सपिण्डीकरणं तस्मिन्काले राजेन्द्र तच्छृणु ॥ २६ ॥
एकोद्दिष्टविधानेन कार्यं तदपि पार्थिव । संवत्सरेऽथ षष्ठे वा मासे वा द्वादशेऽह्नि तत् ॥ २७ ॥
तिलगंधोदकैर्युक्तं तत्र पात्रचतुष्टयम् ॥ २८ ॥
पात्रं प्रेतस्य तत्रैकं पैत्रं पात्रत्रयं तथा । सेचयेत्पितृपात्रेषु प्रेतपात्रं ततस्त्रिषु ॥ २९ ॥
ततः पितृत्वमापन्ने तस्मिन्प्रेते महीपते । श्राद्धधर्मैरशेषैस्तु तत्पूर्वानर्चयेत्पितॄन् ॥ ३० ॥
पुत्रः पौत्रः प्रपौत्रो वा भ्राता वा भ्रातृसन्ततिः । सपिण्डसन्ततिर्वापि क्रियार्हो नृप जायते ॥ ३१ ॥
तेषामभावे सर्वेषां समानोदकसन्ततिः । मातृपक्षसपिण्डेन संबंधा ये जलेन वा ॥ ३२ ॥
कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्याः क्रिया नृप । पितृमातृसपिण्डैस्तु समानसलिलैस्तथा ॥ ३३ ॥
(तत्संघातस्थितैर्वाऽपि) संघातान्तर्गतैर्वाऽपि कार्याः प्रेतस्य च क्रियाः ।
उत्सन्नबन्धो रिक्थाद्वा कारयेदवनीपतिः ॥ ३४ ॥
पूर्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः । त्रिःप्रकाराः क्रियास्सर्वास्तासां भेदं शृणुष्व मे ॥३५॥
(आदाहवार्यायुधादि) आदाहाद्यादशाहाश्च स्पर्शाद्यन्तास्तु याः क्रियाः ।
ताः पूर्वा मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः ॥ ३६ ॥

---

मृतबन्धोरिति ॥ मृतो बन्धुर्यत्र कुले तन्मृतबंधु तस्य कुलस्य ॥ १८ ॥
विप्रस्येति ॥ एतत्—प्रागुक्तं दशाहाशौचम् ॥ १९ ॥
अयुज इति ॥ अन्त्ये—आशौचानन्तरदिने, * आद्यमेकादशेऽहनि * इति स्मृतेः ॥ २०–२२ ॥
मृताहनीति॥ आह्वानादीत्यादिशब्दादग्नौकरणादि ग्राह्यम्। दैवनियोगो वैश्वदेविकविप्रामंत्रणम्॥२३,२४॥
प्रश्नश्चेति ॥ अभिरम्यतामिति यजमानेन प्रष्टव्यं, द्विजैश्चाभिरताःस्म इति प्रतिवक्तव्यम् ॥ २५ ॥
एकोद्दिष्टमय इति ॥ तस्मिन् काले—संवत्सरेऽतीते ॥ २६–२९ ॥
तत इति ॥ श्राद्धधर्मैः—पार्वणाद्यैः। तत्पूर्वान्—सः पूर्वो येषां तान् सपिंडीकृतप्रमुखान्॥३०–३३॥
संघातेति ॥ तत्संघातः—तस्य मृतस्य सार्थः ॥ ३४–३८ ॥

प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु । क्रियन्ते याः क्रियाः पित्र्या प्रोच्यन्ते ता नृपोत्तराः ॥३७॥
पितृमातृसपिण्डैस्तु समानसलिलैस्तथा । संघातान्तर्गतैर्वाऽपि राज्ञा वा धनहारिणा ॥ ३८ ॥
पूर्वाः क्रियास्तु कर्तव्याः पुत्राद्यैरेव चोत्तराः । दौहित्रैर्वा नृपश्रेष्ठ कार्यास्तत्तनयैस्तथा ॥ ३९ ॥
मृताहनि च कर्तव्यास्त्रीणामप्युत्तराः क्रियाः । प्रतिसंवत्सरं राजन्नेकोद्दिष्टविधानतः ॥ ४० ॥
तस्मादुत्तरसंज्ञा याः क्रियास्ताः शृणु पार्थिव । यदायदा च कर्तव्या विधिना येन चानघ ॥ ४१ ॥

इति श्रीविष्णुपुराणे तृतीयेंशे त्रयोदशोध्यायः ॥ १३ ॥

---

## अथ चतुर्थदशोऽध्यायः

और्वः—ब्रह्मेन्द्ररुद्रनासत्यसूर्याग्निवसुमारुतान् । विश्वेदेवान्पितृगणान्वयांसि मनुजान्पशून् ॥ १ ॥
सरीसृपानृषिगणान्यच्चान्यद्भूतसंज्ञितम् । श्राद्धं श्रद्धान्वितः कुर्वन्प्रीणयत्यखिलं जगत् ॥ २ ॥
मासिमास्यसिते पक्षे पंचदश्यां नरेश्वर । तथाऽष्टकासु कुर्वीत काम्यान्कालाञ्छृणुष्व मे ॥ ३ ॥
श्राद्धार्हमागतं द्रव्यं विशिष्टमथ वा द्विजम् । श्राद्धं कुर्वीत विज्ञाय व्यतीपातेऽयने तथा ॥ ४ ॥
विषुवे चापि संप्राप्ते ग्रहणे शशिसूर्ययोः । समस्तेष्वेव भूपाल राशिष्वर्के च गच्छति ॥ ५ ॥
नक्षत्रग्रहपीडासु दुष्टस्वप्नावलोकने । इच्छाश्राद्धानि कुर्वीत नवसस्यागमे तथा ॥ ६ ॥
अमावास्या यदा मैत्रविशाखास्वातियोगिनी । श्राद्धैः पितृगणस्तृप्तिं तथाऽप्नोत्यष्टवार्षिकीम् ॥ ७ ॥
अमावास्या यदा पुष्ये रौद्रेऽथर्क्षे पुनर्वसौ । द्वादशाब्दं तदा तृप्तिं प्रयान्ति पितरोऽर्चिताः ॥ ८ ॥
वासवाजैकपादर्क्षे पितृणां तृप्तिमिच्छताम् । वारुणे वाऽप्यमावास्या देवानामपि दुर्लभा ॥ ९ ॥
नवस्वृक्षेष्वमावास्या यदैतेष्ववनीपते । तदा हि तृप्तिदं श्राद्धं पितृणां शृणु चापरम् ॥ १० ॥

---

पूर्वा इति ॥ पूर्वाः क्रियास्त्वित्यत्र पूर्वशब्देन मध्यमानामपि ग्रहणम ॥ ३९–४१ ॥

इति श्रीविष्णुचित्तीये विष्णुपुराणव्याख्याने तृतीयेंशे त्रयोदशोऽध्यायः ॥ १३ ॥

---

## अथ चतुर्दशोऽध्यायः

१, २ ॥ मासीति ॥ अथोक्तक्रियाणां कालः । अष्टकासु—* हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणाम अष्टमीष्वष्टकाः * इत्याश्वलायनोक्तमपरपक्षे कृष्णपक्षसप्तम्यादास्तिस्रस्तिस्रोऽष्टका इत्युक्तास्तासु ॥ ३–५ ॥

नक्षत्रेति ॥ इच्छाश्राद्धानि—काम्यश्राद्धानि ॥ ६ ॥ अमावास्येति ॥ मैत्रम्—अनुराधा ॥ ७, ८ ॥

वासवेति ॥ वासवं—धनिष्ठा । अजैकपात्—पूर्वाभाद्रपदा । वारुणं—शतभिषक् ॥ ९, १० ॥

गीतं सनत्कुमारेण ययैलाय महात्मने । पृच्छते पितृभक्ताय प्रश्रयावनताय च ॥ ११ ॥
सनत्कुमारः—वैशाखमासस्य च या तृतीया नवम्यसौ कार्तिकशुक्लपक्षे ।
नभस्यमासस्य च कृष्णपक्षे त्रयोदशी पंचदशी च माघे ॥ १२ ॥
एता युगाद्याः कथिताः पुराणेष्वनन्तपुण्यास्तिथयश्चतस्रः ।
उपप्लवे चंद्रमसो रवेश्च त्रिष्वष्टकास्वप्ययनद्वये च ॥ १३ ॥
पानीयमप्यत्र तिलैर्विमिश्रं दद्यात्पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समासहस्रं रहस्यमेतत्पितरो वदन्ति ॥ १४ ॥
माघेऽसिते पंचदशी कदाचिदुपैति योगं यदि वारुणेन ।
ऋक्षेण कालस्स परः पितॄणां न ह्यल्पपुण्यैर्नृप लभ्यतेऽसौ ॥ १५ ॥
काले धनिष्ठा यदि नाम तस्मिन्भवेत्तु भूपाल तदा पितृभ्यः ।
दत्तं जलान्नं प्रददाति तृप्तिं वर्षायुतं तत्कुलजैर्मनुष्यैः ॥ १६ ॥
तत्रैव चेद्भाद्रपदास्तु पूर्वाः काले यदा तत्क्रियते पितृभ्यः ।
श्राद्धं परां तृप्तिमुपैति तेन युगं सहस्रं पितरस्स्वपन्ति ॥ १७ ॥
गंगां शतद्रूं यमुनां विपाशां सरस्वतीं नैमिशगोमतीं वा ।
तत्रावगाह्यार्चनमादरेण कृत्वा पितॄणां दुरितानि हन्ति ॥ १८ ॥
गायन्ति चैतत्पितरः कदा नु वर्षामघातृप्तिमवाप्य भूयः ।
माघासितान्ते शुभतीर्थतोयैर्यास्याम तृप्तिं तनयादिदत्तैः ॥ १९ ॥
चित्तं च वित्तं च नृणां विशुद्धं शस्तश्च कालः कथितो विधिश्च ।
पात्रं यथोक्तं परमा च भक्तिर्नृणां प्रयच्छन्त्यभिवाञ्छितानि ॥ २० ॥
पितृगीतांस्तथैवात्र श्लोकांस्ताञ्छृणु पार्थिव । श्रुत्वा तथैव भवता भाव्यं तत्राद्दतात्मना ॥ २१ ॥
अपि धन्यः कुले जायेदस्माकं मतिमान्नरः । अकुर्वन्वित्तशाठ्यं यः पिण्डान्नो निर्वपिष्यति ॥ २२ ॥
रत्नं वस्त्रं महायानं सर्वभोगादिकं वसु । विभवे सति विप्रेभ्यो योऽस्मानुद्दिश्य दास्यति ॥ २३ ॥
अन्नेन वा यथाशक्त्या कालेऽस्मिन्भक्तिनम्रधीः । भोजयिष्यति विप्राग्र्यांस्तन्मात्रविभवो नरः ॥२४॥
असमर्थोऽन्नदानस्य धान्यमामं स्वशक्तितः । प्रदास्यति द्विजाग्रेभ्यः स्वल्पाल्पां वाऽपि दक्षिणाम्॥२५॥
तत्राप्यसामर्थ्ययुतः कराग्राग्रस्थितांस्तिलान् । प्रणम्य द्विजमुख्याय कस्मैचिद्भूप दास्यति ॥ २६ ॥
तिलैस्सप्ताष्टभिर्वापि समवेतं जलांजलिम् । भक्तिनम्रस्समुद्दिश्य भुव्यस्माकं प्रदास्यति ॥ २७ ॥

---

गीतमिति ॥ ऐलः—पुरूरवाः ॥ ११, १२ ॥ एता इति ॥ त्रिषु—तिसृषु ॥ १३—१८ ॥
गायन्तीति ॥ वर्षामघेति नभस्य कृष्णपक्षे मघायुक्तत्रयोदशीनिर्देशः ॥ १९—२१ ॥
अपि धन्य इति ॥ जायेत्—जायेत ॥ २२—२४ ॥
असमर्थ इति । धान्यमविकृतं विकृतं च; आमम्—अपक्वम् ॥ २५—२७ ॥

यतःकुतश्चित्संप्राप्य गोभ्यो वाऽपि गवाह्निकम् । अभावे प्रीणयन्नस्माञ्छ्रद्धायुक्तः प्रदास्यति ॥ २८ ॥
सर्वाभावे वनं गत्वा कक्षमूलप्रदर्शकः । सूर्यादिलोकपालानामिदमुच्चैर्वदिष्यति ॥ २९ ॥

न मेऽस्ति वित्तं न धनं च नान्यच्छ्राद्धोपयोग्यं स्वपितॄन्नतोऽस्मि ।
तृप्यन्तु भक्त्या पितरो मयैतौ कृतौ भुजौ वर्त्मनि मारुतस्य ॥ ३० ॥

और्वः—इत्येतत्पितृभिर्गीतं भावाभावप्रयोजनम् । यः करोति कृतं तेन श्राद्धं भवति पार्थिव ॥ ३१ ॥

इति श्रीविष्णुपुराणे तृतीयेंऽशे चतुर्दशोऽध्यायः ॥ १४ ॥

## अथ पञ्चदशोऽध्यायः

और्वः—ब्राह्मणान्भोजयेच्छ्राद्धे यद्गुणांस्तान्निबोध मे ॥ १ ॥
त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णष्षडंगवित् । वेदविच्छ्रोत्रियो योगी तथा वै ज्येष्ठसामगः ॥ २ ॥
ऋत्विक्स्वस्रीयदौहित्रजामातृश्वशुरास्तथा । मातुलोऽथ तपोनिष्ठः पञ्चाग्न्यभिरतस्तथा ।
शिष्यास्संबंधिनश्चैव मातापितृपरश्च यः ॥ ३ ॥
एतान्नियोजयेच्छ्राद्धे पूर्वोक्तान्प्रथमे नृप । ब्राह्मणान्पितृतुष्टयर्थमनुकल्पेष्वनन्तरान् ॥ ४ ॥

---

यत इति ॥ गवाह्निकं—गोरेकाहतुष्टिकरणं तृणादि ॥ २८ ॥

सर्वेति ॥ कक्षमूलप्रदर्शकः—नैर्धन्यप्रकटनार्थमुत्क्षिप्तभुजः ॥ २९ ॥

न मेऽस्तीति ॥ धनं जीवधनम् । अन्यद्धान्यादि ॥ ३० ॥

इत्येतदिति ॥ भावाभावप्रयोजनं—शक्तावयं प्रयोज्यः प्रयोगः असंभवे त्वयमिति शक्त्यशक्तिप्रयुक्तं कृत्यम् ॥ ३१ ॥

इति श्रीविष्णुचित्तीये विष्णुपुराणव्याख्याने तृतीयेंशे चतुर्दशोऽध्यायः ॥ १४ ॥

## अथ पञ्चदशोऽध्यायः

त्रिणाचिकेत इति ॥ द्वितीयकाठकस्थानुवाकविशेषास्त्रिणाचिकेतः, तदध्यायी तदर्थानुष्ठायी च त्रिणाचिकेतः । मधुवाता इति त्र्यचामध्यायी तद्व्रतस्त्रिमधुः । छान्दोग्योक्तमधुविद्यानिष्ठो वा । * ब्रह्ममेतुमामित्यनुवाकत्रयाध्यायी तद्व्रतश्च त्रिसुपर्णः । [चतुर्वर्गेत्र्यर्चाध्यायी] । योगी—ब्रह्माध्यायी । * मूर्द्धानं दिव इत्यादृग्विशेषगीतम् आज्यदोहमित्यादिपरिभाषितस्सामविशेषो ज्येष्ठसाम, तद्यथाव्रत गायतीति ज्येष्ठसामगः । [ऋतनिधनादिपरिभाषाविशेषितं * मूर्धानं दिव इत्यादिऋग्विशेषितं साम ।] सामत्रयादिसामशाखानाम् । जैमिनीयानां तु * उदुत्यं चित्रमित्यृचोत्पन्नं साम त्रेधा सभ्यावसभ्यौ द्वौ चेति पञ्चाग्नयः । सावित्रनाचिकेतचातुर्होत्र्यवैश्वसृजारुणकेतुकास्तेषामुपासकः, वेदान्तोक्तपञ्चाग्निविद्यायुक्तो वा ॥ १—३ ॥

एतानिति पूर्वोक्तान [illegible] प्रथमं नियोजयेत्—निमन्त्रयेत् । तेषामभावे अनन्तरान् तद्गुणान् संबंधिनोऽपि ऋत्विगादीन् अनुकल्पेषु ॥ ४ ॥

त्रधुकुनखी क्लीबश्श्यावदन्तस्तथा द्विजः । कन्यादूषयिता वह्निवेदोज्झस्सोमविक्रयी ॥ ५ ॥
भिशस्तस्तथा स्तेनः पिशुनो ग्रामयाजकः । भृतकाध्यापकस्तद्वद्भृतकाध्यापितश्च यः ॥ ६ ॥
पूर्वापतिश्चैव मातापित्रोस्तथोज्झकः । वृषलीसूतिपोष्टा च वृषलीपतिरेव च ॥ ७ ॥
तथा देवलकश्चैव श्राद्धे नार्हन्ति केतनम् ॥ ८ ॥
थमेऽह्नि बुधश्शस्ताञ्छ्रोत्रियादीन्निमन्त्रयेत् । कथयेच्च तथैवैषां नियोगान्पितृदैविकान् ॥ ९ ॥
तः क्रोधव्यवायादीनायासं तैर्द्विजैस्सह । यजमानो न कुर्वीत दोषस्तत्र महानयम् ॥ १० ॥
ाद्धे नियुक्तो भुक्त्वा वा भोजयित्वा नियुज्य च । व्यवायी रेतसो गर्ते मज्जयत्यात्मनः पितॄन् ॥११॥
स्मात्प्रथममत्रोक्तं द्विजाग्र्याणां निमन्त्रणम् । अनिमन्त्र्य द्विजानेवमागतान्भोजयेद्यतीन् ॥ १२ ॥
पादशौचादिना गेहमागतान्पूजयेद्द्विजान् ॥ १३ ॥
वित्रपाणिराचान्तानासनेषूपवेशयेत् । पितॄणामयुजो युग्मान्देवानामिच्छया द्विजान् ॥ १४ ॥
देवानामेकमेकं वा पितॄणां च नियोजयेत् ॥ १५ ॥
था मातामहश्राद्धं वैश्वदेवसमन्वितम् । कुर्वीत भक्तिसंपन्नस्तन्त्रं वा वैश्वदैविकम् ॥ १६ ॥
ाङ्मुखान्भोजयेद्विप्रान्देवानामुभयात्मकान् । पितृमातामहानां च भोजयेच्चाप्युदङ्मुखान् ॥ १७ ॥
ृथक्तयोः केचिदाहुः श्राद्धस्य करणं नृप । एकत्रैकेन पाकेन वदन्त्यन्ये महर्षयः ॥ १८ ॥
विष्टरार्थं कुशं दत्वा संपूज्यार्घ्यविधानतः । कुर्यादावाहनं प्राज्ञो देवानां तदनुज्ञया ॥ १९ ॥
यवाम्बुना च देवानां दद्यादर्घ्यं विधानवित् । स्रग्गन्धधूपदीपांश्च तेभ्यो दद्याद्यथाविधि ॥ २० ॥
पितॄणामपसव्यं तत्सर्वमेवोपकल्पयेत् । अनुज्ञां च ततः प्राप्य दत्त्वा दर्भान्द्विधाकृतान् ॥ २१ ॥
मन्त्रपूर्वं पितॄणां तु कुर्यादावाहनं बुधः । तिलाम्बुना चापसव्यं दद्यादर्घ्यादिकं नृप ॥ २२ ॥
काले तत्रातिथिं प्राप्तमन्नकामं नृपाध्वगम् । ब्राह्मणैरभ्यनुज्ञातः कामं तमपि भोजयेत् ॥ २३ ॥
योगिनो विविधै रूपैर्नराणामुपकारिणः । भ्रमन्ति पृथिवीमेतामविज्ञातस्वरूपिणः ॥ २४ ॥
तस्मादभ्यर्चयेत्प्राप्तं श्राद्धकालेऽतिथिं बुधः । श्राद्धक्रियाफलं हन्ति नरेन्द्रापूजितोऽतिथिः ॥ २५ ॥

मित्रध्रुगिति ॥ निसर्गात् कुनखी कृष्णदन्तश्च ॥ ५ ॥
अभिशस्त इति ॥ सत्येन वाऽसत्येन वा महापातकेनाभिशप्तः ॥ ६ ॥
परपूर्वेति ॥ परपूर्वा—पुनर्भूः, वह्निवेदोज्झकः अकारणात् ॥ ७ ॥
तथेति ॥ देवलकः—रुद्रकाल्याद्युपजीवकः । केतनम् निमन्त्रणम् ॥ ८, ९ ॥
[प्रथमेऽह्नीत्यादिद्वयोरेकं वाक्यम् ।] तत इति ॥ द्विजैस्सह न कुर्वीत—द्विजाश्च न कुर्वीरन् इत्यर्थः ॥ ॥ १०, ११ ॥ तस्मादिति । यतीन्—नियतेन्द्रियान् ॥ १२—१५ ॥
तथेति ॥ तन्त्रं—सकृदनुष्ठानम्; पितृमातामहवर्गश्राद्धयोरेकमेव वैश्वदेवमित्यर्थः ॥ १६ ॥
प्राङ्मुखानिति ॥ उभयात्मकान्—पितृमातामहवर्गान् ॥ १७—२५ ॥

जुहुयाद्व्यंजनक्षारवर्जमन्नं ततोऽनले । अनुज्ञातो द्विजैस्तैस्तु त्रिकृत्वः पुरुषर्षभ ॥ २६ ॥
अग्नये कव्यवाहाय स्वधेत्यादौ नृपाहुतिः । सोमाय वै पितृमते दातव्या तदनन्तरम् ॥ २७ ॥
वैवस्वताय चैवान्या तृतीया दीयते ततः । हुतावशिष्टमल्पान्नं विप्रपात्रेषु निर्वपेत् ॥ २८ ॥
ततोऽन्नं मृष्टमत्यर्थमभीष्टमतिसत्कृतम् । दत्वा जुषध्वमिच्छातो वाच्यमेतदनिष्ठुरम् ॥ २९ ॥
भोक्तव्यं तैश्च तच्चित्तैर्मौनिभिस्सुमुखैः सुखम् । अक्रुद्ध्यता चात्वरता देयं तेनापि भक्तितः ॥ ३० ॥
रक्षोघ्नमंत्रपठनं भूमेरास्तरणं तिलैः । कृत्वा ध्येयास्स्वपितरस्त एव द्विजसत्तमाः ॥ ३१ ॥
पिता पितामहश्चैव तथैव प्रपितामहः । मम तृप्तिं प्रयान्त्वद्य विप्रदेहेषु संस्थिताः ॥ ३२ ॥
पिता पितामहश्चैव तथैव प्रपितामहः । मम तृप्तिं प्रयान्त्वद्य होमाप्यायितमूर्तयः ॥ ३३ ॥
पिता पितामहश्चैव तथैव प्रपितामहः । तृप्तिं प्रयान्तु पिंडेन मया दत्तेन भूतले ॥ ३४ ॥
पिता पितामहश्चैव तथैव प्रपितामहः । तृप्तिं प्रयान्तु मे भक्त्या यन्मयैतदुदाहृतम् ॥ ३५ ॥

मातामहस्तृप्तिमुपैतु तस्य तथा पिता तस्य पिता तु योऽन्यः ।
विश्वे च देवाः परमां प्रयान्तु तृप्तिं प्रणश्यन्तु च यातुधानाः ॥ ३६ ॥
यज्ञेश्वरो हव्यसमस्तकव्यभोक्ताऽव्ययात्मा हरिरीश्वरोऽत्र ।
तत्संनिधानादपयान्तु सद्यो रक्षांस्यशेषाण्यसुराश्च सर्वे ॥ ३७ ॥

तृप्तेष्वेतेषु विकिरेदन्नं विप्रेषु भूतले । दद्यादाचमनार्थाय तेभ्यो वारि सकृत्सकृत् ॥ ३८ ॥
सुतृप्तैस्तैरनुज्ञातस्सर्वेणान्नेन भूतले । सतिलेन ततः पिंडान्सम्यग्दद्यात्समाहितः ॥ ३९ ॥
पितृतीर्थेन सलिलं तथैव सलिलाञ्जलिम् । मातामहेभ्यस्तेनैव पिण्डांस्तीर्थेन निर्वपेत् ॥ ४० ॥
दक्षिणाग्रेषु दर्भेषु पुष्पधूपादिपूजितम् । स्वपित्रे प्रथमं पिण्डं दद्यादुच्छिष्टसन्निधौ ॥ ४१ ॥
पितामहाय चैवान्यं तत्पित्रे च तथाऽपरम् । दर्भमूले लेप(भा)भुजः प्रीणयेल्लेपघर्षणैः ॥ ४२ ॥
पिण्डैर्मातामहांस्तद्वद्गन्धमाल्यादिसंयुतैः । पूजयित्वा द्विजाग्र्याणां दद्याच्चाचमनं ततः ॥ ४३ ॥
पितृभ्यः प्रथमं भक्त्या तन्मनस्को नरेश्वर । सुस्वधेत्याशिषा युक्तां दद्याच्छक्त्या च दक्षिणाम् ॥४४॥
दत्त्वा च दक्षिणां तेभ्यो वाचयेद्वैश्वदेविकान् । प्रीयन्तामिह ये विश्वेदेवास्तेन इतीरयेत् ॥ ४५ ॥
तथेति चोक्ते तैर्विप्रैः प्रार्थनीयास्तथाऽऽशिषः । पश्चाद्विसर्जयेद्देवान्पूर्वं पैत्र्यान्महीपते ॥ ४६ ॥
मातामहानामप्येवं सह देवैः क्रमः स्मृतः । भोजने च स्वशक्त्या च दाने तद्वद्विसर्जने ॥ ४७ ॥
आपादशौचनात्पूर्वं कुर्याद्देवद्विजन्मसु । विसर्जनं तु प्रथमं पैत्रमातामहेषु वै ॥ ४८ ॥

---

जुहुयादिति ॥ व्यंजनं—शाकादि, क्षारं—मरीचलवणादि ॥ २६—४१ ॥

पितामहायेति ॥ लेप(भा)भुजः—चतुर्थादीन्, * लेपभाजश्चतुर्थाद्याः पित्राद्याः पिंडभागिनः * इति स्मृतेः ॥ ४२—४७ ॥

आपादेति ॥ वैश्वदेवतंत्रपक्षे पूर्वं वैश्वदेविकान् द्विजानर्चयेत्; ततः पितृवर्गान्, ततो मातामहादीन् । विसर्जनं तु प्रथमं पितॄणां ततो मातामहादीनामित्यर्थः ॥ ४८ ॥

विसर्जयेत्प्रीतिवचस्संमानाभ्युत्थितांस्ततः । निवर्त्तेताभ्यनुज्ञात आद्वारं नाननुव्रजेत् ॥ ४९ ॥
ततस्तु वैश्वदेवाख्यं कुर्यान्नित्यक्रियां बुधः । भुञ्जीयाच्च समं पूज्यभृत्यबन्धुभिरात्मनः ॥ ५० ॥
एवं श्राद्धं बुधः कुर्यात्पैत्र्यं मातामहं तथा । श्राद्धैराप्यायिता दद्युस्सर्वान्कामान्पितामहाः ॥ ५१ ॥
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः । रजतस्य कथा दानं तथा संदर्शनादिकम् ॥ ५२ ॥
वर्ज्यानि कुर्वता श्राद्धं क्रोधोऽध्वगमनं त्वरा । भोक्तुरप्यत्र राजेन्द्र त्रयमेतन्न शस्यते ॥ ५३ ॥
विश्वेदेवास्सपितरस्तथा मातामहा नृप । कुलं चाप्यायते पुंसां सर्वं श्राद्धं प्रकुर्वताम् ॥ ५४ ॥
सोमाधारः पितृगणो योगाधारश्च चन्द्रमाः । श्राद्धे योगिनियोगस्तु तस्माद्भूपाल शस्यते ॥ ५५ ॥
सहस्रस्यापि विप्राणां योगी चेत्पुरतः स्थितः । सर्वान्भोक्तॄंस्तारयति यजमानं तथा नृप ॥ ५६ ॥

इति श्रीविष्णुपुराणे तृतीयेंशे पंचदशोऽध्यायः ॥ १५ ॥

---

विसर्जयेदिति ॥ ततस्संमान्याभ्यर्थितान् देवान् विसर्जयेत् । दौहित्रः उद्देश्यस्य । पितरो हि सप्त गणाः कन्यासंततिप्रधानाः ॥ ४९–५१ ॥

त्रीणीति ॥ कुतपः — दिवसस्याष्टमो मुहूर्तः । अन्ये च कुतपास्सन्ति * मध्याह्नः खड्गपात्रं च तथा नेपालकंबलः । रूप्यं दर्भास्तिला गावो दौहित्रश्चाष्टमः स्मृतः ॥ पापं कुत्सितमित्याहुस्तस्य संतापकारिणः । अष्टावेते यतस्तस्मात्कुतपा इति विश्रुताः ॥ * इति । रजतस्य कथा—कीर्तनम् । आदिशब्देन राजतपात्रादि गृह्यते ॥ ५२–५४ ॥

सोमाधार इति ॥ आधिकारिदेवता अग्निष्वात्ताद्याः वसुरुद्रादित्यरूपाः सन्ति । ते अस्मदादिनिमंत्रितविप्रान् आविश्य तन्मुखेन श्राद्धं भुक्त्वा तृप्तास्सन्तो नित्यं स्वयोगाप्यायितसोमद्वारा अस्मदादिपितॄंस्तल्लोकस्थान् तर्पयन्ति, कर्तॄंश्चास्मदादीन् कामैर्वर्द्धयन्ति । ते चाधिकारिपितृगणास्सप्त चत्वारो मूर्तिमन्तोऽत्र त्रयः येषां मूर्तयः तेऽपि योगबलेन सोममाप्याययन्ति । सोमोऽप्यस्मदादिपितॄणामाधारः पोषकश्च, तेषां च योगनिष्ठाः प्रिया इति श्राद्धे योगी निमंत्र्यः । तेनास्माकं पितृगणाः सोमाधाराः प्रागेवोक्ताः । स च सोमोऽधिकारिपितॄणां योगेन धार्यः । ते हि प्रजासर्गे नियुक्तत्वात् अग्नीसोमात्मकस्य जगतः सोमांशाधिक्यभावनया सृष्टिं पुष्णन्ति । एवमन्येऽपि योगिनः । तथा हरिवंशे भीष्मं प्रति शंतनूक्तिः — [* आदिदेवसुतास्तात पितरो दिवि देवताः ] * आदितेयास्तु ते तात पितरोऽदितिदेवताः ॥ तान्यजस्व महाभाग पितृश्राद्धैरतन्द्रितः ॥ ते हि श्रेयो विधास्यन्ति सर्वकामफलप्रदाः । त्वयैवाराध्यमानास्ते नामगोत्रादिकीर्तनैः ॥ अस्मानाप्याययिष्यन्ति स्वर्गस्थानपि भारत ॥ श्राद्धेषु ये प्रदास्यन्ति त्रीन्पिण्डान्नामगोत्रतः । सर्वत्र वर्तमानान्स्वान्पितॄनथ पितामहान् ॥ भावयिष्यन्ति सततं श्राद्धदानेन पूजिताः ॥ इति । तत्रैव देवान्प्रति ब्रह्मा * श्राद्धैराप्यायिताश्चैव पितरस्सोममव्ययम् । आपीयमानं युष्माभिर्वर्धयिष्यन्ति नित्यशः ॥ श्राद्धैराप्यायितस्सोमो लोकानाप्याययिष्यति । श्राद्धानि पुष्टिकामाश्च ये चरिष्यन्ति मानवाः ॥ तेभ्यः पुष्टिं प्रजाश्चैव दास्यन्ति पितरस्सदा ॥ इति । तत्रैव * एते हि पितरस्तात योगिनां योगवर्द्धनाः । आप्याययन्ति ये पूर्वं सोमं योगबलेन वै ॥ तस्माच्छ्राद्धानि देयानि योगिनां द्विजसत्तम ॥ इति । वायुप्रोक्ते च * श्राद्धैः प्रीताः पुनस्सोमं पितरो योगमाश्रिताः । आप्याययन्ति योगेन त्रैलोक्यं तेन जीवति ॥ इति ॥ ५५, ५६ ॥

इति श्रीविष्णुचित्तीये विष्णुपुराणव्याख्याने तृतीयेंशे पंचदशोऽध्यायः ॥ १५ ॥

## षोडशोऽध्यायः

और्वः—हविष्यमत्स्यमांसैस्तु शशस्य नकुलस्य च। सौकरच्छागलैणेयरौरवैर्गवयेन च ॥ १ ॥
औरभ्रगव्यैश्च तथा मासवृद्ध्या पितामहाः। प्रयान्ति तृप्तिं मांसैस्तु नित्यं वार्ध्रीणसामिषैः ॥ २ ॥
खड्गमांसमतीवात्र कालशाकं तथा मधु। शस्तानि कर्मण्यत्यन्ततृप्तिदानि नरेश्वर ॥ ३ ॥
गयामुपेत्य यः श्राद्धं करोति पृथिवीपते। सफलं तस्य तज्जन्म जायते पितृतुष्टिदम् ॥ ४ ॥
प्रशान्तिकास्सनीवाराश्श्यामाका द्विविधास्तथा। वन्यौषधीप्रधानास्तु श्राद्धार्हाः पुरुषर्षभ ॥ ५ ॥
यवाः प्रियंगवो मुद्गा गोधूमा व्रीहयस्तिलाः। निष्पावाः कोविदाराश्च सर्षपाश्चात्र शोभनाः ॥ ६ ॥
अकृताग्रयणं यच्च धान्यजातं नरेश्वर। राजमाषानणूंश्चैव मसूरांश्च विवर्जयेत् ॥ ७ ॥
अलाबुं गृंजनं चैव पलांडुं पिंडमूलकम्। गांधारककरंभाणि लवणान्यौषराणि च ॥ ८ ॥
आरक्ताश्चैव निर्यासाः प्रत्यक्षलवणानि च। वर्ज्यान्येतानि वै श्राद्धे यच्च वाचा न शस्यते ॥ ९ ॥
नक्ताहृतमनुच्छिष्टं तृप्यते न च यत्र गौः। दुर्गन्धि फेनिलं चांबु श्राद्धयोग्यं न पार्थिव ॥ १० ॥

---

### अथ षोडशोऽध्यायः

हविष्येति ॥ हविष्येणैकं मासं तृप्तिः, मत्स्येन द्वौ, मांसेन त्रीन् मासान्। अत्र मांसो हारिणादि, * त्रीन् मासान् हरिणेन तृप्तिरिति मनूक्तेः। छागलः—अजः, रुरुर्महान् कृष्णसारः ॥ १ ॥

औरभ्रेति ॥ उरभ्रः ऊर्णायुः। गव्यं पयः, पायसं वा * संवत्सरं तु गव्येन पयसा पायसेन वा * इति स्मृतेः। गव्यं मांसमित्यन्ये। संवत्सरं गव्येन प्रीतिर्भूयात्। अतो माहिषेणैतेन * ग्राम्यारण्यानां पशूनां मांसं मेध्यं पुण्यं पुण्यतमम् * इत्यापस्तंबोक्तिः। मासवृद्ध्या—एकाद्येकोत्तरं द्वादशमासान्तं मासवृद्ध्या तृप्तिः। * कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहंगमः। स वै वार्ध्रीणसः प्रोक्त इत्येषा नैगमी श्रुतिः ॥ इति, * त्रिः पिबन्तं पयः क्षीणं वृद्धं श्वेतमजापतिम्। वार्ध्रीणसं तु तं प्राहुः याज्ञिकाः श्राद्धकर्मणि ॥ इति च ॥ २ ॥

खड्गमांसमिति ॥ कालशाकः कैठर्यः ॥ ३, ४ ॥

प्रशान्तिका इति ॥ प्रशांतिकः कालयवाख्यधान्यविशेषः ॥ ५ ॥

यवा इति ॥ कोविदारः—कोद्रवः, युगपत्राख्यवृक्षो वा ॥ ६ ॥

अकृतेति ॥ राजमाषः, अणुः—क्षुद्रधान्यविशेषः ॥ ७ ॥

अलाब्विति ॥ मसूरं गृंजनं पलांडुश्च लशुनजातिविशेषः। पिंडमूलकं—कंदविशेषः। गांधारकः—सुगन्धशालिविशेषः। आरनालकमित्यन्ये। करंभः—भ्रष्टनिस्तुषधान्यचूर्णम्। लवणं—लवणोत्कटम् ॥ ८ ॥

आरक्ता इति ॥ निर्यासः—हिंग्वादि ॥ ९ ॥

नक्ताहृतमिति ॥ अनुच्छिष्टम्—अभिनवोदकम्। यद्वा अवत्सायाः पयः ॥ १० ॥

क्षीरमेकशफानां यदौष्ट्रमाविकमेव च। मार्गं च माहिषं चैव वर्जयेच्छ्राद्धकर्मणि ॥ ११ ॥
षण्डापविद्धचंडालपापिपाषण्डरोगिभिः। कृकवाकुश्वाननग्नवानरग्रामसूकरैः ॥ १२ ॥
उदक्यासूतिकाशौचमृतहारैश्च वीक्षिते। श्राद्धे सुरा न पितरो भुञ्जते पुरुषर्षभ ॥ १३ ॥
तस्मात्परिश्रिते कुर्याच्छ्राद्धं श्रद्धासमन्वितः। उर्व्यां च तिलविक्षेपाद्यातुधानान्निवारयेत् ॥ १४ ॥
नखादिना चोपपन्नं केशकीटादिभिर्नृप। न चैवाभिषवैर्मिश्रमन्नं पर्युषितं तथा ॥ १५ ॥
श्रद्धासमन्वितैर्दत्तं पितृभ्यो नामगोत्रतः। यदाहारास्तु ते जातास्तदाहारत्वमेति तत् ॥ १६ ॥
श्रूयते चापि पितृभिर्गीता गाथा महीपते। इक्ष्वाकोर्मनुपुत्रस्य कलापोपवने पुरा ॥ १७ ॥
अपि नस्ते भविष्यन्ति कुले सन्मार्गशीलिनः। गयामुपेत्य ये पिण्डान्दास्यन्त्यस्माकमादरात् ॥ १८ ॥
अपि नस्स कुले जातो यो नो दद्यात्त्रयोदशीम्। पायसं मधुसर्पिर्भ्यां वर्षासु च मघासु च ॥ १९ ॥
गौरीं वाऽप्युद्वहेत्कन्यां नीलं वा वृषमुत्सृजेत्। यजेत वाऽश्वमेधेन विधिवद्दक्षिणावता ॥ २० ॥

इति श्रीविष्णुपुराणे तृतीयेंशे षोडशोऽध्यायः ॥ १६ ॥

---

क्षीरमिति ॥ शफः—खुरः ॥ ११ ॥

षण्डेति ॥ अपविद्धः—गुरुद्विजादिबहिष्कृतः। नग्नः—वेदधर्मत्यागी ॥ १२ ॥

उदक्येति ॥ अशौचः—शौचहीनः। मृतहारः—शवोद्धारवृत्तिः ॥ १३ ॥

तस्मादिति ॥ परिश्रिते—संवृते ॥ १४ ॥

नखादिनेति ॥ अभिषवैः—निष्पीडितरसैः तंडुलजलैर्वा, मिश्रं न भुञ्जत इत्यनुषंगः ॥ १५ ॥

श्रद्धेति ॥ यदन्नं यन्नामगोत्रान् पितॄनुद्दिश्य दत्तं तल्लोकांतरस्थानामपि तत्तल्लोकतत्तज्जात्युचिताहारत्वेन परिणतं सत् भोगाय स्यात्। तद्यथा—ते पितरस्स्वर्गिणो जाताश्चेत्तत्रामृतं स्यात्, मनुष्याश्चेदन्नं, तिर्यञ्चश्चेत्तृणादि ॥ १६ ॥ श्रूयत इति ॥ कलापः—हिमवत्पार्श्वे कश्चिद्ग्रामविशेषः ॥ १७, १८ ॥

अपि न इति ॥ त्रयोदशीं—त्रयोदश्याम्। वर्षासु—भाद्रपदे। मघासु—मघानक्षत्रे। मघानक्षत्रयुक भाद्रपदकृष्णत्रयोदश्यामित्यर्थः ॥ १९ ॥

गौरीमिति ॥ उद्वहेत्—दद्यात्। * लोहितो यस्तु वर्णेन मुखे पुच्छे च पांडुरः। श्वेतः खुरविषाणाभ्यां स नीलो वृष उच्यते ॥ २० ॥

इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये तृतीयेंशे षोडशोऽध्यायः ॥ १६ ॥

## सप्तदशोऽध्यायः

श्रीपराशरः—

इत्याह भगवानौर्वस्सगराय महात्मने। सदाचारं पुरा सम्यङ्‌ मैत्रेय परिपृच्छते॥ १॥
मयाऽप्येतदशेषेण कथितं भवतो द्विज। समुल्लंघ्य सदाचारं कश्चिन्नाप्नोति शोभनम्॥ २॥
मैत्रेयः—षण्डापविद्धप्रमुखा (कथिता भगवंस्त्वया) विदिता भगवन्मया।
उदक्याद्याश्च मे सम्यङ्‌ नग्नमिच्छामि वेदितुम्॥ ३॥
को नग्नः किंसमाचारो नग्नसंज्ञां नरो लभेत्। नग्नस्वरूपमिच्छामि यथावत्कथितं त्वया।
श्रोतुं धर्मभृतां श्रेष्ठ न ह्यस्त्यविदितं तव॥ ४॥

श्रीपराशरः—

ऋग्यजुस्सामसंज्ञेयं त्रयी वर्णावृतिर्द्विज। एतामुज्झति यो मोहात्स नग्नः पातकी स्मृतः॥ ५॥
त्रयी समस्तवर्णानां द्विज संवरणं यतः। नग्नो भवत्युज्झितायां मतस्तस्यां न संशयः॥ ६॥
इदं च श्रूयतामन्यद्भीष्माय महात्मने। कथयामास धर्मज्ञो वसिष्ठोऽस्मत्पितामहः॥ ७॥
मयापि तस्य गदतश्श्रुतमेतन्महात्मनः। नग्नसंबंधि मैत्रेय यत्पृष्टोऽहमिह त्वया॥ ८॥
देवासुरमभूद्युद्धं द्विव्यमब्दशतं पुरा। तस्मिन्पराजिता देवा दैत्यैर्ह्रादपुरोगमैः॥ ९॥
क्षीरोदस्योत्तरं कूलं गत्वाऽतप्यन्त वै तपः। विष्णोराराधनार्थाय जगुश्चेमं स्तवं तदा॥ १०॥
देवाः—आराधनाय लोकानां विष्णोरीशस्य यां गिरम्। वक्ष्यामो भगवानद्य तया विष्णुः प्रसीदतु॥११॥
यतो भूतान्यशेषाणि प्र(भू)सूतानि महात्मनः। यस्मिंश्च लयमेष्यन्ति कस्तं स्तोतुमिहेश्वरः॥ १२॥
तथाऽप्यरातिविध्वंसध्वस्तवीर्याभयार्थिनः। त्वां स्तोष्यामस्तवोक्तीनां याथा(र्थ्यं)र्थ्यं नैव गोचरे॥१३॥
त्वमुर्वी सलिलं वह्निर्वायुराकाशमेव च। समस्तमन्तःकरणं प्रधानं तत्परः पुमान्॥ १४॥
एकं तवैतद्भूतात्मन्मूर्तामूर्तमयं वपुः। आब्रह्मस्तंबपर्यंतं स्थानकालविभेदवत्॥ १५॥
तत्रेशं तव यत्पूर्वं त्वन्नाभिकमलोद्भवम्। रूपं विश्वोपकाराय तस्मै ब्रह्मात्मने नमः॥ १६॥
शक्रार्करुद्रवस्वश्विमरुत्सोमादिभेदवत्। वयमेकं स्वरूपं ते तस्मै देवात्मने नमः॥ १७॥
दंभप्रायमसंबोधि तितिक्षादमवर्जितम्। यद्रूपं तव गोविंद तस्मै दैत्यात्मने नमः॥ १८॥

---

## अथ सप्तदशोऽध्यायः

त्रयीति॥ त्रयी न वस्त्रादिवदावरणमात्रं, किं तु संवरणं—सर्वदुःखनिवारकम्; अतस्तत्त्यागी नग्नः न तु दिगंबर इत्यर्थः॥ १—१२॥ तथापीति॥ तव याथा(र्थ्य)र्थ्यम् उक्तीनां न गोचर इत्यर्थः॥ १३॥

त्वमुर्वीति॥ समस्तमन्तःकरणं—मनोबुद्ध्यहंकाराः॥ १४॥

एकमित्यादि॥ स्थानकालविभेदवत्—स्थानकालविशेषाभ्यां युक्तम्। एतदिति जगन्निर्दिश्यते। एवंभूतं जगत्तवैकं वपुरित्यर्थः। जगत्सर्वं शरीरं ते, तव ब्रह्मात्मने नमः इत्यन्वयः। अत्रात्मशब्दो रूपवचनः॥१५—१८॥

नातिज्ञानवहा यस्मिन्नाड्यस्स्तिमिततेजसि । शब्दादिलोभि यत्तस्मै तुभ्यं यक्षात्मने नमः ॥ १९ ॥
क्रौर्यं मायामयं घोरं यच्च रूपं तवासितम् । निशाचरात्मने तस्मै नमस्ते पुरुषोत्तम ॥ २० ॥
स्वर्गस्थधर्मिसद्धर्मफलोपकरणं तव । धर्माख्यं च तथा रूपं नमस्तस्मै जनार्दन ॥ २१ ॥
हर्षप्रायमसंसर्गि गतिमद्गमनादिषु । सिद्धा(र्थे)ख्यं तव यद्रूपं तस्मै सिद्धात्मने नमः ॥ २२ ॥
अतितिक्षायनं क्रूरमुपभोगसहं हरे । द्विजिह्वं तव यद्रूपं तस्मै नागात्मने नमः ॥ २३ ॥
अवबोधि च यच्छान्तमदोषमपकल्मषम् । ऋषिरूपात्मने तस्मै विष्णुरूपाय ते नमः ॥ २४ ॥
भक्षयत्यथ कल्पान्ते भूतानि यदवारितम् । त्वद्रूपं पुण्डरीकाक्ष तस्मै कालात्मने नमः ॥ २५ ॥
संभक्ष्य सर्वभूतानि देवादीन्यविशेषतः । नृत्यत्यन्ते च यद्रूपं तस्मै रुद्रात्मने नमः ॥ २६ ॥
प्रवृत्त्या रजसो यच्च कर्मणां करणात्मकम् । जनार्दन नमस्तस्मै त्वद्रूपाय नरात्मने ॥ २७ ॥
अष्टविंशद्वधोपेतं यद्रूपं तामसं तव । उन्मार्गगामि सर्वात्मंस्तस्मै वश्यात्मने नमः ॥ २८ ॥
यज्ञाङ्गभूतं यद्रूपं जगतः स्थितिसाधनम् । वृक्षादिभेदैष्षड्भेदि तस्मै मुख्यात्मने नमः ॥ २९ ॥
तिर्यङ्मनुष्यदेवादिव्योमशब्दादिकं च यत् । रूपं तवादेः सर्वस्य तस्मै सर्वात्मने नमः ॥ ३० ॥

प्रधानबुद्ध्यादिमयादशेषाद्यदन्यदस्मात्परमं परात्मन् ।
रूपं तवाद्यं यदनन्यतुल्यं तस्मै नमः कारणकारणाय ॥ ३१ ॥
शुक्लादिदीर्घादिघनादिहीनमगोचरं यच्च विशेषणानाम् ।
शुद्धातिशुद्धं परमर्षिदृश्यं रूपाय तस्मै भगवन्नताः स्मः ॥ ३२ ॥

---

नातिज्ञानेति ॥ यक्षाणां नाड्यो हि नाधिकज्ञानवाहिन्यः । स्तिमिततेजसि—स्तब्धविवेके । नाड्य इति पाठे यस्मिन् यक्षरूपे नृत्तादिस्तब्धविवेके, जना नातिज्ञानधराः सन्तीत्यर्थः ॥ १९, २० ॥

स्वर्गस्थ इति ॥ स्वर्गस्थानां धर्मिणां-सुकृतिनां सद्धर्मफलस्य सुखादेर्यदुपकरणं प्रापकं धर्माख्यं रूपम् ॥ २१ ॥ हर्षप्रायमिति ॥ गतिमत्—गमनशीलं, गमनादिष्वसंसर्गि—अस्खलितम् ॥ २२ ॥

अतितिक्षायनमिति ॥ उपभोगसहम्—उपभोगसमर्थम् ॥ २३ ॥

अवबोधीति ॥ अदोषं— रागादिरहितम् । ऋषिरूपस्यात्मने । विष्णुरूपाय—व्यासरूपाय ॥२४—२६॥

प्रवृत्त्येति ॥ करणात्मकम्—अनुष्ठानात्मकम् । नरात्मने—मनुष्यरूपाय ॥ २७ ॥

अष्टाविंशदिति ॥ अष्टाविंशद्वधः प्रथमांशे उक्तः ॥ २८ ॥

यज्ञांगभूतमिति ॥ षड्भेदि— वृक्षगुल्मलतावीरुत्तृणगिरिभेदैः । दृषदुपलादीनामपि यज्ञांगत्वमस्ति । मुख्यात्मने । मुख्यत्वं च तत्रैवोक्तम् ॥ २९, ३० ॥

प्रधानेति ॥ प्रधानेत्यादिना समष्टिपुरुषरूपमुच्यते। कारणकारणाय—कारणमव्यक्तं तस्य कारणं पुरुषः * अव्यक्तमक्षरे लीयते * इति श्रुतेः ॥ ३१ ॥

मुक्तस्वरूपमाह—शुक्लेति ॥ प्रकृत्यपेक्षया शुद्धो बद्धः, तदपेक्षया मुक्तोऽतिशुद्धः ॥ ३२ ॥

यन्नः शरीरेषु यदन्यदेहेष्वशेषवस्तुष्वजम(व्य)क्षयं यत् ।
यस्माच्च नान्यद्व्यतिरिक्तमस्ति ब्रह्मस्वरूपाय नताः स्म तस्मै ॥ ३३ ॥

सकलमिदमजस्य यस्य रूपं परमपदात्मवतस्सनातनस्य ।
तमनिधनमशेषबीजभूतं प्रभुममलं प्रणतास्स्म वासुदेवम् ॥ ३४ ॥

श्रीपराशरः—

स्तोत्रस्य चावसाने ते ददृशुः परमेश्वरम् । शंखचक्रगदापाणिं गरुडस्थं सुरा हरिम् ॥ ३५ ॥
तमूचुस्सकला देवाः प्रणिपातपुरस्सरम् । प्रसीद नाथ दैत्येभ्यस्त्राहि नश्शरणार्थिनः ॥ ३६ ॥
त्रैलोक्ययज्ञभागाश्च दैत्यैर्ह्रादपुरोगमैः । हृता नो ब्रह्मणोऽप्याज्ञामुल्लंघ्य परमेश्वर ॥ ३७ ॥
यद्यप्यशेषभूतस्य वयं ते च तवांशजाः । तथाप्यविद्याभेदेन भिन्नं पश्यामहे जगत् ॥ ३८ ॥
स्ववर्णधर्माभिरता वेदमार्गानुसारिणः । न शक्यास्तेऽरयो हन्तुमस्माभिस्तपसा(न्वि)वृताः ॥ ३९ ॥
तमुपायमशेषात्मन्नस्माकं दातुमर्हसि । येन तानसुरान्हन्तुं भवेम भगवन्क्षमाः ॥ ४० ॥

श्रीपराशरः—

इत्युक्तो भगवांस्तेभ्यो मायामोहं शरीरतः । समुत्पाद्य ददौ विष्णुः प्राह चेदं सुरोत्तमान् ॥ ४१ ॥

श्रीभगवानुवाच—

मायामोहोऽयमखिलान्दैत्यांस्तान्मोहयिष्यति । ततो वध्या भविष्यन्ति वेदमार्गबहिष्कृताः ॥ ४२ ॥
स्थितौ स्थितस्य मे वध्या यावन्तः परिपंथिनः । ब्रह्मणो ह्यधिकारस्य देवा दैत्यादिकाः सुराः ॥४३॥
तद्गच्छत न भीः कार्या मायामोहोऽयमग्रतः । गच्छन्नद्योपकाराय भवतां भविता सुराः ॥ ४४ ॥

श्रीपराशरः—

इत्युक्ताः प्रणिपत्यैनं ययुर्देवा यथागतम् । मायामोहोऽपि तैस्सार्द्धं ययौ यत्र महासुराः ॥ ४५ ॥

इति श्रीविष्णुपुराणे तृतीयेंशे सप्तदशोऽध्यायः ॥ १७ ॥

---

परस्वरूपमाह—यन्न इति ॥ यस्मादन्यद्व्यतिरिक्तं नास्ति—पृथक्सिद्धमतदात्मकं यस्माद्व्यतिरिक्तं नास्तीत्यर्थः ॥ ३३ ॥

अन्यथा अन्यतरपदवैयर्थ्यं निगमयति—सकलमिति ॥ सकलं—सचेतनमिदं जगत् परमपदं तत्रत्या आत्मानश्च यस्य रूपं स परमपदात्मवान् । अनेन श्लोकेनोभयविभूतिमत्त्वमुक्तमित्यनुसंधेयम् । अशेष-बीजत्वम् अशेषरूपत्वहेतुः ॥ ३४—४५ ॥

इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये तृतीयेंशे सप्तदशोऽध्यायः ॥ १७ ॥

श्रीपराशरः—

तपस्यभिरतान्सोऽथ मायामोहो महासुरान् । मैत्रेय ददृशे गत्वा नर्मदातीरसंश्रितान् ॥ १ ॥

ततो दिगंबरो मुण्डो बर्हिपिच्छधरो द्विज । मायामोहोऽसुरान् श्लक्ष्णमिदं वचनमब्रवीत् ॥ २ ॥

मायामोहः—

हे दैत्यपतयो ब्रूत यदर्थं तप्यते तपः । ऐहिकार्थं नु पारत्र्यं तपसः फलमिच्छथ ॥ ३ ॥

असुरा :—

पारत्र्यफललाभाय तपश्चर्या महामते । अस्माभिरियमारब्धा किं वा तेऽत्र विवक्षितम् ॥ ४ ॥

मायामोह उवाच—

कुरुध्वं मम वाक्यानि यदि मुक्तिमभीप्सथ । अर्हध्वमेनं धर्मं च मुक्तिद्वारमसंवृतम् ॥ ५ ॥

धर्मो विमुक्तेरर्होऽयं नैतस्मादपरो वरः । अत्रैव संस्थिताः स्वर्गं विमुक्तिं वा गमिष्यथ ॥ ६ ॥

अर्हध्वं धर्ममेतं च सर्वे यूयं महाबलाः ॥ ७ ॥

श्रीपराशरः—

एवंप्रकारैर्बहुभिर्युक्ति(चोदन) दर्शनचर्चितैः । मायामोहेन ते दैत्या वेदमार्गादपाकृताः ॥ ८ ॥

धर्मायैतदधर्माय सदेतन्न सदित्यपि । विमुक्तये त्विदं नैतद्विमुक्तिं संप्रयच्छति ॥ ९ ॥

परमार्थोऽयमत्यर्थं परमार्थो न चाप्ययम् । कार्यमेतदकार्यं च नैतदेवं स्फुटं त्विदम् ॥ १० ॥

दिग्वाससामयं धर्मो धर्मोऽयं बहुवाससाम् ॥ ११ ॥

इत्यनेकान्तवादं च मायामोहेन नैकधा । तेन दर्शयता दैत्यास्स्वधर्मं त्याजिता द्विज ॥ १२ ॥

अर्हतैतं महाधर्मं मायामोहेन ते यतः । प्रोक्तास्तमाश्रिता धर्ममर्ह(न्त)तास्तेन तेऽभवन् ॥ १३ ॥

त्रयीधर्मसमुत्सर्गं मायामोहेन तेऽसुराः । कारितास्तन्मया ह्यासंस्ततोऽन्ये तत्प्रचोदिताः ॥ १४ ॥

तैरप्यन्ये परे तैश्च तैरप्यन्ये परे च तैः । अल्पैरहोभिस्संत्यक्ता तैर्दैत्यैः प्रायशस्त्रयी ॥ १५ ॥

---

## अथाष्टादशोऽध्यायः

धर्म इति ॥ अत्रैव—धर्मे ॥ १—७ ॥

एवमिति ॥ एवंप्रकारैः—नैतद्युक्तिसहमित्यादिना विवरिष्यमाणैः । युक्तिचोदनचर्चितैः—तर्कागमविचारैः । युक्तिर्दर्शनतर्कितैरिति पाठे, युक्तिर्योग्यता, दर्शनं प्रत्यक्षं, तर्कितं तर्कः ॥ ८ ॥

धर्मायेति ॥ धर्मायेत्यादिनैकधेत्यन्तं विकल्पोदाहरणसप्तकम् । सप्तधा ह्यनेकान्तवादिनामार्हतानां सप्तभंगी स्याद्वादः—स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादनिर्वचनीयं, स्यादस्ति चानिर्वचनीयं, स्यान्नास्ति चानिर्वचनीयं, स्यादस्ति च नास्ति चानिर्वचनीयमिति ॥ ९—१५ ॥

पुनश्च रक्तांबरधृङ्ग मायामोहो जितेन्द्रियः । अन्यानाहासुरान् गत्वा मृद्वल्पमधुराक्षरम् ॥ १६ ॥
स्वर्गार्थं यदि वो वाञ्छा निर्वाणार्थमथासुराः । तदलं पशुघातादिदुष्टधर्मैर्निबोधत ॥ १७ ॥
विज्ञानमयमेवैतदशेषमवगच्छत । बुध्यध्वं मे वचः सम्यग्बुधैरेवमिहोदितम् ॥ १८ ॥
जगदेतदनाधारं भ्रान्तिज्ञानार्थतत्परम् । रागादिदुष्टमत्यर्थं भ्राम्यते भवसंकटे ॥ १९ ॥
एवं बुध्यत बुध्यध्वं बुध्यतैवमितीरयन् । मायामोहः स दैतेयान्धर्ममत्याजयन्निजम् ॥ २० ॥
नानाप्रकारवचनं स तेषां युक्तियोजितम् । तथातथाऽवदद्धर्मं तत्यजुस्ते यथायथा ॥ २१ ॥
तेऽप्यन्येषां तथैवोचुरन्यैरन्ये तथोदिताः । मैत्रेय तत्यजुर्धर्मं वेदस्मृत्युदितं परम् ॥ २२ ॥
अन्यानप्यन्यपाषण्डप्रकारैर्बहुभिर्द्विज । दैतेयान्मोहयामास मायामोहोऽतिमोहकृत् ॥ २३ ॥
स्वल्पेनैव हि कालेन मायामोहेन तेऽसुराः । मोहितास्तत्यजुस्सर्वां त्रयीमार्गाश्रितां कथाम् ॥ २४ ॥
केचिद्विनिन्दां वेदानां देवानामपरे द्विज । यज्ञकर्मकलापस्य तथाऽन्ये च द्विजन्मनाम् ॥ २५ ॥
नैतद्युक्तिसहं वाक्यं हिंसा धर्माय चेष्यते । हवींष्यनलदग्धानि फलायेत्यर्भकोदितम् ॥ २६ ॥
यज्ञैरनेकैर्देवत्वमवाप्येन्द्रेण भुज्यते । शम्यादि यदि चेत्काष्ठं तद्वरं पत्रभुक्पशुः ॥ २७ ॥
निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते । स्वपिता यजमानेन किन्नु तस्मान्न हन्यते ॥ २८ ॥
तृप्तये जायते पुंसो भुक्तमन्येन चेत्ततः । दद्याच्छ्राद्धं श्रमायान्नं न वहेयुः प्रवासिनः ॥ २९ ॥
जनश्रद्धेयमित्येतदवगम्य ततोऽत्र वः । उपेक्षा श्रेयसे वाक्यं रोचतां यन्मयेरितम् ॥ ३० ॥

---

पुनरिति ॥ पुनश्चेति बौद्धमतारंभः ॥ १६, १७ ॥

विज्ञानमयमिति ॥ तत्र विज्ञानमयमिति योगाचाराणामात्मख्यातिपक्षोक्तिः ॥ १८ ॥

जगदिति ॥ जगदेतदनाधारमिति निरधिष्ठानौ भ्रांतिज्ञानतदर्थाविति माध्यमिकानां शून्यख्यातिपक्षोक्तिः ॥ १९ ॥ एवमिति ॥ बुध्यतेरावृत्तिर्बौद्धत्वनिरुक्त्यर्था ॥ २०—२५ ॥

नेति ॥ अधर्ममयी—हिंसा धर्माय चेष्यत इति वाक्यं निर्युक्तिकम् । नेष्यत इति पाठे एतदग्नीषोमीयपशुहिंसाविधिवाक्यं न युक्तिसहम् । यतो * न हिंस्यात्सर्वा(णि) भूतानि * इति श्रुत्यैव हिंसा धर्माय नेष्यते ॥ २६ ॥

यज्ञैरिति ॥ शम्यादीति । तद्वरं स्वर्गं गत्वाऽपि सकंटकशम्यादिकाष्ठभक्षकात्तस्मादिन्द्रान्मृदु तत्पत्रमिहैवादञ्छागो वरम्—बुद्धिमान् । * दैवादृते वरश्श्रेष्ठे त्रिषु क्लीबं मनाक् प्रिये * इत्यमरः ॥ २७ ॥

निहतस्येति ॥ यज्ञे निहतस्य पशोरपि स्वर्गसिद्धेः तद्धिंसा न दोषाय चेत्तर्हि अन्यस्य पशोर्वधाद्वरं स्वपितुरेव यज्ञे वधः । यदीष्यत इति पाठे यस्मादेवं श्रुत्येष्यते तस्मात्तत्पिता किं न हन्यत इत्यन्वयः ॥ २८ ॥

तृप्तय इति ॥ अन्यभुक्तमन्यस्य तृप्तेर्जायत इति कृत्वा श्राद्धं कुर्याच्चेत्पुत्रादिः तर्हि, प्रोषिताः श्रमावहमन्नं न वहेयुः, ग्रामस्थाने केनचिद्भुक्तेऽपि प्रोषितस्य तृप्तेः । दद्याच्छ्राद्धमिति सम्यक्पाठः ॥ २९ ॥

जनश्रद्धेयमिति ॥ तस्मादेतद्यागादिकं युक्तिहीनं प्राकृतजनश्रद्धेयमित्यवगम्यात्रोपेक्षा श्रेयसे ॥ ३० ॥

न ह्याप्तवादा नभसो निपतन्ति महीं सुराः। युक्तिमद्वचनं ग्राह्यं मयाऽन्यैश्च भवद्विधैः ॥ ३१ ॥
मायामोहेन ते दैत्याः प्रकारैर्बहुभिस्तथा। वृथापिता यथा नैषां त्रयीं कश्चिदरोचयत् ॥ ३२ ॥
इत्थमुन्मार्गयातेषु तेषु दैत्येषु तेऽमराः। उद्योगं परमं कृत्वा युद्धाय समुपस्थिताः ॥ ३३ ॥
ततो देवासुरं युद्धं पुनरेवाभवद्द्विज। हताश्च तेऽसुरा देवैः सन्मार्गपरिपंथिनः ॥ ३४ ॥
सद्धर्मकवचस्तेषामभूद्यः प्रथमं द्विज। तेन रक्षाऽभवत्पूर्वं नेशुर्नष्टे च तत्र ते ॥ ३५ ॥
ततो मैत्रेय तन्मार्गवर्तिनो येऽभवञ्जनाः। नग्नास्ते तैर्यतस्त्यक्तं त्रयी संवरणं यथा।
कृताश्च तेऽसुरा देवैर्नाना वेदविनिन्दकाः ॥ ३६ ॥
ब्रह्मचारी गृहस्थश्च वानप्रस्थस्तथाश्रमी। परिव्राड् वा चतुर्थोऽत्र पंचमो नोपपद्यते ॥ ३७ ॥
यस्तु संत्यज्य गार्हस्थ्यं वानप्रस्थो न जायते। परिव्राट् वापि मैत्रेय स नग्नः पापकृन्नरः ॥ ३८ ॥
नित्यानां कर्मणां विप्र यस्य हानिरहर्निशम्। अकुर्वन्विहितं कर्म शक्तः पतति तद्दिने ॥ ३९ ॥
प्रायश्चित्तेन महता शुद्धिमाप्नोत्यनापदि। पक्षं नित्यक्रियाहानेः कर्ता मैत्रेय मानवः ॥ ४० ॥
संवत्सरं क्रियाहानिर्यस्य पुंसोऽभिजायते। तस्यावलोकनात्सूर्यो निरीक्ष्यस्साधुभिस्सदा ॥ ४१ ॥
स्पृष्टे स्नानं सचेलं स्यात् शुद्धेर्हेतुर्महामते। पुंसो भवति तस्योक्ता न शुद्धिः पापकर्मणः ॥ ४२ ॥
देवर्षिपितृभूतानि यस्य विप्रस्य वेश्मनि। प्रयान्त्यनर्चितान्यत्र लोके तस्मान्न पापकृत् ॥ ४३ ॥
देवादिनिश्वासहतं शरीरं यस्य वेश्म च। न तेन संकरं कुर्याद्गृहासनपरिच्छदैः ॥ ४४ ॥
संभाषणानुप्रश्नादि सहास्यां चैव कुर्वतः। जायते तुल्यता तस्य तेनैव द्विज वत्सरात् ॥ ४५ ॥
अथ भुंक्ते गृहे तस्य करोत्यास्यां तथासने। शेते चाप्येकशयने स सद्यस्तत्समो भवेत् ॥ ४६ ॥
देवतापितृभूतानि तथाऽनभ्यर्च्य योऽतिथीन्। भुंक्ते स पातकं भुंक्ते निष्कृतिस्तस्य नेष्यते ॥ ४७ ॥
ब्राह्मणाद्यास्तु ये वर्णास्स्वधर्मादन्यतोमुखाः। यान्ति ते नग्नसंज्ञां तु हीनकर्मस्ववस्थिताः ॥ ४८ ॥
चतुर्णां यत्र वर्णानां मैत्रेयात्यन्तसंकरः। तत्रास्था साधुवृत्तीनामुपघाताय जायते ॥ ४९ ॥
अनभ्यर्च्य ऋषीन्देवान्पितृभूतातिथींस्तथा। यो भुंक्ते तस्य सँल्लापात्पतन्ति नरके नराः ॥ ५० ॥
तस्मादेतान्नरो नग्नांस्त्रयीसंत्यागदूषितान्। सर्वदा वर्जयेत्प्राज्ञ आलापस्पर्शनादिषु ॥ ५१ ॥
श्रद्धावद्भिः कृतं यत्नाद्देवान्पितृपितामहान्। न प्रीणयति तच्छ्राद्धं यद्येभिरवलोकितम् ॥ ५२ ॥

---

नन्वपौरुषेयत्वाद्वेदवाक्यं प्रमाणम्; अतस्तदुक्तं यज्ञाद्यनुष्ठेयं न तु त्वदुक्तमित्याशंक्य वेदस्यापौरुषेयत्वमेव नोपपन्नमित्याह- न हीति ॥ आप्तवादाः—प्रमाणवाक्यानि ॥ ३१–३६ ॥

ब्रह्मचारीति ॥ आश्रमी इति ब्रह्मचार्यादिभिः प्रत्येकं संबध्यते। आदिभरतस्तु नैष्ठिक इति तत्रैव दर्शितः ॥ ३७–६९ ॥

श्रूयते च पुरा ख्यातो राजा शतधनुर्भुवि । पत्नी च शैव्या तस्याभूदतिधर्मपरायणा ॥ ५३ ॥
पतिव्रता महाभागा सत्यशौचदयान्विता । सर्वलक्षणसंपन्ना विनयेन नयेन च ॥ ५४ ॥
स तु राजा तया सार्धं देवदेवं जनार्दनम् । आराधयामास विभुं परमेण समाधिना ॥ ५५ ॥
होमैर्जपैस्तथा दानैरुपवासैश्च भक्तितः । पूजाभिश्चानु दिवसं तन्मना नान्यमानसः ॥ ५६ ॥
एकदा तु समं स्नातौ तौ तु भार्यापती जले । भागीरथ्यास्समुत्तीर्णौ कार्त्तिक्यां समुपोषितौ ।
पाषण्डिनमपश्येतामायान्तं संमुखं द्विज ॥ ५७ ॥
चापाचार्यस्य तस्यासौ सखा राज्ञो महात्मनः । अतस्तद्गौरवात्तेन सहालापमथाकरोत् ॥ ५८ ॥
न तु सा वाग्यता देवी तस्य पत्नी पतिव्रता । उपोषिताऽस्मीति रविं तस्मिन्दृष्टे ददर्श ह ॥ ५९ ॥
समागम्य यथान्यायं दंपती तौ यथाविधि । विष्णोः पूजादिकं सर्वं कृतवन्तौ द्विजोत्तम ॥ ६० ॥
कालेन गच्छता राजा ममारासौ सपत्नजित् । अन्वारुरोह तं देवी चितास्थं भूपतिं पतिम् ॥ ६१ ॥
स तु तेनापचारेण श्वा जज्ञे वसुधाधिपः । उपोषितेन पाषंडसल्लापो यत्कृतोऽभवत् ॥ ६२ ॥
सा तु जातिस्मरा जज्ञे काशीराजसुता शुभा । सर्वविज्ञानसंपूर्णा सर्वलक्षणपूजिता ॥ ६३ ॥
तां पिता दातुकामोऽभूद्वराय विनिवारितः । तयैव तन्व्या विरतो विवाहारंभतो नृपः ॥ ६४ ॥
ततस्सा दिव्यया दृष्ट्या दृष्ट्वा श्वानं निजं पतिम् । विदिशाख्यं पुरं गत्वा तदवस्थं ददर्श तम् ॥ ६५ ॥
तं दृष्ट्वैव महाभागं श्वभूतं तु पतिं तथा । ददौ तस्मै वराहारं सत्कारप्रवणं शुभा ॥ ६६ ॥
भुञ्जन्दत्तं तया सोऽन्नमतिमृष्टमभीप्सितम् । स्वजातिललितं कुर्वन्बहु चाटु चकार वै ॥ ६७ ॥
अतीव व्रीडिता बाला कुर्वता चाटु तेन सा । प्रणामपूर्वमाहेदं दयितं तं कुयोनिजम् ॥ ६८ ॥
स्मर्यतां तन्महाराज दाक्षिण्याल्लपितं त्वया । येन श्वयोनिमापन्नो मम चाटुकरो भवान् ॥ ६९ ॥
पाषण्डिनं समाभाष्य तीर्थस्नानादनन्तरम् । प्राप्तोऽसि कुत्सितां योनिं किन्न स्मरसि तत्प्रभो ॥ ७० ॥

श्रीपराशरः—

तयैवं स्मारिते तस्मिन्पूर्वजातिकृते तदा । दध्यौ चिरमथावाप निर्वेदमतिदुर्लभम् ॥ ७१ ॥
निर्विण्णचित्तस्स ततो निर्गम्य नगराद्बहिः । मरुप्रपतनं कृत्वा सार्गालीं योनिमागतः ॥ ७२ ॥
सापि द्वितीये संप्राप्ते वीक्ष्य दिव्येन चक्षुषा । ज्ञात्वा सृगालं तं द्रष्टुं ययौ कोलाहलं गिरिम् ॥ ७३ ॥
तत्रापि दृष्ट्वा तं प्राह सार्गालीं योनिमागतम् । भर्तारमतिचार्वंगी तनया पृथिवीक्षितः ॥ ७४ ॥
अपि स्मरसि राजेन्द्र श्वयोनिस्थस्य यन्मया । प्रोक्तं ते पूर्वचरितं पाषण्डालापसंश्रयम् ॥ ७५ ॥
पुनस्तयोक्तं स ज्ञात्वा सत्यं सत्यवतां वरः । कानने स निराहारस्तत्याज स्वं कलेवरम् ॥ ७६ ॥

---

स्मर्यतामिति ॥ चाटु—प्रीतिचेष्टा, स्मर्यताम् ॥ ७०, ७१ ॥
निर्विण्णचित्त इति ॥ मरुप्रपतनं—गिरितटात्पातः ॥ ७२–७६ ॥

भूयस्ततो वृको जज्ञे गत्वा तं निर्जने वने । स्मारयामास भर्तारं पूर्ववृत्तमनिन्दिता ॥ ७७ ॥
न त्वं वृको महाभाग राजा शतधनुर्भवान् । श्वा भूत्वा त्वं सृगालोऽभूर्वृकत्वं सांप्रतं गतः ॥ ७८ ॥
स्मारितेन यदा त्यक्तस्तेनात्मा गृध्रतां गतः । अपापा सा पुनश्चैनं बोधयामास भामिनी ॥ ७९ ॥
नरेन्द्र स्मर्यतामात्मा ह्यलं ते गृध्रचेष्टया । पाषण्डालापजातोऽयं दोषो यद्गृध्रतां गतः ॥ ८० ॥
ततः काकत्वमापन्नं समनन्तरजन्मनि । उवाच तन्वी भर्तारमुपलभ्यात्मयोगतः ॥ ८१ ॥
अशेषभूभृतः पूर्वं वश्या यस्मै बलिं ददुः । स त्वं काकत्वमापन्नो जातोऽद्य बलिभुक् प्रभो ॥ ८२ ॥
एवमेव बकत्वेऽपि स्मारितस्स पुरातनम् । तत्याज भूपतिः प्राणान्मयूरत्वमवाप च ॥ ८३ ॥
मयूरत्वे ततस्सा वै चकारानुगतिं शुभा । दत्तैः प्रतिक्षणं भोज्यैर्बाला तज्जातिभोजनैः ॥ ८४ ॥
ततस्तु जनको राजा वाजिमेधं महाक्रतुम् । चकार तस्यावभृथे स्नापयामास तं तदा ॥ ८५ ॥
सस्नौ स्वयं च तन्वङ्गी स्मारयामास चापि तम् । यथाऽसौ श्वसृगालादियोनिं जग्राह पार्थिवः ॥८६॥
स्मृतजन्मक्रमस्सोऽथ तत्याज स्वकलेवरम् । जज्ञे स जनकस्यैव पुत्रोऽसौ सुमहात्मनः ॥ ८७ ॥
ततस्सा पितरं तन्वी विवाहार्थमचोदयत् । स चापि कारयामास तस्या राजा स्वयंवरम् ॥ ८८ ॥
स्वयंवरे कृते सा तं संप्राप्तं पतिमात्मनः । वरयामास भूयोऽपि भर्तृभावेन भामिनी ॥ ८९ ॥
बुभुजे च तया सार्द्धं स भोगान्नृपनन्दनः । पितर्युपरते राज्यं विदेहेषु चकार सः ॥ ९० ॥
इयाज यज्ञान्सुबहून्ददौ दानानि चार्थिनाम् । पुत्रानुत्पादयामास युयुधे च सहारिभिः ॥ ९१ ॥
राज्यं भुक्त्वा यथान्यायं पालयित्वा वसुंधराम् । तत्याज स प्रियान्प्राणान्संग्रामे धर्मतो नृपः ॥९२॥
ततश्चितास्थं तं भूयो भर्तारं सा शुभेक्षणा । अन्वारुरोह विधिवद्यथापूर्वं मुदान्विता ॥ ९३ ॥
ततोऽवाप तया सार्धं राजपुत्र्या स पार्थिवः । ऐन्द्रानतीत्य वै लोकाँल्लोकान्कामदुहोऽक्षयान् ॥९४॥
स्वर्गाक्षयत्वमतुलं दांपत्यमतिदुर्लभम् । प्राप्तं पुण्यफलं प्राप्य संशुद्धिं तां द्विजोत्तम ॥ ९५ ॥
एष पाषण्डसंभाषाद्दोषः प्रोक्तो मया द्विज । तथाऽश्वमेधावभृथस्नानमाहात्म्यमेव च ॥ ९६ ॥
तस्मात्पाषण्डिभिः पापैरालापस्पर्शनं त्यजेत् । विशेषतः क्रियाकाले यज्ञादौ चापि दीक्षितः ॥ ९७ ॥
क्रियाहानिर्गृहे यस्य मासमेकं प्रजायते । तस्यावलोकनात्सूर्यं प्रपश्येन्मतिमान्नरः ॥ ९८ ॥
किं पुनर्यैस्तु संत्यक्ता त्रयी सर्वात्मना द्विज । पाषण्डभोजिभिः पापैर्वेदवादविरोधिभिः ॥ ९९ ॥
सहालापस्तु संसर्गः सहास्या चातिपापिनी । पाषण्डिभिर्दुराचारैस्तस्मात्तान् परिवर्जयेत् ॥ १०० ॥

---

भूय इति ॥ वृकः—वनश्वा ॥ ७७–८१ ॥ अशेषेति ॥ बलिः—उपहारः पिण्डश्च ॥ ८२–९३ ॥
ऐन्द्रान् लोकानतीत्य कामदुहो लोकानवापेत्यन्वयः ॥ ९४ ॥
स्वर्गेति ॥ दांपत्यं—मिथुनं, तां–पूर्वोक्तां संशुद्धिं प्राप्य पुण्यफलमतुलं स्वर्गाक्षयत्वं प्राप्तमित्यन्वयः ॥ ९५–९८ ॥ किं पुनरीति ॥ पाषण्डान् भोजयन्ति, तदन्नं भुञ्जत इति वा पाषण्डभोजिनः ॥ ९९, १०० ॥

पाषण्डिनो विकर्मस्थान्वैडालव्रतिकाञ्छठान् । हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥ १०१ ॥

दूरतस्तैस्तु संपर्कस्त्याज्यश्चाप्यतिपापिभिः । पाषण्डिभिर्दुराचारैस्तस्मात्तान्परिवर्जयेत् ॥ १०२ ॥

एते नग्नास्तवाख्याता दृष्टाः श्राद्धोपघातकाः । येषां संभाषणात्पुंसां दिनपुण्यं प्रणश्यति ॥ १०३ ॥

एते पाषण्डिनः पापा न ह्येतानालपेद्बुधः । पुण्यं नश्यति संभाषादेतेषां तद्दिनोद्भवम् ॥ १०४ ॥

पुंसां जटाधरणमौण्ड्यवतां वृथैव मोघाशिनामखिलशौचनिराकृतानाम् ।
तोयप्रदानपितृपिण्डबहिष्कृतानां संभाषणादपि नरा नरकं प्रयान्ति ॥ १०५ ॥

इति श्रीविष्णुपुराणे तृतीयेंशेऽष्टादशोऽध्यायः ॥ १८ ॥

॥ समाप्तश्च तृतीयोंऽशः ॥

---

पाषण्डिन इति ॥ पाषण्डिलक्षणं तूक्तं यथा—* भ्रष्टः स्वधर्मात्पाषण्डो विकर्मस्थो निषिद्धकृत् । यश्च धर्मध्वजो नित्यं सुरध्वज इवोच्छ्रितः ॥ धर्मध्वजः—दंडकमंडल्वादिः धर्मचिह्नम् । * प्रच्छन्नानि च पापानि बैडालं नाम तद्व्रतम् * तद्व्रतं—तस्य व्रतम् । * प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम् । व्यक्तापराधचेष्टश्च शठोऽयं कथितो बुधैः॥ संदेहकृद्धेतुभिर्यः सत्कर्मसु स हैतुकः । अर्वाग्दृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः ॥ शठो मिथ्याविनीतश्च बकवृत्तिरुदाहृतः ॥ इति ॥ १०१—१०४ ॥

पुंसामिति ॥ मोघाशिनां—देवातिथिपितृपूजानुपयुक्तान्नभोजिनाम् ॥ १०५ ॥

इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये तृतीयेंशेऽष्टादशोऽध्यायः ॥
तृतीयोंऽशः समाप्तः

श्रीमते रामानुजाय नमः

# चतुर्थेंऽशे प्रथमोऽध्यायः

मैत्रेयः—भगवन्यन्नैरः कार्यं साधुकर्मण्यवस्थितैः। तन्महं गुरुणाऽऽख्यातं नित्यनैमित्तिकात्मकम् ॥१॥
वर्णधर्मास्तथाऽऽख्याता धर्मा ये चाश्रमेषु च। श्रोतुमिच्छाम्यहं वंशं राज्ञां तद्ब्रूहि मे गुरो ॥ २ ॥
श्रीपराशरः—मैत्रेय श्रूयतामयमनेकयज्वशूरवीरधीरभूपालालंकृतो ब्रह्मादिर्मानवो वंशः ॥ ३ ॥

तदस्य वंशस्यानुपूर्वीमशेषपापप्रक्षालनाय मैत्रेयैतां शृणु ॥ ४ ॥

सकलजगतामादिरनादिभूतस्स ऋग्यजुस्सामादिमयो भगवान् विष्णुः। तस्य ब्रह्मणो मूर्तं स्वरूपं हिरण्यगर्भाख्यो ब्रह्माण्डभूतो भगवान् ब्रह्मा वै प्राग्बभूव ॥ ५ ॥
ब्रह्मणश्च दक्षिणांगुष्ठजन्मा दक्षः प्रजापतिः। दक्षस्याप्यदितिरदितेर्विवस्वान् विवस्वतो मनुः ॥ ६ ॥
मनोरिक्ष्वाकुनृगधृष्टशर्यातिनरिष्यंतनाभागदिष्टकरूषपृषध्राख्या नव पुत्रा बभूवुः ॥ ७ ॥
इष्टिं च मित्रावरुणयोर्मनुः पुत्रकामश्चकार ॥ ८ ॥ तत्र तावदपह्नुते होतुरपचारादिला नाम कन्या बभूव ॥ ९ ॥ सैव च मित्रावरुणयोः प्रसादात्सुद्युम्नो नाम मनोः पुत्रो मैत्रेयासीत् ॥ १० ॥
पुनश्चेश्वरकोपात्स्त्री सती सा तु सोमसूनोर्बुधस्याश्रमसमीपे बभ्राम ॥ ११ ॥
सानुरागश्च तस्यां बुधः पुरूरवसमात्मजमुत्पादयामास॥१२॥ जाते च तस्मिन्नमिततेजोभिः परमर्षिभिरिष्टिमय ऋङ्मयो यजुर्मयस्साममयोऽथर्वणमयस्सर्वमयो मनोमयो ज्ञानमयो विज्ञानमयोऽन्नमयोऽमृतमयो नकिंचिन्मयो भगवान् यज्ञपुरुषस्वरूपी सुद्युम्नस्य पुंस्त्वमभिलषद्भिर्यथावदिष्टस्तत्प्रसादादिला पुनरपि सुद्युम्नोऽभवत् ॥ १३ ॥ तस्याप्युत्कलगयविनतास्त्रयः पुत्रा बभूवुः ॥ १४ ॥ सुद्युम्नस्तु स्त्रीपूर्वत्वाद्राज्यभागं न लेभे ॥ १५ ॥ तत्पित्रा तु वसिष्ठवचनात्प्रतिष्ठानं नाम नगरं सुद्युम्नाय दत्तं तच्चासौ पुरूरवसे प्रादात् ॥ १६ ॥

---

## चतुर्थेंऽशे प्रथमोऽध्यायः

तृतीयेंऽशे भगवतस्स्थितिहेतुभूतमन्वादिरूपभेदानामधिकारभेद उक्तः। विशेषतश्च जगतः स्थितिहेतुवर्णाश्रमधर्मः सदाचारश्चोक्तः। चतुर्थेंशे तु तत्स्थापकधार्मिकसोमसूर्योद्भवक्षत्रवंशास्तदनुचरितं चोच्यते ॥ १, २ ॥

मैत्रेयेति ॥ वीरः—उत्साही। शूरः—पराभिभावी ॥ ३—५ ॥

ब्रह्मण इति ॥ * अदितिर्ह्यजनिष्ट दक्षया दुहिता तव तां देवा अन्वजायन्त * इत्यादिश्रुतिसम्मतत्वाद्ब्रह्मदक्षादिक्रम उक्तः। न तु ब्रह्ममरीच्यादिः ॥ ६, ७ ॥

इष्टिं चेति ॥ इक्ष्वाक्वादिपुत्रोत्पत्तेः पूर्वं इष्टिं चकार। तस्मादिक्ष्वाक्वाद्युत्पत्तेः प्राक् इलाजन्म, * अकरोत्पुत्रकामस्तु मनुरिष्टिं प्रजापतिः ॥ अनुत्पन्नेषु नवसु पुत्रेष्वेतेषु सुव्रत ॥ * इति वायूक्तेः ॥ ८—१२ ॥

जाते चेति ॥ नकिंचिन्मयः—कर्मकृतदेवादिरूपतत्कृतज्ञानसंकोचादिरहितः ॥ १३—१६ ॥

[तदन्वयाश्च क्षत्रियास्सर्वे दिक्ष्वभवन् ।] पृषध्रस्तु मनुपुत्रो गुरुगोवधाच्छूद्रत्वमगमत् ॥ १७ ॥
मनोः पुत्रः करूषः करूषात्कारूषाः क्षत्रिया महाबलपराक्रमा बभूवुः ॥ १८ ॥
दिष्टपुत्रस्तु नाभागो वैश्यतामगमत्तस्माद्बलंधनः पुत्रोऽभवत् ॥ १९ ॥ बलंधनाद्वत्सप्रीतिरुदारकीर्त्तिः ॥ २० ॥ वत्सप्रीतेः प्रांशुरभवत् ॥ २१ ॥ प्रजापतिश्च प्रांशोरेकोऽभवत् ॥ २२ ॥ ततश्च खनिमित्रः ॥ २३ ॥ तस्माच्चक्षुषः ॥ २४ ॥ चक्षुषाच्चातिबलपराक्रमो विंशोऽभवत् ॥ २५ ॥ ततो विविंशकः ॥ २६ ॥ तस्माच्च खनिनेत्रः ॥ २७ ॥ ततश्चातिविभूतिः ॥ २८ ॥ अतिविभूतेरतिबलपराक्रमः करंधमः पुत्रोऽभवत् ॥ २९ ॥ तस्मादप्यविक्षित् ॥ ३० ॥ अविक्षितोऽप्यतिबलपराक्रमः पुत्रो मरुत्तो नामाऽभवत् । यस्येमावद्यापि श्लोकौ गीयेते ॥ ३१ ॥

मरुत्तस्य यथा यज्ञस्तथा कस्याभवद्भुवि । सर्वं हिरण्मयं यस्य यज्ञवस्त्वतिशोभनम् ॥ ३२ ॥
अमाद्यदिन्द्रस्सोमेन दक्षिणाभिर्द्विजातयः । मरुतः परिवेष्टारस्सदस्याश्च दिवौकसः ॥ ३३ ॥

स मरुत्तश्चक्रवर्ती नरिष्यन्तनामानं पुत्रमवाप ॥ ३४ ॥ तस्माच्च दमः ॥ ३५ ॥ दमस्य पुत्रो राजवर्धनो जज्ञे ॥ ३६ ॥ राजवर्द्धनात्सुवृद्धिः ॥ ३७ ॥ सुवृद्धेः केवलः ॥ ३८ ॥ केवलात्सुधृतिरभूत् ॥ ३९ ॥ ततश्च नरः ॥ ४० ॥ तस्माच्चंद्रः ॥ ४१ ॥ ततः केवलोऽभूत् ॥ ४२ ॥ केवलाद्बंधुमान् ॥ ४३ ॥ बंधुमतो वेगवान् ॥ ४४ ॥ वेगवतो बुधः ॥ ४५ ॥ ततश्च तृणबिंदुः ॥ ४६ ॥ तस्याप्येका कन्या इलविलानाम ॥ ४७ ॥ ततश्चालंबुसानाम वराप्सरास्तृणबिंदुं भेजे ॥ ४८ ॥ तस्यामप्यस्य विशालो जज्ञे यः पुरीं विशालां निर्ममे ॥ ४९ ॥ हेमचंद्रश्च विशालस्य पुत्रोऽभवत् ॥ ५० ॥ ततश्चंद्रः ॥ ५१ ॥ तत्तनयो धूम्राक्षः ॥ ५२ ॥ तस्यापि सृंजयोऽभूत् ॥ ५३ ॥ सृंजयात्सहदेवः ॥ ५४ ॥ ततश्च कृशाश्वो नाम पुत्रोऽभवत् ॥ ५५ ॥ सोमदत्तः कृशाश्वाज्जज्ञे यो दशाश्वमेधानाजहार ॥ ५६ ॥ तत्पुत्रो जनमेजयः ॥ ५७ ॥ जनमेजयात्सुमतिः ॥ ५८ ॥ एते वैशालिका भूभृतः ॥ ५९ ॥ श्लोकोऽप्यत्र गीयते ॥ ६० ॥

तृणबिंदोः प्रसादेन सर्वे वैशालिका नृपाः । दीर्घायुषो महात्मानो वीर्यवन्तोऽतिधार्मिकाः ॥ ६१ ॥
शर्यातेः कन्या सुकन्यानामाभवत् यामुपयेमे च्यवनः ॥ ६२ ॥ आनर्तनामा परमधार्मिकश्शर्यातिपुत्रोऽभवत् ॥ ६३ ॥ आनर्तस्यापि रेवतनामा पुत्रो जज्ञे, योऽसावानर्तविषयं बुभुजे पुरीं च कुशस्थलीमध्युवास ॥ ६४ ॥ रेवतस्यापि रैवतः पुत्रः ककुद्मिनामा धर्मात्मा भ्रातृशतस्य ज्येष्ठोऽभवत् ॥ ६५ ॥ तस्य च रेवतीनाम कन्याऽभवत् ॥ ६६ ॥

स तामादाय कस्येयमर्हतीति भगवन्तमब्जयोनिं प्रष्टुं ब्रह्मलोकं जगाम ॥ ६७ ॥ तावच्च ब्रह्मणोऽन्तिके हाहाहूहूसंज्ञाभ्यां गंधर्वाभ्यामतितानं नाम दिव्यं गांधर्वमगीयत ॥ ६८ ॥

---

पृषध्र इति ॥ सूचीकटाहन्यायेनाल्पत्वात्प्रथमं पृषध्रादिवंशोक्तिः । बलंधनोत्पत्तेः पश्चान्नाभागस्य वैश्यत्वप्राप्तिः ॥ १७–३२ ॥ अमाद्यदिति ॥ परिवेष्टारः—भोजयितारः ॥ ३३–६६ ॥

स इति ॥ ब्रह्मलोकं जगामेति ॥ ब्रह्मलोकः—सत्यलोकः न तु मेरुस्थः ; यतो रैवते ब्रह्मणोऽन्तिके तिष्ठत्येव मेरुस्थो ब्रह्मा देवैस्सहाष्टाविंशद्द्वापरान्ते कृष्णावतारार्थं क्षीरोदमगमदिति पंचमांशे वक्ष्यति । अतस्सत्यलोकस्थहिरण्यगर्भांशोऽन्यो ब्रह्मा मेरुस्थ इति न विरोधः ॥ ६७, ६८ ॥

तच्च त्रिमार्गपरिवृत्तैरनेकयुगपरिवृ(र्त्ति)त्तीः तिष्ठन्नपि रैवतश्शृण्वन्मुहूर्तमिव मेने ।। ६९ ।।
गीतावसाने च भगवन्तमब्जयोनिं प्रणम्य रैवतः कन्यायोग्यं वरमपृच्छत् ।। ७० ।।
ततश्चासौ भगवानकथयत् कथय योऽभिमतस्ते वर इति ।। ७१ ।। पुनश्च प्रणम्य भगवते तस्मै यथा-भिमतानात्मनस्स वरान् कथयामास क एषां भगवतोऽभिमत इति यस्मै कन्यामिमां प्रयच्छामीति ।। ७२ ।। ततः किंचिदवनतशिरास्ससस्मितं भगवानब्जयोनिराह ।। ७३ ।। य एते भवतोऽभिमता नैतेषां सांप्रतं पुत्रपौत्रापत्यापत्यसंततिरप्यवनीतलेऽस्ति ।। ७४ ।। बहूनि तवात्रैव गांधर्वं शृण्वतश्चतुर्यु-गान्यतीतानि ।। ७५ ।। सांप्रतं महीतलेऽष्टाविंशतितममनोश्चतुर्युगमतीतप्रायं वर्तते ।। ७६ ।। आसन्नो हि कलिः ।। ७७ ।। अन्यस्मै कन्यारत्नमिदं भवतैकाकिनाऽभिमताय देयम् ।। ७८ ।। भवतोऽपि पुत्रमित्रकलत्रमंत्रिभृत्यबंधुबलकोशादयस्समस्ताः कालेनैतेनात्यन्तमतीताः ।। ७९ ।। ततः पुन-रप्युत्पन्नसाध्वसो राजा भगवन्तं प्रणम्य पप्रच्छ ।। ८० ।। भगवन्नेवमवस्थिते मयेयं कस्मै देयेति ।। ८१ ।। ततस्स भगवान् किंचिदवनम्रकंधरः कृताञ्जलिर्भूत्वा सर्वलोकगुरुरंभोजयोनिराह ।। ८२ ।।
ब्रह्मोवाच—न ह्यादिमध्यान्तमजस्य यस्य विद्मो वयं सर्वमयस्य धातुः ।
न च स्वरूपं न परं प्रभावं न चैव सारं परमेश्वरस्य ।। ८३ ।।
कलामुहूर्तादिमयश्च कालो न यद्विभूतेः परिणामहेतुः । अजन्मनाशस्य सदैकमूर्तेरनामरूपस्य सनातनस्य ।।
यस्य प्रसादादहमच्युतस्य भूतः प्रजासृष्टिकरोऽन्तकारी ।
क्रोधाच्च रुद्रः स्थितिहेतुभूतो यस्माच्च मध्ये पुरुषः परस्मात् ।। ८५ ।।
मद्रूपमास्थाय सृजत्यजो यः स्थितौ च योऽसौ पुरुषस्वरूपी ।
रुद्रस्वरूपेण च योऽत्ति विश्वं धत्ते तथाऽनन्तवपुस्समस्तम् ।। ८६ ।।
पाकाय योऽग्नित्वमुपैति लोकान्बिभर्त्ति पृथ्वीवपुरव्ययात्मा ।
शक्रादिरूपी परिपाति विश्वमर्केन्दुरूपश्च तमो हिनस्ति ।। ८७ ।।

---

तदिति ।। परिवृत्तयः—परिवर्ताः । एते दत्तिलादिषु द्रष्टव्याः । त्रिमार्गपरिवृत्तैः चित्रदक्षिण-धात्र्याख्यास्त्रिमार्गाः तद्विषये कालविशेषयुक्तगीतगानक्रियाभ्याम् । अनेकयुगपरिवृत्तीरिति कालाध्वनोरिति द्वितीया । परिवृत्तीरिति च पाठः ।। ६९—७५ ।। सांप्रतमिति ।। अष्टाविंशतितमं चतुर्युगम ।। ७६—८२ ।।

न हीति ।। स्वरूपं—ज्ञानानंदादिलक्षणम् । प्रभावम्—* पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी * इत्याद्युक्तं प्रभावम् । सारम्—विश्वधारणनियमनादिक्षमं बलम् ।। ८३ ।।

कलेति ।। कलामुहूर्तेत्यनेन * त्रिपादस्यामृतं दिवि * * यत्र पूर्वे साध्यास्संन्ति देवाः * दिव्यं स्थानमजरम् * इत्यादिश्रुतिसिद्धस्य परमपदस्याकालकाल्यत्वमुच्यते । अजन्मनाशस्य—कर्मनिमित्तशरीरग्रहण-तद्वियोगरहितस्य । सदैकमूर्तेः—सदैकरूपस्य । समस्तमूर्तेरिति च पाठः । अनामरूपस्य—कर्मकृतदेवादि नामरूपास्पृष्टस्य ।। ८४ ।।

यस्येति ।। यस्माच्च मध्य इति । स्रष्टृसंहर्त्रोर्मध्ये स्थितिहेतुभूतः पुरुषस्स्वयं परस्माद्यस्माद्रामादिवत् प्रादुर्भूतः ।। ८५—८७ ।।

करोति चेष्टाश्श्वसनस्वरूपी लोकस्य तृप्तिं च जलान्नरूपी ।
ददाति विश्वस्थितिसंस्थितस्तु सर्वावकाशं च नभस्स्वरूपी ॥ ८८ ॥

यस्सृज्यते सर्गकृदात्मनैव यः पाल्यते पालयिता च देवः ।
विश्वात्मकस्संह्रियतेऽन्तकारी पृथक् त्रयस्यास्य च योऽव्ययात्मा ॥ ८९ ॥

यस्मिञ्जगद्यो जगदेतदाद्यो यं चाश्रितोऽस्मिञ्जगति स्वयंभूः ।
स सर्वभूतप्रभवो धरित्र्यां स्वांशेन विष्णुर्नृपतेऽवतीर्णः ॥ ९० ॥

कुशस्थली या तव भूप रम्या पुरी पुराऽभूदमरावतीव ।
सा द्वारका संप्रति तत्र चास्ते स केशवांशो बलदेवनामा ॥ ९१ ॥

तस्मै त्वमेनां तनयां नरेन्द्र प्रयच्छ मायामनुजाय जायाम् ।
श्लाघ्यो वरोऽसौ तनया तवेयं स्त्रीरत्नभूता सदृशो हि योगः ॥ ९२ ॥

श्रीपराशरः—इतीरितोऽसौ कमलोद्भवेन भुवं समासाद्य पतिः प्रजानाम् ।
ददर्श ह्रस्वान् पुरुषान् विरूपानल्पौजसस्स्वल्पविवेकवीर्यान् ॥ ९३ ॥

कुशस्थलीं तां च पुरीमुपेत्य दृष्ट्वाऽन्यरूपां प्रददौ स कन्याम् ।
सीरायुधाय स्फटिकाचलाभवक्षस्थलायातुलधी र्नरेंद्रः ॥ ९४ ॥

उच्चप्रमाणामिति तामवेक्ष्य स्वलांगलाग्रेण स तालकेतुः ।
विनामयामास ततश्च साऽपि बभूव सद्यो वनिता यथाऽन्या ॥ ९५ ॥

तां रेवतीं रैवतभूपकन्यां सीरायुधोऽसौ विधिनोपयेमे ।
दत्त्वाऽथ कन्यां स नृपो जगाम हिमालयं वै तपसे धृतात्मा ॥ ९६ ॥

इति श्रीविष्णुपुराणे चतुर्थेंशे प्रथमोऽध्यायः ॥ १ ॥

---

करोतीति ॥ विश्वस्थितिसंस्थितः—विश्वस्थित्यै संस्थितः, * विष्टभ्याहम् * इत्युक्तत्वात् ॥ ८८ ॥

यस्सृज्यत इति ॥ सर्गकृधः विश्वात्मना आत्मनैव सृज्यत इत्यन्वयः । आत्मनेति प्रकृत्या तृतीया । विश्वात्मभूतः स्वयमेव सृज्यत इत्यर्थः । एवमुत्तरत्रापि । त्रयस्य सृज्यादेः स्रष्ट्रादेश्च । पृथङ् न यस्यास्तीति पाठे एतदनात्मकं नास्तीत्यर्थः । * न तदस्ति विना यत्स्यात् * इति ॥ ८९, ९० ॥

कुशस्थलीति ॥ पूर्वं वेलास्थिता सती कुशस्थली कृष्णेन समुद्राल्लब्धद्वादशयोजनस्थलेन सह द्वारका कृता ॥ ९१ ॥ तस्मा इति ॥ मायामनुजाय—संकल्पभूतमनुजाय ॥ ९२–९६ ॥

इति श्रीविष्णुचित्तीये श्रीविष्णुपुराणव्याख्याने चतुर्थेंशे प्रथमोऽध्यायः ॥ १ ॥

श्रीपराशरः—

यावच्च ब्रह्मलोकात्स ककुद्मी रैवतो नाभ्येति तावत्पुण्यजनसंज्ञा राक्षसास्तामस्य पुरीं कुशस्थलीं निजघ्नुः ॥ १ ॥ तच्चास्य भ्रातृशतं पुण्यजनत्रासाद्दिशो भेजे ॥ २ ॥ तदन्वयाश्च क्षत्रियास्सर्वदिक्ष्वभवन् ॥ ३ ॥ धृष्टस्यापि धार्ष्टकं क्षत्रमभवत् ॥ ४ ॥ नाभागस्यात्मजो नाभागसंज्ञोऽभवत् ॥ ५ ॥ तस्याप्यंबरीषः ॥ ६ ॥ अंबरीषस्यापि विरूपोऽभवत् ॥ ७ ॥ विरूपात्पृषदश्वो जज्ञे ॥ ८ ॥ ततश्च रथीतरः ॥ ९ ॥ अत्रायं श्लोकः—

एते क्षत्रप्रसूता वै पुनश्चांगिरसाः स्मृताः । रथीतराणां प्रवराः क्षत्रोपेता द्विजातयः ॥ इति ॥ १० ॥

क्षुतवतश्च मनोरिक्ष्वाकुः पुत्रो जज्ञे घ्राणतः ॥ ११ ॥

तस्य पुत्रशतप्रधानाः विकुक्षिनिमिदंडाख्यास्त्रयः पुत्रा बभूवुः ॥ १२ ॥ शकुनिप्रमुखाः पंचाशत्पुत्राः उत्तरापथरक्षितारो बभूवुः ॥ १३ ॥ चत्वारिंशदष्टौ च दक्षिणापथभूपालाः ॥ १४ ॥ स चेक्ष्वाकुरष्टकायामुत्पाद्य श्राद्धार्हं मांसमानयेति विकुक्षिमाज्ञापयामास ॥ १५ ॥ तथेति गृहीताज्ञो विधृतशरासनो वनमभ्येत्यानेकशो मृगान् हत्वा श्रान्तोऽतिक्षुत्परीतो विकुक्षिरेकं शशमभक्षयत्, शेषं च मांसमानीय पित्रे निवेदयामास ॥ १६ ॥ इक्ष्वाकुणा इक्ष्वाकुकुलाचार्यो वसिष्ठस्तत्प्रोक्षणाय चोदितः प्राह, अलमनेनामेध्येनामिषेण, दुरात्मनाऽनेन तव पुत्रेणैतन्मांसमुपहतं यतोऽनेन शशो भक्षितः॥१७॥ ततश्चासौ विकुक्षिर्गुरुणैवमुक्तश्शशादसंज्ञामवाप, पित्रा च परित्यक्तः ॥ १८ ॥ पितर्युपरते चासावखिलामेतां पृथ्वीं धर्मतश्शशास ॥ १९ ॥ शशादस्य तस्य पुरंजयो नाम पुत्रोऽभवत् ॥ २० ॥ तस्येदं चान्यत् ॥ २१ ॥ पुरा हि त्रेतायां देवासुरयुद्धमतिभीषणमभवत् ॥ २२ ॥ तत्र चातिबलिभिरसुरैरमराः पराजितास्ते भगवन्तं विष्णुमाराधयांचक्रुः ॥ २३ ॥ प्रसन्नश्च देवानामनादिनिधनोऽखिलजगत्परायणो नारायणः प्राह ॥ २४ ॥ ज्ञातमेतन्मया युष्माभिर्यदभिलषितं, तदर्थमिदं श्रूयताम्॥२५॥ पुरंजयो नाम राजर्षेश्शशादस्य तनयः क्षत्रियवरो यस्तस्य शरीरेऽहमंशेन स्वयमेवावतीर्य तानशेषानसुरान्निहनिष्यामि; तद्भवद्भिः पुरंजयोऽसुरवधार्थमुद्योगं कार्यतामिति ॥ २६ ॥ एतच्च श्रुत्वा प्रणम्य भगवन्तं विष्णुममराः पुरंजयसकाशमाजग्मुरूचुश्चैनम् ॥ २७ ॥

---

अथ द्वितीयोऽध्यायः

१–९ ॥ एत इति ॥ रथीतराणां प्रवराः—वंश्याः केनचित्संबंधेनांगिरोगणप्रविष्टत्वात्क्षत्रजत्वाच्च ब्रह्मक्षत्रतां गताः । एतेषां हि तपसैव ब्रह्मत्वं, यथाह वायुः—* विश्वामित्रो नरपतिर्मांधाता संकृतिः कपिः । वार्ध्र्यश्वः पुरुकुत्सश्च भास्वान् गृत्समदः प्रभुः ॥ अर्ष्टिषेणोऽजमीढश्च छागो गार्ग्यस्तथैव च । कक्षीवांश्च विरूपश्च मुद्गलो हरितस्तथा ॥ रथीतरश्च कण्वश्च विष्णुवृद्धादयो नृपाः । क्षत्रोपेता द्विजा ह्येते तपसा चर्षितां गताः ॥ * इति ॥ १० ॥ क्षुतवत इति ॥ क्षुतवतः—क्षुतं कुर्वतः इति इक्ष्वाकुनामनिरुक्तिः ॥ ११–२० ॥

तस्येति ॥ इदं चान्यत्—तस्य पुरंजयस्य ककुत्स्थ इति नाम ॥ २१–२७ ॥

भोभोः क्षत्रियवर्यास्माभिरभ्यर्थितेन भवताऽस्माकमरातिवधोद्यतानां कर्तव्यं साहाय्यमिच्छामः; तद्भवताऽस्माकमभ्यागतानां प्रणयभंगो न कार्य इत्युक्तः पुरंजयः प्राह ॥ २८ ॥ त्रैलोक्यनाथो योऽयं राजा युष्माकमिन्द्रः शतक्रतुः, अस्य यद्यहं स्कंधाधिरूढो युष्मादरातिभिस्सह योत्स्ये तदहं भवतां सहायः स्याम् ॥ २९ ॥

इत्याकर्ण्य समस्तदेवैरिन्द्रेण च बाढमित्येव समन्विच्छितम् ॥ ३० ॥ ततश्च शतक्रतोर्वृषभरूपधारिणः ककुदि स्थितोऽति(तो)रोषसमन्वितो भगवतश्चराचरगुरोरच्युतस्य तेजसाऽऽप्यायितो देवासुरसंग्रामे समस्तानेवासुरान्निजघान ॥ ३१ ॥ यतश्च वृषभककुदि स्थितेन तेन राज्ञा दैतेयबलं निषूदितं ततश्चासौ ककुत्स्थसंज्ञामवाप ॥ ३२ ॥ ककुत्स्थस्याप्यनेनाः पुत्रोऽभवत् ॥ ३३ ॥ पृथुरनेनसः ॥ ३४ ॥ पृथो र्विष्टराश्वः ॥ ३५ ॥ तस्यापि चान्द्रो युवनाश्वः ॥ ३६ ॥ चान्द्रस्य तस्य युवनाश्वस्य शावस्तः यः पुरीं शावस्तीं निवेशयामास ॥ ३७ ॥ शावस्तस्य बृहदश्वः ॥ ३८ ॥ तस्यापि कुवलयाश्वः ॥ ३९ ॥ योऽसावुदङ्कस्य महर्षेरपकारिणं दुंदुनामानमसुरं वैष्णवेन तेजसाऽऽप्यायितः पुत्रसहस्रैरेकविंशतिभिः परिवृतो जघान दुंदुमारसंज्ञां चावाप ॥ ४० ॥ तस्य च तनयास्समस्ता एव दुंदुमुखनिश्वासाग्निना विप्लुष्टा विनेशुः ॥ ४१ ॥ दृढाश्वचंद्राश्वकपिलाश्वाश्च त्रयः केवलं शेषिताः ॥ ४२ ॥ दृढाश्वाद्धर्यश्वः ॥ ४३ ॥ तस्माच्च निकुंभः ॥ ४४ ॥ निकुंभस्यामिताश्वः ॥ ४५ ॥ ततश्च कृशाश्वः ॥ ४६ ॥ तस्माच्च प्रसेनजित् ॥ ४७ ॥ प्रसेनजितो युवनाश्वोऽभवत् ॥ ४८ ॥ तस्य चापुत्रस्यातिनिर्वेदान्मुनीनामाश्रम-मण्डले निवसतो दयालुभिर्मुनिभिरपत्योत्पादनायेष्टिः कृता ॥ ४९ ॥ तस्यां च मध्यरात्रौ निवृत्तायां मन्त्रपूतजलपूर्णं कलशं वेदिमध्ये निवेश्य ते मुनयः सुषुपुः ॥ ५० ॥ सुप्तेषु तेषु अतीव तृट्परीतस्स भूपालस्तमाश्रमं विवेश ॥ ५१ ॥ सुप्तांश्च तानृषीन्नैवोत्थापयामास ॥ ५२ ॥ तच्च कलशजलमपरि-मेयमाहात्म्यमन्त्रपूतं पपौ ॥ ५३ ॥ प्रबुद्धाश्च ऋषयः पप्रच्छुः केनैतन्मन्त्रपूतं वारि पीतम् ॥ ५४ ॥ अत्र हि पीते राज्ञो युवनाश्वस्य पत्नी महाबलपराक्रमं पुत्रं जनयिष्यति; इत्याकर्ण्य स राजा अजानता मया पीतमित्याह ॥ ५५ ॥ गर्भश्च युवनाश्वस्योदरे अभवत् क्रमेण च ववृधे ॥ ५६ ॥ प्राप्तसमयश्च दक्षिणांगुष्टेन कुक्षिमवनिपतेर्निर्भिद्य स निश्चक्राम ॥ ५७ ॥ स चासौ राजा ममार ॥ ५८ ॥ जातो नामैष कं धास्यतीति ते मुनयः प्रोचुः ॥५९॥ अथागत्य देवराजोऽब्रवीत् मामयं धास्यतीति ॥६०॥ ततो मांधातृनामा सोऽभवत्; वक्त्रे चास्य प्रदेशिनी देवेंद्रेण न्यस्ता तां पपौ ॥ ६१ ॥ तां चामृत-स्राविणीमास्वाद्याह्नैव स व्यवर्धत ॥ ६२ ॥ ततस्तु मांधाता चक्रवर्ती सप्तद्वीपां महीं बुभुजे ॥ ६३ ॥ तत्रायं श्लोकः ॥ ६४ ॥

---

भोभो इति ॥ प्रणयभंगः—प्रणयो याच्ञा ॥ २८—२९ ॥

इतीति ॥ समन्विच्छितम्—अनुमतम ॥ ३०—३९ ॥

य इति ॥ एकविंशतिभिरित्येतत्संख्येयपरम् ॥ ४० ॥ तस्य चेति ॥ विप्लुष्टाः—दग्धाः ॥ ४१-५१ ॥

सुप्तानिति ॥ नैवोत्थापयामास क्षुत्तृट्क्षामकंठत्वान्निद्राभंगभयाद्वा ॥ ५२, ५७ ॥

स इति ॥ स चासौ राजा ममार ॥ ५८ ॥ जात इति ॥ कं धास्यतीति स्तनाभावात ॥ ५९-६४ ॥

यावत्सूर्य उदेत्यस्तं यावच्च प्रतितिष्ठति । सर्वं तद्यौवनाश्वस्य मांधातुः क्षेत्रमुच्यते ॥ ६५ ॥ मांधाता शतबिंदो र्दुहितरं बिंदुमतीमुपयेमे ॥ ६६ ॥ पुरुकुत्समंबरीषं मुचुकुंदं च तस्यां पुत्रत्रयमुत्पादयामास ॥ ६७ ॥ पंचाशद्दुहितरस्तस्यामेव तस्य नृपतेर्बभूवुः ॥ ६८ ॥ एतस्मिन्नंतरे बह्वृचः सौभरिर्नाम महर्षिरन्तर्जले द्वादशाब्दं कालमुवास ॥ ६९ ॥ तत्र चान्तर्जले संमदो नामातिबहुप्रजोऽतिमात्रप्रमाणो मीनाधिपतिरासीत् ॥ ७० ॥ तस्य च पुत्रपौत्रदौहित्राः पृष्ठतोऽग्रतः पार्श्वयोः पक्षपुच्छशिरसां चोपरि भ्रमन्तस्तेनैव सदाऽहर्निशमतिनिर्वृता रेमिरे ॥ ७१ ॥ स चापत्यस्पर्शोपचीयमानप्रहर्षप्रकर्षो बहुप्रकारं तस्य ऋषेः पश्यतः स्वैः पुत्रपौत्रदौहित्रादिभिः सहानुदिनं सुतरां रेमे॥७२॥ अथान्तर्जलावस्थितस्सौभरिरेकाग्रतासमाधिमपहायानुदिनं तस्य मत्स्यस्यात्मजपौत्रदौहित्रादिभिस्सहातिरमणीयं लालितमवेक्ष्याचिन्तयत् ॥ ७३ ॥ अहो धन्योऽयमीदृशमप्यनभिमतं योन्यन्तरमवाप्यैभिरात्मजपौत्रदौहित्रादिभिस्सह रममाणोऽतीवास्माकं स्पृहामुत्पादयति ॥ ७४ ॥ वयमप्येवं पुत्रादिभिः सह ललितं रमिष्याम इत्येवमभिकांक्षन् स तस्मादन्तर्जलान्निष्क्रम्य संतानाय निवेष्टुकामः कन्यार्थं मांधातारं राजानमगच्छत् ॥ ७५ ॥ आगमनश्रवणसमनन्तरं चोत्थाय तेन राज्ञा सम्यगर्घ्यादिना पूजितः कृतासनपरिग्रहः सौभरिरुवाच राजानम् ॥ ७६ ॥

सौभरिः—निवेष्टुकामोऽस्मि नरेन्द्र कन्यां प्रयच्छ मे मा प्रणयं विभाङ्क्षीः ।
न ह्यर्थिनः कार्यवशादुपेताः ककुत्स्थवंशे विमुखाः प्रयान्ति ॥ ७७ ॥
अन्येऽपि सन्त्येव नृपाः पृथिव्यां मांधातरेषां तनयाः प्रसूताः ।
किं त्वर्थिनामर्थितदानदीक्षाकृतव्रतं श्लाघ्यमिदं कुलं ते ॥ ७८ ॥
शतार्धसंख्यास्तव सन्ति कन्यास्तासां ममैकां नृपते प्रयच्छ ।
यत्प्रार्थनाभंगभयाद्बिभेमि तस्मादहं राजवरातिदुःखात् ॥ ७९ ॥

श्रीपराशरः—इति ऋषिवचनमाकर्ण्य स राजा जराजर्झरितदेहं तमृषिमालोक्य प्रत्याख्यानकातरस्तस्माच्च शापभीतो बिभ्यत्किंचिदधोमुखश्चिरं दध्यौ ॥ ८० ॥

सौभरिरुवाच—नरेन्द्र कस्मात्समुपैषि चिन्तामसह्यमुक्तं न मयाऽत्र किंचित् ।
याऽवश्यदेया तनया तयैव कृतार्थता नो यदि किं न लब्धा ॥ ८१ ॥

श्रीपराशरः—अथ तस्य भगवतश्शापभीतस्सप्रश्रयस्तमुवाचासौ राजा ॥ ८२ ॥

---

यावदिति ॥ यावत्तावच्च साकल्ये ॥ ६५—७२ ॥ अथेति ॥ लालितं—क्रीडितम् ॥ ७३, ७४ ॥

वयमिति ॥ निवेष्टुकामः—उद्वोढुकामः ॥ ७५, ७६ ॥

निवेष्टुकाम इति ॥ प्रणयं—याच्ञाम्, मां विभांक्षीः—भग्नं मा कृथाः ॥ ७७, ७८ ॥

शतार्धेति ॥ अतिदुःखात्प्रार्थनाभंगभयाद्बिभेमीति यत् तस्मात्कन्यां प्रयच्छ ॥ ७९ ॥

इतीति ॥ शापतः—शापात् कारणात् । तस्मात्—मुनेः बिभ्यत् ॥ ८० ॥

नरेन्द्रेति ॥ किं न लब्धा—किं न लप्स्यते? कर्मणि लुट् । न लब्धमिति पाठे, मया किं न लब्धम्? कृतार्थोऽस्मीत्यर्थः ॥ ८१, ८२ ॥

राजा—भगवन् अस्मत्कुलस्थितिरियं य एव कन्याभिरुचितोऽभिजनवान्वरस्तस्मै कन्या प्रदीयते भगवद्याच्ञा चास्मन्मनोरथानामप्यतिगोचरवर्तिनी कथमप्येषा संजाता। तदेवमुपस्थिते न विद्मः किं कुर्म इत्येतन्मयाऽचिन्त्यत इत्यभिहिते च तेन भूभुजा मुनिरचिन्तयत् ॥ ८३ ॥

अयमन्योऽस्मत्प्रत्याख्यानोपायः, वृद्धोऽयमनभिमतः स्त्रीणां किमुत कन्यकानामित्यमुना संचिन्त्यैतदभिहितम्, एवमस्तु तथा करिष्यामीति संचिन्त्य मांधातारमुवाच ॥ ८४ ॥

यद्येवं तदादिश्यतामस्माकं प्रवेशाय कन्यान्तःपुरं वर्षवरः, यदि कन्यैव काचिन्मामभिलषति तदाऽहं दारसंग्रहं करिष्यामि; अन्यथा चेत्तदलमस्माकमेतेनातीतकालारंभेणेत्युक्त्वा विरराम ॥ ८५ ॥

ततश्च मांधात्रा मुनिशापशंकितेन कन्यान्तःपुरवर्षवरस्समाज्ञप्तः ॥ ८६ ॥ तेन सह कन्यान्तःपुरं प्रविशन्नेव भगवानखिलसिद्धगंधर्वमनुष्येभ्योऽतिशयेन कमनीयं रूपमकरोत् ॥ ८७ ॥ प्रवेश्य च तमृषिमन्तःपुरे वर्षवरस्ताः कन्याः प्राह ॥ ८८ ॥ भवतीनां जनयिता महाराजस्समाज्ञापयति ॥८९॥ अयमस्मान् ब्रह्मर्षिः कन्यार्थं समभ्यागतः ॥ ९० ॥ मया चास्य प्रतिज्ञातं यद्यस्मत्कन्या या काचिद्भगवन्तं वरयति तत्कन्याच्छंदे नाहं परिपंथानं करिष्यामीत्याकर्ण्य सर्वा एव ताः कन्याः सानुरागाः सप्रमदाः करेणव इवेभयूथपतिं तमृषिमहमहमिकया वरयांबभूवुरूचुश्च ॥ ९१ ॥

अलं भगिन्योऽहमिमं वृणोमि वृणोम्यहं नैष तवानुरूपः।
ममैष भर्ता विधिनैव सृष्टस्सृष्टाऽहमस्योपशमं प्रयाहि ॥ ९२ ॥

वृतो मयाऽयं प्रथमं मयाऽयं गृहं विशन्नेव विहन्यसे किम्।
मया मयेति क्षितिपात्मजानां तदर्थमत्यन्तकलिर्बभूव ॥ ९३ ॥

यदा तु सर्वाभिरतीव हार्दाद्वृतस्स कन्याभिरनिन्द्यकीर्तिः।
तदा स कन्याधिकृतो नृपाय यथावदाचष्ट विनम्रमूर्तिः ॥ ९४ ॥

श्रीपराशरः—तदवगम्य किमेतत्कथमेतत्किं करोमि किं मयाऽभिहितमित्याकुलमतिरनिच्छन्नपि कथमपि राजाऽनुमेने ॥ ९५ ॥ कृतानुरूपविवाहश्च महर्षिस्सकला एव ताः कन्यास्स्वमाश्रममनयत् ॥ ९६ ॥

तत्र चाशेषशिल्पकल्पप्रणेतारं धातारमिवान्यं विश्वकर्माणमाहूय सकलकन्यानामेकैकस्याः प्रोत्फुल्लपंकजाः कूजत्कलहंसकारंडवादिविहंगमाभिरामजलाशयास्सोपवनास्सोपधानाः सावकाशास्साधुशय्यापरिच्छदाः प्रासादाः क्रियन्तामित्यादिदेश ॥ ९७ ॥ तच्च तथैवानुष्ठितमशेषशिल्पविशेषाचार्यः त्वष्टा दर्शितवान् ॥ ९८ ॥

---

भगवन्निति ॥ भवद्याच्ञा मनोरथानामगोचरवर्तिनी—अत्यंतदुर्लभा, कथमप्येषा संजाता दैवात् ॥ ८३–९० ॥ मयेति ॥ छंदे—इच्छायां, परिपंथानं—प्रातिकूल्यम्। सप्रमदाः। प्रमदो हर्षः ॥ ९१, ९२ ॥

वृत इति ॥ कलिः—कलहः ॥ ९३–९६ ॥

तत्रेति ॥ शिल्पकल्पः—शिल्पशास्त्रम् ॥ ९७, ९८ ॥

ततः परमर्षिणा सौभरिणाऽऽज्ञप्तस्तेषु गृहेष्वनिवार्यानंदकुंदमहानिधिरासांचक्रे ॥ ९९ ॥
ततोऽनवरतभक्ष्यभोज्यलेह्याद्युपभोगैरागतानुगतभृत्यादीनहर्निशमशेषगृहेषु ताः क्षितीशदुहितरो भोजयामासुः ॥ १०० ॥ एकदा दुहितृस्नेहाकृष्टहृदयस्स महीपतिःकिमतिदुःखितास्ता उत सुखिता वा ? इति विचिन्त्य तस्य महर्षेराश्रमसमीपमुपेत्य स्फुरदंशुमालाललामां स्फटिकमणिमयप्रासादमालामतिरम्योपवनजलाशयां ददर्श ॥ १०१ ॥

प्रविश्य चैकं प्रासादमात्मजां परिष्वज्य कृतासनपरिग्रहः प्रवृद्धस्नेहनयनांबुगर्भोऽब्रवीत् ॥ १०२ ॥ अप्यत्र वत्से भवत्यास्सुखमुत किंचिदसुखम् ? अपि ते महर्षिस्स्नेहवानुत न ? स्मर्यतेऽस्मद्गृहवासः ? इत्युक्ता तं तनया पितरमाह ॥ १०३ ॥ तातातिरमणीयः प्रासादोऽत्रातिमनोज्ञमुपवनमेते कलवाक्यविहंगमाभिरुताः प्रोत्फुल्लपद्माकरजलाशयाः मनोनुकूलभक्ष्यभोज्यानुलेपनवस्त्रभूषणादिभोगो मृदूनि शयनासनानि सर्वसंपत्समेतं मे गार्हस्थ्यम् ॥ १०४ ॥ तथापि केन वा जन्मभूमिर्न स्मर्यते ?॥ १०५ ॥ त्वत्प्रसादादिदमशेषमतिशोभनम् ॥ १०६ ॥ किं त्वेकं ममैतद्दुःखकारणं यदस्मद्गृहात् महर्षिरयमस्मद्भर्ता न निष्क्रामति, ममैव केवलमतिप्रीत्या समीपपरिवर्ती, नान्यासामस्मद्भगिनीनाम् ॥ १०७ ॥ एवं च मम सोदर्योऽतिदुःखिता इत्येवमतिदुःखकारणमित्युक्तस्तया द्वितीयं प्रासादमुपेत्य स्वतनयां परिष्वज्योपविष्टस्तथैव पृष्टवान् ॥ १०८ ॥ तयाऽपि च सर्वमेव प्रासादाद्युपभोगसुखं भृशमाख्यातं स्वपित्रे, ममैव केवलमतिप्रीत्या भर्ता पार्श्वपरिवर्ती नान्यासामस्मद्भगिनीनामित्येवमादि श्रुत्वा समस्तप्रासादेषु राजा प्रविश्य तनयास्तथैवापृच्छत् ॥ १०९ ॥ सर्वाभिश्च ताभिस्तथैवाभिहितः परितोषविस्मयनिर्भरविवशहृदयो भगवन्तं सौभरिमेकान्तावस्थितमुपेत्य कृतपूजोऽब्रवीत् ॥ ११० ॥ दृष्टस्ते भगवन् सुमहानेष सिद्धिप्रभावः, नैवंविधमन्यस्य कस्यचिदस्माभिर्विभूतिविलसितमुपलक्षितं कियदेतद्भगवतस्तपसः फलमित्यभिपूज्य तमृषिं तत्रैव तेन ऋषिवर्येण सह कंचित्कालमभिमतोपभोगान् भुजे स्वपुरं च जगाम ॥ १११ ॥ कालेन गच्छता तस्य तासु राजतनयासु पुत्रशतं सार्धमभवत् ॥ ११२ ॥ अनुदिनानुरूढस्नेहप्रसरश्च स तत्रातीव ममताकृष्टहृदयोऽभवत् ॥ ११३ ॥ अप्येतेऽस्मत्पुत्राः कलभाषिणः पद्भ्यां गच्छेयुः ? अप्येते यौवनिनो भवेयुः ? अपि कृतदारानेतान् पश्येम ? अप्येषां पुत्रा भवेयुः ? अप्येतत्पुत्रान्पुत्रसमन्वितान्पश्येमेत्यादिमनोरथाननुदिनं कालसंपत्तिप्रवृद्धानवेक्ष्यैतच्चिन्तयामास ॥ ११४ ॥ अहो मे मोहस्यातिविस्तारः ॥ ११५ ॥

मनोरथानां न समाप्तिरस्ति वर्षायुतेनाप्यथवापि लक्षैः ।
पूर्णेषु पूर्णेषु मनोरथानामुत्पत्तयस्सन्ति पुनर्नवानाम् ॥ ११६ ॥

---

तत इति ॥ कुंदमहानिधिः—कुंदाख्यनिधिविशेषः । * निधिर्ना शेवधिर्भेदाः पद्मशंखादयो निधेः । महापद्मश्च पद्मश्च शंखो मकरकच्छपौ ॥ मुकुंदकुंदनीलाश्च वरश्च निधयो नव । इत्यमरसिंहः ॥ ९९ ॥

तत इति ॥ अनुगताः—अनुचराः ॥ १००, १०१ ॥

प्रविश्य चेति ॥ प्रवृद्धेन स्नेहेन नयनयोरम्बुगर्भो यस्य स तथोक्तः ॥ १०२–११६ ॥

पद्भ्यां गता यौवनिनश्च जाता दारैश्च संयोगमिताः प्रसूताः ।
दृष्टास्सुतास्तत्तनयप्रसूतिं द्रष्टुं पुनर्वाञ्छति मेऽन्तरात्मा ॥ ११७ ॥

द्रक्ष्यामि तेषामपि चेत्प्रसूतिं मनोरथो मे भविता ततोऽन्यः ।
पूर्णेऽपि तस्याप्यपरस्य जन्म निवार्यते केन मनोरथस्य ॥ ११८ ॥

आमृत्युतो नैव मनोरथानामन्तोऽस्ति विज्ञातमिदं मयाऽद्य ।
मनोरथासक्तिपरस्य चित्तं न जायते वै परमार्थसंगि ॥ ११९ ॥

स मे समाधिर्जलवासमित्रमत्स्यस्य संगात्सहसैव नष्टः ।
परिग्रहस्संगकृतो मयाऽयं परिग्रहोत्था च ममतिलिप्सा ॥ १२० ॥

दुःखं यदैवैकशरीरजन्म शतार्द्धसंख्याकमिदं प्रसूतम् ।
परिग्रहेण क्षितिपात्मजानां सुतैरनेकैर्बहुलीकृतं तत् ॥ १२१ ॥

सुतात्मजैस्तत्तनयैश्च भूयो भूयश्च तेषां च परिग्रहेण ।
विस्तारमेष्यत्यतिदुःखहेतुः परिग्रहो वै ममताभिधानः ॥ १२२ ॥

चीर्णं तपो यत्तु जलाश्रयेण तस्यर्द्धिरेषा तपसोऽन्तरायः ।
मत्स्यस्य संगादभवच्च यो मे सुतादिरागो मुषितोऽस्मि तेन ॥ १२३ ॥

निस्संगता मुक्तिपदं यतीनां संगादशेषाः प्रभवन्ति दोषाः ।
आरूढयोगोऽपि निपात्यतेऽधस्संगेन योगी किमुताल्पसिद्धिः ॥ १२४ ॥

सोऽहं चरिष्यामि तथात्मनोऽर्थे परिग्रहग्राहगृहीतबुद्धिः ।
यथा हि भूयः परिहीनदोषो जनस्य दुःखैर्भविता न दुःखी ॥ १२५ ॥

सर्वस्य धातारमचिन्त्यरूपमणोरणीयांसमतिप्रमाणम् ।
सितासितं चेश्वरमीश्वराणामाराधयिष्ये तपसैव विष्णुम् ॥ १२६ ॥

तस्मिन्नशेषौजसि सर्वरूपिण्यव्यक्तविस्पष्टतनावनन्ते ।
ममाचलं चित्तमपेतदोषं सदाऽस्तु विष्णावभवाय भूयः ॥ १२७ ॥

---

पद्भ्यामिति ॥ प्रसूताः—जातापत्याः ॥ ११७–११९ ॥ स इति ॥ लिप्सा—लब्धुमिच्छा ॥ १२०, १२१ ॥ सुतेति ॥ तेषां स्वपरिग्रहेण—तेषां स्वं—पुत्रपौत्रादि, तत्परिग्रहेण । विस्तारमेष्यतीत्यन्वयः ॥ १२२–१२४ ॥ सोऽहमिति ॥ जनस्य—भार्यादेः ॥ १२५ ॥

सर्वस्येति ॥ सितासितं—बद्धमुक्तरूपेण स्थितम् । यद्वा—युगभेदेन सितासितवर्णम् ॥ १२६, १२७ ॥

समस्तभूतादमलादनन्तात्सर्वेश्वरादन्यदनादिमध्यात् ।
यस्मान्न किंचित्तमहं गुरूणां परं गुरुं संश्रयमेमि विष्णुम् ॥ १२८ ॥

श्रीपराशरः—इत्यात्मानमात्मनैवाभिधायासौ सौभरिरपहाय पुत्रगृहासनपरिच्छदादिकमशेषमर्थजातं सकलभार्यासमन्वितो वनं प्रविवेश ॥ १२९ ॥ तत्राप्यनुदिनं वैखानसनिष्पाद्यमशेषक्रियाकलापं निष्पाद्य क्षपितसकलपापः परिपक्वमनोवृत्तिरात्मन्यग्नीन्समारोप्य भिक्षुरभवत् ॥ १३० ॥ भगवत्यासज्याखिलं कर्मकलापम् अजमविकारमरणादिधर्ममवाप परमनन्तं परवतामच्युतं पदम् ॥ १३१ ॥ इत्येतन्मांधातृदुहितृसंबंधादाख्यातम् ॥ १३२ ॥ यश्चैतत्सौभरिचरितमनुस्मरति पठति पाठयति शृणोति श्रावयति धरत्यवधारयति लिखति लेखयति शिक्षयत्यध्यापयत्युपदिशति वा तस्याष्टौ जन्मानि दुस्संततिरसद्धर्मो वाङ्मनसोरसन्मार्गानुसरणमशेषहेयेषु वा ममत्वं न भवति ॥ १३३ ॥

इति श्रीविष्णुपुराणे चतुर्थांशे द्वितीयोऽध्यायः ॥ २ ॥

## अथ तृतीयोऽध्यायः

अतश्च मांधातुः पुत्रसंततिरभिधीयते ॥ १ ॥ अंबरीषस्य मांधातृतनयस्य युवनाश्वः पुत्रोऽभूत् ॥ २ ॥ तस्माद्धारीतः यतोऽङ्गिरसो हारीताः ॥ ३ ॥ रसातले मौनेया नाम गंधर्वा बभूवुष्षट्कोटिसंख्याता-स्तैरशेषाणि नागकुलान्यपहृतप्रधानरत्नाधिपत्यान्यक्रियन्त ॥ ४ ॥ तैश्च गंधर्ववीर्यावधूतैरुरगेश्वरैः स्तूयमानो भगवानशेषदेवेशः स्तवश्रवणोन्मीलितोन्निद्रपुण्डरीकनयनो जलशयनो निद्रावसानप्रबुद्धः प्रणिपत्याभिहितः, भगवन्नस्माकमेतेभ्यो गंधर्वेभ्यो भयमुत्पन्नं कथमुपशममेष्यतीति ॥ ५ ॥ आह च भगवाननादिनिधनः पुरुषोत्तमो योऽसौ यौवनाश्वस्य मांधातुः पुरुकुत्सनामा पुत्रस्तमहमनुप्रविश्य तानशेषान् दुष्टगंधर्वानुपशमं नयिष्यामीति ॥ ६ ॥ तदाकर्ण्य भगवते जलशायिने कृतप्रणामाः पुनर्नागलोकमागताः पन्नगाधिपतयो नर्मदां च पुरुकुत्सानयनाय चोदयामासुः ॥ ७ ॥ सा चैनं रसातलं नीतवती ॥ ८ ॥ रसातलगतश्चासौ भगवत्तेजसाऽऽप्यायितात्मवीर्यस्सकलगंधर्वान्निजघान ॥ ९ ॥ पुनश्च स्वपुरमाजगाम ॥ १० ॥ सकलपन्नगाधिपतयश्च नर्मदायै वरं ददुः, यस्तेऽनुस्मरणसमवेतं नामग्रहणं करिष्यति न तस्य सर्पविषभयं भविष्यतीति ॥ ११ ॥ अत्र च श्लोकः ॥ १२ ॥
नर्मदायै नमः प्रातर्नर्मदायै नमो निशि । नमोऽस्तु नर्मदे तुभ्यं त्राहि मां विषसर्पतः ॥ १३ ॥

---

समस्तभूतादिति ॥ समस्तं भूतं जगद्रूपं यस्य सः तस्मात् समस्तभूतात् अन्यत्—अतदात्मकं किंचिदपि नास्ति ॥ १२८—१३० ॥ भगवतीति ॥ भगवत्यासज्य—भगवदाराधनमित्यनुसंधाय ॥ १३१-१३३ ॥

इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये चतुर्थेंशे द्वितीयोऽध्यायः ॥ २ ॥

## अथ तृतीयोऽध्यायः ॥

१, २ ॥ तस्मादिति ॥ यतोंगिरस इति । अथ हारीतानां त्र्यार्षेयाः आंगिरसांबरीषयौवनाश्वा इति प्रवरपाठात् ॥ ३ ॥ रसातल इति ॥ मौनेयाः—काश्यपपत्न्याः मुनेस्तनयाः ॥ ४ ॥ तैश्चेति ॥ जलशयनं—क्षीराब्धौ शेषतल्पम् ॥ ५-१३ ॥

इत्युच्चार्याहर्निशमंधकारप्रवेशे वा सर्पैर्न दश्यते, न चापि कृतानुस्मरणभुजो विषमपि भुक्तमुपघाताय भवति ॥ १४ ॥ पुरुकुत्साय च संततिविच्छेदो न भविष्यतीत्युरगपतयो वरं ददुः ॥ १५ ॥ पुरुकुत्सो नर्मदायां त्रसदस्युमजीजनत् ॥ १६ ॥ त्रसदस्युतस्संभूतोऽनरण्यः यं रावणो दिग्विजये जघान ॥१७॥ अनरण्यस्य पृषदश्वः, पृषदश्वस्य हर्यश्वः पुत्रोऽभवत् ॥ १८ ॥ तस्य च हस्तः पुत्रोऽभवत् ॥ १९ ॥ ततश्च वसुमनास्तस्यापि त्रिधन्वा त्रिधन्वनस्त्रय्यारुणिः ॥ २० ॥

त्रय्यारुणेस्सत्यव्रतः योऽसौ त्रिशंकुसंज्ञामवाप ॥ २१ ॥ स चंडालतामुपगतश्च ॥ २२ ॥

द्वादशवार्षिक्यामनावृष्ट्यां विश्वामित्रकलत्रापत्यपोषणार्थं चंडालप्रतिग्रहपरिहरणाय च जाह्नवीतीरन्यग्रोधे मृगमांसमनुदिनं बबंध ॥ २३ ॥ स तु परितुष्टेन विश्वामित्रेण सशरीरस्स्वर्गमारोपितः ॥ २४ ॥ त्रिशंकोर्हरिश्चंद्रस्तस्माच्च रोहिताश्वस्ततश्च हरितो हरितस्य चंचुश्चंचोर्विजयवसुदेवौ रुरुको विजयाद्रुरुकस्य वृकः ॥ २५ ॥ ततो वृकस्य बाहुः योऽसौ हैहयतालजंघादिभिः पराजितोऽन्तर्वत्न्या महिष्या सह वनं प्रविवेश ॥ २६ ॥ तस्याश्च सपत्न्या गर्भस्तंभनाय गरो दत्तः ॥ २७ ॥ तेनास्या गर्भः सप्तवर्षाणि जठर एव तस्थौ ॥ २८ ॥ स च बाहुर्वृद्धभावादौर्वाश्रमसमीपे ममार ॥ २९ ॥

सा तस्य भार्या चितां कृत्वा तमारोप्यानुमरणकृतनिश्चयाऽभूत् ॥ ३० ॥ अथैतामतीतानागतवर्तमानकालत्रयवेदी भगवानौर्वस्स्वाश्रमान्निर्गत्याब्रवीत् ॥ ३१ ॥ अलमलमनेनासद्ग्राहेणाखिलभूमण्डलपतिरतिवीर्यपराक्रमो नैकयज्ञकृदरातिपक्षक्षयकर्ता तवोदरे चक्रवर्ती तिष्ठति ॥ ३२ ॥ मैवमतिसाहसाध्यवसायिनी भवेत्युक्ता सा तस्मादनुमरणनिर्बन्धाद्विरराम ॥ ३३ ॥ तेनैव च भगवता स्वाश्रममानीता ॥ ३४ ॥ तत्र कतिपयदिनाभ्यन्तरे च सहैव तेन गरेणातितेजस्वी बालको जज्ञे ॥ ३५ ॥ तस्यौर्वो जातकर्मादिक्रिया निष्पाद्य सगर इति नाम चकार ॥ ३६ ॥ कृतोपनयनं चैनमौर्वो वेदशास्त्राण्यशेषाण्यस्त्रं चाग्नेयं भार्गवाख्यमध्यापयामास ॥ ३७ ॥ उत्पन्नबुद्धिश्च स मातरमब्रवीत् ॥३८॥ अंब कथय कथमत्र वयं क्व तातोऽस्माकमित्येवमादि पृच्छन्तं माता सर्वमेवावोचत् ॥ ३९ ॥ ततश्च पितृराज्यापहरणामर्षितो हैहयतालजंघादिवधाय प्रतिज्ञामकरोत् ॥ ४० ॥ प्रायशश्च हैहयतालजंघाञ्जघान ॥ ४१ ॥ शकयवनकांभोजपारदपह्लवाः हन्यमानास्तत्कुलगुरुं वसिष्ठं शरणं जग्मुः ॥ ४२ ॥ अथैनान्वसिष्ठो जीवन्मृतकान् कृत्वा सगरमाह ॥ ४३ ॥

---

इतीति ॥ कृतानुस्मरणभुजः—नर्मदां स्मृत्वा अन्नादि भुञ्जानस्य ॥ १४—२० ॥

त्रय्यारुणेरिति ॥ परिणीयमानविप्रकन्याहरणक्रुद्धस्य स्वपितुश्शापात् चंडालतां गतः, वसिष्ठधेनुं हत्वा वृथा जिघांसेति त्रिभिर्दोषैस्त्रिशंकुः । यथा हरिवंशे—* पितुश्शापादिदोषेण गुरुदोग्ध्रीवधेन च । अप्रोक्षितोपयोगाच्च त्रिविधस्तद्व्यतिक्रमः ॥ एवं त्रीण्यस्य शंकूनि तानि दृष्ट्वा महायशाः । त्रिशंकुरिति होवाच त्रिशंकुस्तेन स स्मृतः * इति ॥ २१—३१ ॥ अलमलमिति ॥ असद्ग्राहेण—वृथा निर्बंधेन ॥ ३२-४३ ॥

वत्सालमेभिर्जीवन्मृतकैरनुमृतैः ॥ ४४ ॥ एते च मयैव त्वत्प्रतिज्ञापरिपालनाय निजधर्मद्विजसंगपरित्यागं कारिताः ॥ ४५ ॥ तथेति तद्गुरुवचनमभिनन्द्य तेषां वेषान्यत्वमकारयत् ॥ ४६ ॥ यवनान्मुंडितशिरसोऽर्द्धमुंडिताञ्छकान् प्रलंबकेशान् पारदान् पह्लवाञ् श्मश्रुधरान् निस्स्वाध्यायवषट्कारानेतानन्यांश्च क्षत्रियांश्चकार ॥ ४७ ॥ ते चात्मधर्मपरित्यागाद्ब्राह्मणैः परित्यक्ता म्लेच्छतां ययुः॥४८॥

सगरोऽपि स्वमधिष्ठानमागम्य अस्खलितचक्रस्सप्तद्वीपवतीमिमामुर्वीं प्रशशास ॥ ४९ ॥

इति श्रीविष्णुपुराणे चतुर्थांशे तृतीयोऽध्यायः ॥ ३ ॥

## अथ चतुर्थोऽध्यायः

श्रीपराशरः—काश्यपदुहिता सुमतिर्विदर्भराजतनया केशिनी च द्वे भार्ये सगरस्यास्ताम् ॥ १ ॥ ताभ्यां चापत्यार्थमौर्वः परमेण समाधिनाराधितो वरमदात् ॥ २ ॥ एका वंशकरमेकं पुत्रमपरा षष्टिं पुत्रसहस्राणां जनयिष्यति यस्या यदभिमतं तदिच्छया गृह्यतामित्युक्ते केशिन्येकं वरयामास ॥ ३ ॥ सुमतिः पुत्रसहस्राणि षष्टिं वव्रे ॥ ४ ॥ तथेत्युक्ते अल्पैरहोभिः केशिनी पुत्रमेकमसमंजसनामानं वंशकरमसूत ॥ ५ ॥ काश्यपतनयायास्तु सुमत्याः षष्टिः पुत्रसहस्राण्यभवन् ॥ ६ ॥ तस्मादसमंजसादंशुमान्नाम कुमारो जज्ञे ॥ ७ ॥ स त्वसमंजसो बालो बाल्यदेवासद्वृत्तोऽभूत् ॥ ८ ॥ पिता चास्याचिन्तयदयमतीतबाल्यः सुबुद्धिमान् भविष्यतीति ॥ ९ ॥ अथ तत्रापि च वयस्यतीते असच्चरितमेवैनं पिता तत्याज ॥ १० ॥ तान्यपि षष्टिः पुत्रसहस्राण्यसमंजसचरितमेवानुचक्रुः ॥ ११ ॥ ततश्चासमंजसचरितानुकारिभिस्सागरैरपध्वस्तयज्ञादिसन्मार्गे जगति देवास्सकलविद्यामयमसंस्पृष्टमशेषदोषैर्भगवतः पुरुषोत्तमस्यांशभूतं कपिलं प्रणम्य तदर्थमूचुः ॥ १२ ॥ भगवन्नेभिस्सगरतनयैरसमंजसचरितमनुगम्यते ॥ १३ ॥ कथमेभिरसद्वृत्तमनुसरद्भिर्जगद्भविष्यतीति ॥ १४ ॥ अत्यार्तजगत्परित्राणाय च भगवतोऽत्र शरीरग्रहणमित्याकर्ण्य भगवानाहाल्पैरेव दिनैर्विनंक्ष्यन्तीति ॥ १५ ॥ अत्रान्तरे च सगरो हयमेधमारभत ॥ १६ ॥ तत्र च पुत्रैरधिष्ठितमस्याश्वं कोऽप्यपहृत्य भुवो बिलं प्रविवेश ॥१७॥

---

वत्सेति ॥ जीवन्मृतः * स्वधर्माद्यः परिभ्रष्टो विप्रैर्यश्च बहिष्कृतः । स जीवन्नेव लोकेऽस्मिन् मृत इत्यभिधीयते ॥ इति स्मृतेः । अनुमृतैः—पुनर्मृतैः ॥ ४४-४८ ॥ सगर इति ॥ चक्रम्—आज्ञा, बलं वा॥४९॥

इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये तृतीयोऽध्यायः ॥ ३ ॥

## अथ चतुर्थोऽध्यायः

१–७ ॥ स त्विति ॥ असद्वृत्तः—दुराचारः ॥ ८–१७ ॥

शैब्यसुग्रीवमेघपुष्पवलाहकाश्वचतुष्टययुक्तरथस्थितौ बलदेववासुदेवौ तमनुप्रयातौ ॥ ९२ ॥ सा च वडवा शतयोजनप्रमाणमार्गमतीता पुनरपि वाह्यमाना मिथिलावनोद्देशे प्राणानुत्ससर्ज ॥ ९३ ॥ शतधनुरपि तां परित्यज्य पदातिरेवाद्रवत् ॥ ९४ ॥ कृष्णोऽपि बलभद्रमाह ॥ ९५ ॥

तावदत्र स्यन्दने भवता स्थेयमहमेनमधमाचारं पदातिरेव पदातिमनुगम्य यावद्घातयामि । अत्र हि भूभागे दृष्टदोषास्सभयाः अतो नैतेश्वा भवतेमं भूमिभागमुल्लंघनीयाः ॥ ९६ ॥

तथेत्युक्त्वा बलदेवो रथ एव तस्थौ ॥ ९७ ॥ कृष्णोऽपि द्विक्रोशमात्रं भूमिभागमनुसृत्य दूरस्थितस्यैव चक्रं क्षिप्त्वा शतधनुषश्शिरश्चिच्छेद ॥ ९८ ॥ तच्छरीरांबरादिषु च बहुप्रकारमन्विच्छन्नपि स्यमन्तकमणिं नावाप यदा तदोपगम्य बलभद्रमाह ॥ ९९ ॥ वृथैवास्माभिः शतधनुर्घातितः; न प्राप्तमखिलजगत्सारभूतं तन्महारत्नं स्यमन्तकाख्यमित्याकर्ण्योद्भूतकोपो बलदेवो वासुदेवमाह ॥ १०० ॥ धिक्त्वां यस्त्वमेवमर्थलिप्सुः, एतच्च ते भ्रातृत्वान्मया क्षान्तम्; तदयं पन्थास्स्वेच्छया गम्यताम्; न मे द्वारकया न त्वया न चाशेषबंधुभिः कार्यमलमलमेभिर्ममाग्रतोऽलीकशपथैरित्याक्षिप्य तत्कथां कथंचित्प्रसाद्यमानोऽपि न तस्थौ ॥ १०१ ॥ स विदेहपुरीं प्रविवेश ॥ १०२ ॥ जनकराजश्चार्घ्यपूर्वकमेनं गृहं प्रवेशयामास ॥ १०३ ॥ स तत्रैव च तस्थौ ॥ १०४ ॥ वासुदेवोऽपि द्वारकामाजगाम ॥ १०५ ॥ यावच्च जनकराजगृहे बलभद्रोऽवतस्थे तावद्धार्त्तराष्ट्रो दुर्योधनस्तत्सकाशाद्गदाशिक्षामशिक्षयत् ॥ १०६ ॥

वर्षत्रयान्ते च बभ्रूग्रसेनप्रभृतिभिर्यादवैर्न तद्रत्नं कृष्णेनापहृतमिति कृतावगतिभिर्विदेहनगरीं गत्वा बलदेवस्संप्रत्याय्य द्वारकामानीतः ॥ १०७ ॥ अक्रूरोऽप्युत्तममणिसमुद्भूतसुवर्णेन भगवद्ध्यानपरोऽनवरतं यज्ञानियाज ॥ १०८ ॥ सवनगतौ हि क्षत्रियवैश्यौ निघ्नन्ब्रह्महा भवतीत्येवंप्रकारं दीक्षाकवचं प्रविष्ट एव तस्थौ ॥ १०९ ॥ द्विषष्टिवर्षाण्येवं तन्मणिप्रभावात्तत्रोपसर्गदुर्भिक्षमारिकामरणादिकं नाभूत् ॥ ११० ॥ अथाक्रूरपक्षीयैर्भोजैश्शत्रुघ्ने सात्वतस्य प्रपौत्रे व्यापादिते भोजैस्सहाक्रूरो द्वारकामपहायापक्रान्तः ॥ १११ ॥ तदपक्रान्तिदिनादारभ्य तत्रोपसर्गदुर्भिक्षव्यालानावृष्टिमारिकाद्युपद्रवा बभूवुः ॥ ११२ ॥ अथ यादवा बलभद्रोग्रसेनसमवेता मन्त्रममन्त्रयन् ॥ ११३ ॥

भगवानुरगारिकेतनः किमिदमेकदैव प्रचुरोपद्रवागमनमेतदालोच्यतामित्युक्तेऽन्धकनामा यदुवृद्धः प्राह ॥ ११४ ॥ अस्याक्रूरस्य पिता श्वफल्को यत्र यत्राभूत्तत्र तत्र दुर्भिक्षमारिकानावृष्ट्यादिकं नाभूत् ॥

---

न हीति ॥ रिपुचक्रं — रिपुबलम्। अमरवराणामपि मध्ये न कश्चिद्योद्धुं समर्थ इत्यन्वयः ॥ ८५-१०६ ॥

वर्षेति ॥ संप्रत्याय्य—विश्वास्य ॥ १०७, १०८ ॥

सवनेति ॥ सवनं—यज्ञः । एवंप्रकारम्—अवध्यतापादकम् ॥ १०९ ॥

द्विषष्टीति ॥ मारिका—जनमारिका ॥ ११०—११३ ॥

११५ ॥ काशीराजस्य विषये त्वनावृष्ट्यां च श्वफल्को नीतः ततश्च तत्क्षणादेव देवो ववर्ष ॥ ११६ ॥ काशीराजपत्न्याश्च गर्भे कन्यारत्नं पूर्वमासीत् ॥ ११७ ॥ सा च कन्या पूर्णेऽपि प्रसूतिकाले नैव निश्चक्राम ॥ ११८ ॥ एवं च तस्य गर्भस्य द्वादशवर्षाण्यनिष्क्रामतो ययुः ॥ ११९ ॥ काशीराजश्च तामात्मजां गर्भस्थामाह ॥ १२० ॥ पुत्रि कस्मान्न जायसे निष्क्रम्यतामास्यं ते द्रष्टुमिच्छामि एतां च मातरं किमिति चिरं क्लेशयिष्यसीत्युक्ता गर्भस्थैव व्याजहार ॥ १२१ ॥ तात यद्येकैकां गां दिनेदिने ब्राह्मणाय प्रयच्छसि तदहमन्यैस्त्रिभिर्वर्षैरस्माद्गर्भाचतोऽवश्यं निष्क्रमिष्यामीत्येद्वचनमाकर्ण्य राजा दिनेदिने ब्राह्मणाय गां प्रादात् ॥ १२२ ॥ साऽपि तावता कालेन जाता ॥ १२३ ॥ ततस्तस्याः पिता गांदिनीति नाम चकार । १२४ ॥ तां च गांदिनीं कन्यां श्वफल्कायोपकारिणे गृहमागतायार्घ्यभूतां प्रादात् ॥ १२५ ॥ तस्यामयमक्रूरः श्वफल्काज्जज्ञे ॥ १२६ ॥ तस्यैवंगुणमिथुनादुत्पत्तिः ॥ १२७ ॥ तत्कथमस्मिन्नपक्रान्ते अत्र दुर्भिक्षमारिकाद्युपद्रवा न भविष्यन्ति ॥ १२८ ॥ तदयमत्रानीयतामलमतिगुणवत्यपराधान्वेषणेनेति यदुवृद्धस्यांधकस्यैतद्वचनमाकर्ण्य केशवोग्रसेनबलभद्रपुरोगमैर्यदुभिः कृतापराधतितिक्षुभिरभयं दत्त्वा श्वफल्कपुत्रः स्वपुरमानीतः ॥ १२९ ॥

तत्र चागतमात्र एव तस्य स्यमन्तकमणेः प्रभावादनावृष्टिमारिकादुर्भिक्षव्यालाद्युपद्रवोपशमा बभूवुः ॥ १३० ॥ कृष्णश्चिन्तयामास ॥ १३१ ॥ स्वल्पमेतत्कारणं यदयं गांदिन्यां श्वफल्केनाक्रूरो जनितः ॥ १३२ ॥ सुमहांश्चायमनावृष्टिदुर्भिक्षमारिकाद्युपद्रवप्रतिषेधकारी प्रभावः ॥ १३३ ॥ तन्नूनमस्य सकाशे स महामणिः स्यमन्तकाख्यस्तिष्ठति ॥ १३४ ॥ तस्य ह्येवंविधाः प्रभावाः श्रूयन्ते ॥ १३५ ॥

अयमपि च यज्ञादनन्तरमन्यत्क्रत्वन्तरं तस्यानन्तरमन्यद्यज्ञान्तरं चाजस्रमविच्छिन्नं यजतीति ॥ १३६ ॥ अनल्पोपादानं चास्यासंशयमत्रासौ मणिवरस्तिष्ठतीति कृताध्यवसायोऽन्यत्प्रयोजनमुद्दिश्य सकलयादवसमाजमात्मगृह एवाचीकरत् ॥ १३७ ॥ तत्र चोपविष्टेष्वखिलेषु यदुषु पूर्वं प्रयोजनमुपन्यस्य पर्यवसिते च तस्मिन् प्रसंगान्तरपरिहासकथामक्रूरेण सह कृत्वा जनार्दनस्तमक्रूरमाह ॥ १३८ ॥ दानपते जानीम एव वयं यथा शतधन्वना तदिदमखिलजगत्सारभूतं स्यमन्तकं रत्नं भवतः समर्पितं तदशेषराष्ट्रोपकारकं भवत्सकाशे तिष्ठति; तिष्ठतु; सर्व एव वयं तत्प्रभावफलभुजः; किं त्वेष बलभद्रोऽस्मानाशंकितवान् तदस्मत्प्रीतये दर्शयस्वेत्यभिधाय जोषं स्थिते भगवति वासुदेवे सरत्नस्सोऽचिन्तयत् ॥ १३९ ॥ किमत्रानुष्ठेयम्? अन्यथा चेद्ब्रवीम्यहं तत्केवलाम्बरतिरोधानमन्विष्यन्तो रत्नमेते द्रक्ष्यन्ति अतिविरोधो न क्षम इति संचिन्त्य तमखिलजगत्कारणभूतं नारायणमाहाक्रूरः ॥ १४० ॥ भगवन्ममैतत्स्यमन्तकरत्नं शतधनुषा समर्पितम्, अपगते च तस्मिन्नद्य श्वः परश्वो वा भगवान् याचयिष्यतीति कृतमतिरतिकृच्छ्रेणैतावन्तं कालमधारयम् ॥ १४१ ॥ तस्य च धारणक्लेशेनाहमशेषोपभोगेष्वसंगिमानसो न वेद्मि स्वसुखकलामपि ॥ १४२ ॥

---

भगवानिति ॥ एतत्किमित्यन्वयः ॥ ११४–१२९ ॥

तत्र चेति ॥ तत्र बभूवुरित्यन्वयः ॥ १३०–१३५॥ अयमिति ॥ क्रत्वंतरं—क्रतुभेदम ॥ १३६॥

अनल्पेति ॥ उपादानं—जीविकाद्रव्यम् । अचीकरत्—कारितवान् ॥ १३७–१४२ ॥

एतावन्मात्रमप्यशेषराष्ट्रोपकारी धारयितुं न शक्नोतीति भवान्मन्यत इत्यात्मना न चोदितवान् ॥१४३॥ तदिदं स्यमन्तकरत्नं गृह्यतामिच्छया यस्याभिमतं तस्य समर्प्यताम् ॥ १४४ ॥

ततः स्वोदरवस्त्रनिगोपितमतिलघुकनकसमुद्गकगतं प्रकटीकृतवान् ॥ १४५ ॥ ततश्च निष्क्राम्य स्यमन्तकमणिं तस्मिन्यदुकुलसमाजे मुमोच ॥ १४६ ॥ मुक्तमात्रे च तस्मिन्नतिकान्त्या तदखिलमास्थानमुद्योतितम् ॥ १४७ ॥ अथाहाक्रूरः स एष मणिः शतधन्वनाऽस्माकं समर्पितः, यस्यायं स एनं गृह्णातु—इति ॥१४८॥ तमालोक्य सर्वयादवानां साधुसाध्विति विस्मितमनसां वाचोऽश्रूयन्त ॥१४९॥ तमालोक्यातीव बलभद्रो ममायमच्युतेनैव सामान्यस्समन्विच्छित इति कृतस्पृहोऽभूत् ॥ १५० ॥ ममैवायं पितृधनमित्यतीव च सत्यभामाऽपि स्पृहयांचकार ॥ १५१ ॥

बलसत्यावलोकनात्कृष्णोऽप्यात्मानं गोचक्रान्तरावस्थितमिव मेने ॥१५२॥ सकलयादवसमक्षं चाक्रूरमाह ॥१५३॥ एतद्धि मणिरत्नमात्मसंशोधनाय एतेषां यदूनां मया दर्शितम् । एतच्च मम बलभद्रस्य च सामान्यं पितृधनं चैतत्सत्यभामाया नान्यस्यैतत् ॥१५४॥

एतच्च सर्वकालं शुचिना ब्रह्मचर्यादिगुणवता ध्रियमाणमशेषराष्ट्रस्योपकारकमशुचिना ध्रियमाणमाधारमेव हन्ति ॥ १५५ ॥ अतोऽहमस्य षोडशस्त्रीसहस्रपरिग्रहादसमर्थो धारणे कथमेतत्सत्यभामा स्वीकरोति ॥ १५६ ॥ आर्यबलभद्रेणापि मदिरापानाद्यशेषोपभोगपरित्यागः कार्यः ॥ १५७ ॥ तदलं यदुलोकोऽयं बलभद्रः अहं च सत्या च त्वां दानपते प्रार्थयामः ॥ १५८ ॥ तद्भवानेव धारयितुं समर्थः ॥ १५९ ॥ त्वद्धृतं चास्य राष्ट्रस्योपकारकं तद्भवानशेषराष्ट्रनिमित्तमेतत्पूर्ववद्धारयत्वन्यन्न वक्तव्यमित्युक्तो दानपतिस्तथेत्याह जग्राह च तन्महारत्नम् ॥ १६० ॥ ततःप्रभृत्यक्रूरः प्रकटेनैव तेनातिजाज्वल्यमानेनात्मकण्ठावसक्तेनादित्य इवांशुमाली चचार ॥ १६१ ॥

इत्येतद्भगवतो मिथ्याभिशस्तिक्षालनं यः स्मरति न तस्य कदाचिदल्पाऽपि मिथ्याभिशस्तिर्भवति अव्याहताखिलेन्द्रियश्चाखिलपापमोक्षमवाप्नोति ॥ १६२ ॥

इति श्रीविष्णुपुराणे चतुर्थांशे त्रयोदशोऽध्यायः ॥ १३ ॥

---

एतावन्मात्रमिति ॥ एतावन्मात्रम्—अल्पपरिमाणं, रत्नमिति शेषः । रत्नधारणमात्रेणाप्ययमशेषराष्ट्रोपकारं न करोतीति कृष्णो मन्यत इत्यक्रूरोक्तिः स्वदोषापह्नवार्था ॥ १४३,१४४ ॥ तत इति ॥ समुद्गः—संपुटः ॥ १४५–१५१ ॥ बलेति ॥ गोचक्रेति । शकटस्य हि चक्रानडुहोरंतराऽवस्थितः जंतुर्यथा क्लिश्यति तद्वदित्यर्थः ॥ १५२–१६१ ॥

इतीति ॥ मिथ्याभिशस्तिक्षालनाय स्यमन्तककथाश्रवणासक्तेन * सिंहः प्रसेनमवधीदित्यादिश्लोकोऽनुसंधेयः । तथा च ब्राह्मे—* वासुदेवाभिशस्तिस्तु निशाकरमरीचिषु । स्थिता चतुर्थ्यामद्यापि मनुष्यानापतेच्च सा ॥ अतश्चतुर्थ्यां चन्द्रं तु प्रमादाद्वीक्ष्य संयतः । पठेद्धात्रीयकं वाक्यं प्राङ्मुखो वाऽप्युदङ्मुखः ॥ इति ॥१६२॥

इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये चतुर्थांशे त्रयोदशोऽध्यायः ॥ १३ ॥

## अथ चतुर्दशोऽध्यायः

श्रीपराशरः—

अनमित्रस्य पुत्रः शिनिर्नामाऽभवत् ॥ १ ॥ तस्यापि सत्यकः सत्यकात्सात्यकिर्युयुधानापरनामा ॥ २ ॥ तस्मादपि संजयः तत्पुत्रश्च कुणिः कुणेर्युगंधरः ॥ ३ ॥ इत्येते शैनेयाः ॥ ४ ॥

अनमित्रस्यान्वये वृष्णिः तस्मात् श्वफल्कः तत्प्रभावः कथित एव ॥ ५ ॥ श्वफल्कस्यान्यः कनीयांश्चित्रको नाम भ्राता ॥ ६ ॥ श्वफल्कादक्रूरो गांदिन्यामभवत् ॥ ७ ॥ तथोपमद्गुः ॥ ८ ॥ उपमद्गोर्मृदामृदविश्वारिमेजयगिरिक्षत्रोपक्षत्रशतघ्नारिमर्दनधर्मदृग्दृष्टधर्मगंधमोजवाहप्रतिवाहाख्याः पुत्रास्सुताराख्या कन्या च ॥ ९ ॥ देववानुपदेवश्चाक्रूरपुत्रौ ॥ ११ ॥ पृथुविपृथुप्रमुखाश्चित्रकस्य पुत्रा बभूवुः ॥ ११ ॥

कुकुरभजमानशुचिकंबलबर्हिषाख्यास्तथाऽन्धकस्य चत्वारः पुत्राः ॥ १२ ॥ कुकुराद्धृष्टः तस्माच्च कपोतरोमा ततश्च विलोमा तस्मादपि तुंबुरुसखोऽभवदनुसंज्ञश्च ॥ १३ ॥ अनोरानकदुंदुभिः ततश्चाभिजित् अभिजितः पुनर्वसुः ॥ १४ ॥ तस्याप्याहुकः पुत्रः आहुकी च कन्या ॥ १५ ॥ आहुकस्य देवकोग्रसेनौ द्वौ पुत्रौ ॥ १६ ॥ देववानुपदेवः सहदेवो देवरक्षिता च देवकस्य चत्वारः पुत्राः ॥ १७ ॥ तेषां वृकदेवोपदेवा देवरक्षिता श्रीदेवा शान्तिदेवा सहदेवा देवकी च सप्त भगिन्यः ॥ १८ ॥ ताश्च सर्वा वसुदेव उपयेमे ॥ १९ ॥ उग्रसेनस्यापि कंसन्यग्रोधसुनामानकाह्वशंकुसुभूमिराष्ट्रपालयुद्धतुष्टिसुतुष्टिमत्संज्ञाः पुत्रा बभूवुः ॥ २० ॥ कंसाकंसवतीसुतनूराष्ट्रपालिकाह्वाश्चोग्रसेनस्य तनूजा कन्याः ॥ २१ ॥

भजमानाच्च विदूरथः पुत्रोऽभवत् ॥ २२ ॥

---

## अथ चतुर्दशोध्यायः

अनमित्रस्य पौत्रस्सत्राजित, तत्प्रसंगात्स्यमन्तकाख्यानमुक्तम्। इदानीमनमित्रस्यैव संतानान्तरमुच्यते—अनमित्रस्येति ॥ १–४ ॥

सात्वतपुत्रस्य वृष्णेरेव संतानान्तरं वक्तुं प्रस्तुतेनानमित्रेण पितामहत्वसंबन्धं स्मारयति—अनमित्रस्यैवान्वये वृष्णिरिति ॥ ५–७ ॥

तथेति ॥ उपमद्ग्वाद्या अक्रूरसापत्न्याः ॥ ८–११ ॥

अंधकस्य—सत्वतात्मजस्य ॥ १२–२१ ॥

भजमानादिति ॥ तदग्रजात् भजमानाद्वंशान्तरम् ॥ २२ ॥

विदूरथाच्छूरः शूराच्छमी शमिनः प्रतिक्षत्रः तस्मात्स्वयंभोजः ततश्च हृदिकः ॥ २३ ॥ तस्यापि कृतवर्मशतधनुर्देवार्हदेवगर्भाद्याः पुत्राः बभूवुः ॥ २४ ॥ देवगर्भस्यापि शूरः ॥ २५ ॥ शूरस्यापि मारिषा नाम पत्न्यभवत् ॥ २६ ॥ तस्यां चासौ दश पुत्रानजनयद्वसुदेवपूर्वान् ॥ २७ ॥ वसुदेवस्य जातमात्रस्यैव तद्गृहे भगवदंशावतारमव्याहतदृष्ट्या पश्यद्भिर्देवैर्दिव्यानकदुंदुभयो वादिताः ॥ २८ ॥ ततश्चासावानकदुंदुभिसंज्ञामवाप ॥ २९ ॥ तस्य च देवभागदेवश्रवाष्टककुचक्रवत्सधारकसृजयश्यामशमिकगंडूषसंज्ञा नव भ्रातरोऽभवन् ॥ ३० ॥ पृथा श्रुतदेवा श्रुतकीर्तिः श्रुतश्रवा राजाधिदेवी च वसुदेवादीनां पंच भगिन्योऽभवन् ॥ ३१ ॥ शूरस्य कुन्तिर्नाम सखाऽभवत् ॥ ३२ ॥ तस्मै चापुत्राय पृथामात्मजां विधिना शूरो दत्तवान् ॥ ३३ ॥ तां च पाण्डुरुवाह ॥ ३४ ॥ तस्यां च धर्मानिलेन्द्रैर्युधिष्ठिरभीमसेनार्जुनाख्यास्त्रयः पुत्रास्समुत्पादिताः । ३५ ॥ पूर्वमेवानूढायाश्च भगवता भास्वता कानीनः कर्णो नाम पुत्रोऽजन्यत ॥ ३६ ॥ तस्याश्च सपत्नी माद्री नामाभूत् ॥ ३७ ॥ तस्यां च नासत्यदस्राभ्यां नकुलसहदेवौ पाण्डोः पुत्रौ जनितौ ॥ ३८ ॥ श्रुतदेवां तु वृद्धधर्मा नाम कारूश उपयेमे ॥ ३९ ॥ तस्यां च दंतवक्रो नाम महासुरो जज्ञे ॥ ४० ॥ श्रुतकीर्तिमपि केकयराजा उपयेमे ॥ ४१ ॥ तस्यां च संतर्दनादयः कैकेयाः पंच पुत्रा बभूवुः ॥ ४२ ॥ राजाधिदेव्यामावन्त्यौ विन्दानुविन्दौ जज्ञाते ॥ ४३ ॥ श्रुतश्रवसमपि चेदिराजो दमघोषनामोपयेमे ॥ ४४ ॥ तस्यां च शिशुपालमुत्पादयामास ॥ ४५ ॥ स वा पूर्वमप्युदारविक्रमो दैत्यानामादिपुरुषो हिरण्यकशिपुरभवत ॥ ४६ ॥ यश्च भगवता सकललोकगुरुणा नारसिंहेन घातितः ॥ ४७ ॥ पुनरपि अक्षयवीर्यशौर्यसंपत्पराक्रमगुणस्समाक्रान्तसकलत्रैलोक्येश्वरप्रभावो दशाननो नामाभूत ॥ ४८ ॥ बहुकालोपभुक्तभगवत्सकाशावाप्तशरीरपातोद्भवपुण्यफलो भगवता राघवरूपिणा सोऽपि निधनमुपपादितः ॥ ४९ ॥ पुनश्चेदिराजस्य दमघोषस्यात्मजश्शिशुपालनामाऽभवत् ॥ ५० ॥ शिशुपालत्वेऽपि भगवतो भूभारावतारणायावतीर्णांशस्य पुण्डरीकनयनाख्यस्योपरि द्वेषानुबन्धमतितराञ्चकार ॥ ५१ ॥ भगवता च स निधनमुपानीतस्तत्रैव परमात्मभूते मनस एकाग्रतया सायुज्यमवाप ॥ ५२ ॥

भगवान् यदि प्रसन्नो यथा अभिलषितं ददाति; तथा अप्रसन्नोऽपि निघ्नन् दिव्यमनुपमं स्थानं प्रयच्छति ॥ ५३ ॥

इति श्रीविष्णुपुराणे चतुर्थेंशे चतुर्दशोऽध्यायः ॥ १४ ॥

---

विदूरथादिति ॥ शूरो देवमीढाद्यः ॥ २३—५२ ॥

भगवानिति ॥ अप्रसन्नोऽपीति वस्तुस्वभावोक्तिः ॥ ५३ ॥

इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये चतुर्थांशे चतुर्दशोऽध्यायः ॥ १४ ॥

## अथ पञ्चदशोऽध्यायः

मैत्रेयः—

हिरण्यकशिपुत्वे च रावणत्वे च विष्णुना । अवाप निहतो भोगानप्राप्यानमरैरपि ॥ १ ॥

न लयं तत्र तेनैव निहतः स कथं पुनः । संप्राप्तः शिशुपालत्वे सायुज्यं शाश्वते हरौ ॥ २ ॥

एतदिच्छाम्यहं श्रोतुं सर्वधर्मभृतां वर । कौतूहलपरेणैतत्पृष्टो मे वक्तुमर्हसि ॥ ३ ॥

श्रीपराशर :—

दैत्येश्वरस्य वधायाखिललोकोत्पत्तिस्थितिविनाशकारिणा पूर्वं तनुग्रहणं कुर्वता नृसिंहरूपमाविष्कृतम् ॥ ४ ॥ तत्र च हिरण्यकशिपोर्विष्णुरयमित्येतन्न मनस्यभूत् ॥ ५ ॥ निरतिशयपुण्यसमुद्भूतमेतत्सत्त्वजातमिति ॥ ६ ॥ रजोद्रेकप्रेरितैकाग्रमतिस्तद्भावनायोगात्ततोऽवाप्तवधहेतुकीं निरतिशयामेवाखिलत्रैलोक्याधिक्यकारिणीं दशाननत्वे भोगसंपदमवाप ॥ ७ ॥ न तु स तस्मिन्ननादिनिधने परब्रह्मभूते भगवत्यनालम्बिनि कृते मनसस्तल्लयमवाप ॥ ८ ॥ एवं दशाननत्वेऽप्यनङ्गपराधीनतया जानकीसमासक्तचेतसा भगवता दाशरथिरूपधारिणा हतस्य तद्रूपदर्शनमेवासीत् नायमच्युत इत्यासक्तिर्विपद्यतोऽन्तःकरणे मानुषबुद्धिरेव केवलमस्याभूत् ॥ ९ ॥ पुनरप्यच्युतविनिपातमात्रफलमखिलभूमण्डलश्लाघ्यचेदिराजकुले जन्म अव्याहतैश्वर्यं शिशुपालत्वेऽप्यवाप ॥ १० ॥

तत्र त्वखिलानामेव स भगवन्नाम्नां त्वंकारकारणमभवत् ॥ ११ ॥ ततश्च तत्कालकृतानां तेषामशेषाणामेवाच्युतनाम्नामनवरतमनेकजन्मसुवर्धितविद्वेषानुबन्धिचित्तो विनिन्दनसंतर्जनादिषूच्चारणमकरोत् ॥ १२ ॥ तच्च रूपमुत्फुल्लपद्मदलामलाक्षमत्युज्ज्वलपीतवस्त्रधार्यमखिलकिरीटकेयूरहारकटकादिशोभितमुदार[पीवर]चतुर्बाहुशंखचक्रगदाधरमतिप्ररूढवैरानुभावादटनभोजनस्नानासनशयनादिष्वशेषावस्थान्तरेषु नान्यत्रोपययावस्य चेतसः ॥ १३ ॥ ततस्तमेवाक्रोशेषूच्चारयंस्तमेव हृदयेन धारयन्नात्मवधाय यावद्भगवद्धस्तचक्रांशुमालोज्ज्वलमक्षयतेजस्स्वरूपं ब्रह्मभूतमपगतद्वेषादिदोषं भगवन्तमद्राक्षीत् ॥ १४ ॥

---

## अथ पञ्चदशोऽध्यायः

॥ १–१० ॥ तत्र त्विति ॥ त्वंकाराणि करोतीति त्वंकारकं तस्य कारणं तत्प्रवृत्तिनिमित्तम् ॥ ११ ॥

ततश्चेति ॥ ऋषिप्रोक्तनामनिर्वचनानादरेण निन्दनार्थमुपेक्षया च भगवन्नामोच्चारणमकरोदिति संकीर्तनोक्तिः ॥ १२ ॥ तच्चेति ॥ तच्चेति मूर्तिध्यानोक्तिः ॥ १३, १४ ॥

तावच्च भगवच्चक्रेणाशु व्यापादितस्तत्स्मरणदग्धाखिलाघसंचयो भगवताऽन्तमुपनीतस्तस्मिन्नेव लयमुपययौ ॥ १५ ॥ एतत्तवाखिलं मयाऽभिहितम् ॥ १६ ॥ अयं हि भगवान् कीर्तितश्च संस्मृतश्च द्वेषानुबन्धेनापि अखिलसुरासुरादिदुर्लभं फलं प्रयच्छति, किमुत सम्यग्भक्तिमतामिति ॥ १७ ॥ वसुदेवस्य त्वानकदुंदुभेः पौरवीरोहिणीमदिराभद्रादेवकीप्रमुखाः बह्व्यः पत्न्योऽभवन् ॥ १८ ॥ बलभद्रशठसारणदुर्मदादीन्पुत्रान्रोहिण्यामानकदुंदुभिरुत्पादयामास ॥ १९ ॥ बलदेवोऽपि रेवत्यां विशठोल्मुकौ पुत्रावजनयत् ॥ २० ॥ सार्ष्टिमार्ष्टिशिशुसत्यसत्यधृतिप्रमुखाः सारणात्मजाः ॥ २१ ॥ भद्राश्वभद्रबाहुदुर्दमभूताद्याः रोहिण्याः कुलजाः ॥ २२ ॥ नन्दोपनन्दकृतकाद्या मदिरायास्तनयाः ॥ २३ ॥ भद्रायाश्चोपनिधिगदाद्याः ॥ २४ ॥ वैशाल्यां च कौशिकमेकमेवाजनयत् ॥ २५ ॥ आनकदुन्दुभेर्देवक्यामपि कीर्तिमत्सुषेणोदायुभद्रसेनऋजुदासभद्रदेवाख्याः षट् पुत्रा जज्ञिरे ॥ २६ ॥ तांश्च सर्वानेव कंसो घातितवान् ॥ २७ ॥ अनन्तरं च सप्तमं गर्भमर्धरात्रे भगवत्प्रहिता योगनिद्रा रोहिण्या जठरमाकृष्य नीतवती ॥ २८ ॥ कर्षणाच्चासावपि संकर्षणाख्यामगमत् ॥ २९ ॥ ततश्च सकलजगन्महातरुमूलभूतो भूतभविष्यदादिसकलसुरासुरमुनिजनमनसामप्यगोचरोऽब्जभवप्रमुखैरनलमुखैःप्रणम्यावनिभारहरणाय प्रसादितो भगवाननादिमध्यनिधनो देवकीगर्भमवततार वासुदेवः ॥ ३० ॥ तत्प्रसादविवर्धमानोरुमहिमा च योगनिद्रा नन्दगोपपत्न्या यशोदाया गर्भमधिष्ठितवती ॥ ३१ ॥ सुप्रसन्नादित्यचन्द्रादिग्रहमव्यालादिभयं स्वस्थमानसमखिलमेवैतज्जगदपास्ताधर्ममभवत्तस्मिंश्च पुण्डरीकनयने जायमाने ॥ ३२ ॥ जातेन च तेनाखिलमेवैतत्सन्मार्गवर्ति जगदक्रियत ॥ ३३ ॥ भगवतोऽप्यत्र मर्त्यलोकेऽवतीर्णस्य षोडशसहस्राण्येकोत्तरशताधिकानि भार्याणामभवन् ॥ ३४ ॥ तासां च रुक्मिणी सत्यभामा जांबवती चारुहासिनीप्रमुखा ह्यष्टौ पत्न्यः प्रधाना बभूवुः ॥ ३५ ॥ तासु चाष्टावयुतानि लक्षं च पुत्राणां भगवानखिलमूर्तिरनादिमानजनयत् ॥ ३६ ॥ तेषां च प्रद्युम्नचारुदेष्णसांबादयः त्रयोदश प्रधानाः ॥ ३७ ॥ प्रद्युम्नोऽपि रुक्मिणस्तनयां रुक्मवतीं नामोपयेमे ॥ ३८ ॥ तस्यामनिरुद्धो जज्ञे ॥ ३९ ॥ अनिरुद्धोऽपि रुक्मिण एव पौत्रीं सुभद्रां नामोपयेमे ॥ ४० ॥ तस्यामस्य वज्रो जज्ञे ॥ ४१ ॥ वज्रस्य प्रतिबाहुः तस्यापि सुचारुः ॥ ४२ ॥ एवमनेकशतसहस्रपुरुषसंख्यस्य यदुकुलस्य पुत्रसंख्या वर्षशतैरपि वक्तुं न शक्यते ॥ ४३ ॥ यतो हि श्लोकाविमावत्र चरितार्थौ ॥ ४४ ॥

तिस्रः कोटयस्सहस्राणामष्टाशीतिशतानि च । कुमाराणां गृहाचार्याश्चापयोगेषु ये रताः ॥ ४५ ॥
संख्यानं यादवानां कः करिष्यति महात्मनाम् । यत्रायुतानामयुतलक्षेणास्ते सदाहुकः ॥ ४६ ॥
देवासुरे हता ये तु दैतेयास्सुमहाबलाः । उत्पन्नास्ते मनुष्येषु जनोपद्रवकारिणः ॥ ४७ ॥
तेषामुत्सादनार्थाय भुवि देवा यदोः कुले । अवतीर्णाः कुलशतं यत्रैकाभ्यधिकं द्विज ॥ ४८ ॥

तावदिति ॥ लयं—सायुज्यम् ॥ १५–४६ ॥ देवासुर इति ॥ देवासुरे युद्धे ॥ ४७, ४८ ॥

विष्णुस्तेषां प्रमाणे च प्रभुत्वे च व्यवस्थितः । निदेशस्थायिनस्तस्य ववृधुस्सर्वयादवाः ॥ ४९ ॥

इति प्रसूतिं वृष्णीनां यश्शृणोति नरः सदा । स सर्वैः पातकैर्मुक्तो विष्णुलोकं प्रपद्यते ॥ ५० ॥

इति श्रीविष्णुपुराणे चतुर्थेंशे पंचदशोऽध्यायः ॥ १५ ॥

## अथ षोडशोऽध्यायः

श्रीपराशरः—इत्येष समासतस्ते यदोर्वंशः कथितः ॥ १ ॥ अथ दुर्वसोर्वंशमवधारय ॥ २ ॥ दुर्वसोर्वह्निरात्मजः वह्नेर्भार्गः भार्गाद्भानुः ततश्च त्रयीसानुः तस्माच्च करंदमः तस्यापि मरुत्तः ॥ ३ ॥ सोऽनपत्योऽभवत् ॥ ४ ॥ ततश्च पौरवं दुष्यन्तं पुत्रमकल्पयत् ॥ ५ ॥ एवं ययातिशापात्तद्वंशः पौरवमेव वंशं समाश्रितवान् ॥ ६ ॥

इति श्रीविष्णुपुराणे चतुर्थेंशे षोडशोऽध्यायः ॥ १६ ॥

## अथ सप्तदशोऽध्यायः

श्रीपराशरः—द्रुह्योस्तु तनयो बभ्रुः ॥ १ ॥ बभ्रोस्सेतुः ॥ २ ॥ सेतुपुत्र आरब्धनामा ॥ ३ ॥ आरब्धस्यात्मजो गांधारः गांधारस्य घर्मः घर्मात् घृतः घृतात् दुर्दमः ततः प्रचेताः ॥ ४ ॥ प्रचेतसः पुत्रश्शतधर्मः बहुलानां म्लेच्छानामुदीच्यानामाधिपत्यमकरोत् ॥ ५ ॥

इति श्रीविष्णुपुराणे चतुर्थेंशे सप्तदशोऽध्यायः ॥ १७ ॥

---

विष्णुरिति ॥ प्रमाणे—प्रतिकार्यनिर्णये ॥ ४९, ५० ॥

इति श्रीविष्णुपुराणे विष्णुचित्तीयव्याख्याने चतुर्थांशे पंचदशोऽध्यायः ॥ १५ ॥

### अथ षोडशोऽध्यायः

इतीति ॥ एष यदोर्वंशस्ते समासतः कथितः ॥ १–६ ॥

इति श्री विष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशे षोडशोऽध्यायः ॥ १६ ॥

### अथ सप्तदशोऽध्यायः

॥ १–४ ॥ प्रचेतस इति ॥ द्रुह्युवंश्यः प्रचेतसः पुत्रः म्लेच्छानामाधिपत्यमकरोत् ॥ ५–७ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थेंशे सप्तदशोऽध्यायः ॥ १७ ॥

## अथाष्टादशोऽध्यायः

श्रीपराशरः—ययातेश्चतुर्थपुत्रस्यानोस्सभानलचक्षुःपरमेषुसंज्ञास्त्रयः पुत्राः बभूवुः ॥ १ ॥ सभानलपुत्रः कालानलः ॥ २ ॥ कालानलात्सृंजयः ॥ ३ ॥ सृंजयात् पुरंजयः ॥ ४ ॥ पुरंजयाज्जनमेजयः ॥ ५ ॥ तस्मान्महाशालः ॥ ६ ॥ तस्माच्च महामनाः ॥ ७ ॥ तस्मादुशीनरतितिक्षू द्वौ पुत्रावुत्पन्नौ ॥८॥ उशीनरस्यापि शिबिनृगनवकृमिवर्माख्याः पंच पुत्रा बभूवुः ॥ ९ ॥ पृषदर्भसुवीरकेकयमद्रकाश्चत्वारश्शिबिपुत्राः ॥ १० ॥ तितिक्षोरपि रुशद्रथः पुत्रोऽभूत् ॥ ११ ॥ तस्यापि हेमः हेमस्यापि सुतपाः सुतपसश्च बलिः ॥ १२ ॥

यस्य क्षेत्रे दीर्घतमसाऽङ्गवङ्गकलिङ्गसुह्मपौण्ड्राख्यं बालेयं क्षत्रमजन्यत ॥ १३ ॥ तन्नामसन्ततिसंज्ञाश्च पञ्चविषयाः बभूवुः ॥ १४ ॥ अङ्गादनपानस्ततो दिविरथस्तस्माद्धर्मरथः ॥ १५ ॥ ततश्चित्ररथः रोमपादसंज्ञः ॥ १६ ॥ यस्य दशरथो मित्रं जज्ञे ॥ १७ ॥ यस्याजपुत्रो दशरथश्शान्तां नाम कन्यामनपत्यस्य दुहितृत्वे युयोज ॥ १८ ॥ रोमपादाच्चतुरङ्गः तस्मात्पृथुलाक्षः ॥ १९ ॥ ततश्चम्पः यश्चम्पां निवेशयामास ॥ २० ॥ चम्पस्य हर्यङ्गो नामात्मजोऽभूत् ॥ २१ ॥ हर्यङ्गाद्भद्ररथः भद्ररथाद्बृहद्रथः बृहद्रथाद्बृहत्कर्मा बृहत्कर्मणश्च बृहद्भानुस्तस्माच्च बृहन्मनाः बृहन्मनसो जयद्रथः ॥ २२ ॥

जयद्रथो ब्रह्मक्षत्रान्तरालसंभूत्यां पत्न्यां विजयं नाम पुत्रमजीजनत् ॥ २३ ॥ विजयश्च धृतिं पुत्रमवाप ॥ २४ ॥ तस्यापि धृतव्रतः पुत्रोऽभूत ॥ २५ ॥ धृतव्रतात्सत्यकर्मा ॥ २६ ॥ सत्यकर्मणस्त्वतिरथः ॥ २७ ॥

यो गङ्गां गतो मंजूषागतं पृथापविद्धं कर्णं पुत्रमवाप ॥ २८ ॥ कर्णाद्वृषसेनः इत्येतदन्ता अङ्गवंश्याः ॥ २९ ॥ ततश्च पूरुवंशं श्रोतुमर्हसि ॥ ३० ॥

इति श्रीविष्णुपुराणे चतुर्थेंशेऽष्टादशोऽध्यायः ॥ १८ ॥

---

## अथाष्टादशोध्यायः

॥ १–१२ ॥ यस्येति ॥ बालेयं—बलेः क्षेत्रजम् ॥ १३–२२ ॥

जयद्रथ इति ॥ ब्रह्मक्षत्रांतरालसंभूत्यां–प्रातिलोम्येन ब्रह्मक्षत्रसंकरजातायां पत्न्यां विजयाख्यं पुत्रमजीजनम् । अतो विजयाद्याः सूताः ॥ २३–२७ ॥

य इति ॥ पृथापविद्धं—पृथया–कुन्त्या, अपविद्धं–परित्यक्तम् । * मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा । यं पुत्रं प्रतिगृह्णीयादपविद्धः स उच्यते ॥ इति स्मृतेः ॥ २८–३० ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशेऽष्टादशोऽध्यायः ॥ १८ ॥

## अथैकोनविंशोऽध्यायः

श्रीपराशरः—पूरोर्जनमेजयस्तस्यापि प्रचिन्वान् प्रचिन्वतः प्रवीरः प्रवीरान्मनस्युर्मनस्योश्चाभयदः तस्यापि सुद्युस्सुद्यो र्बहुगतः तस्यापि संयातिस्संयातेरहंयाति स्ततो रौद्राश्वः ॥ १ ॥ ऋतेषुकक्षेषु-स्थण्डिलेषुकृतेषुजलेषुधर्मेषुधृतेषुस्थलेषुसन्नतेषुवनेषुनामानो रौद्राश्वस्य दश पुत्रा बभूवुः ॥ २ ॥ ऋतेषोरन्तिनारः पुत्रोऽभूत् ॥ ३ ॥ सुमतिमप्रतिरथं ध्रुवं चाप्यन्तिनारः पुत्रानवाप ॥ ४ ॥ अप्रतिरथस्य कण्वः पुत्रोऽभूत् ॥ ५ ॥ तस्यापि मेधातिथिः ॥ ६ ॥ यतः कण्वायना द्विजा बभूवुः ॥ ७ ॥ अप्रतिरथस्यापरः पुत्रोऽभूदैलीनः ॥ ८ ॥ ऐलीनस्य दुष्यन्ताद्याश्चत्वारः पुत्रा बभूवुः ॥ ९ ॥ दुष्यन्ताच्चक्रवर्ती भरतोऽभूत् ॥ १० ॥ यन्नामहेतुर्देवैः श्लोको गीयते ॥ ११ ॥

माता भस्त्रा पितुः पुत्रो येन जातः स एव सः । भरस्व पुत्रं दुष्यन्त मावमंस्थाश्शकुन्तलाम् ॥ १२ ॥
रेतोधाः पुत्रं नयति नरदेव यमक्षयात् । त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥ १३ ॥

भरतस्य पत्नीत्रये नव पुत्रा बभूवुः ॥ १४ ॥ नैते ममानुरूपा इत्यभिहितास्तन्मातरः परित्यागभयात् तत्पुत्राञ्जघ्नुः ॥ १५ ॥

ततोऽस्य वितथे पुत्रजन्मनि पुत्रार्थिनो मरुत्सोमयाजिनो दीर्घतमसः पार्ष्ण्यपास्तबृहस्पतिवीर्यादुतथ्य-पत्न्यां ममतायां समुत्पन्नो भरद्वाजाख्यः पुत्रो मरुद्भिर्दत्तः ॥ १६ ॥ तस्यापि नामनिर्वचनश्लोकः पठ्यते ॥ १७ ॥

मूढे भर द्वाजमिमं भर द्वाजं बृहस्पते । यातौ यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम् ॥ इति ॥ १८ ॥

भरद्वाजस्स तस्य वितथे पुत्रजन्मनि मरुद्भिर्दत्तः ततो वितथसंज्ञामवाप ॥ १९ ॥ वितथस्यापि मन्युः पुत्रोऽभवत् ॥ २० ॥ बृहत्क्षत्रमहावीर्यनगरगर्गा अभवन्मन्युपुत्राः ॥ २१ ॥ नगरस्य संकृतिस्संकृते-र्गुरुप्रीतिरंतिदेवौ ॥ २२ ॥ गर्गाच्छिनिः ततश्च गार्ग्याश्शैन्याः क्षत्रोपेता द्विजातयो बभूवुः ॥ २३ ॥ महावीर्याच्च दुरुक्षयो नाम पुत्रोऽभवत् ॥ २४ ॥ तस्य त्र्य्यारुणिः पुष्करिणः कपिश्च पुत्रत्रयमभूत् ॥ २५ ॥ तच्च पुत्रत्रितयमपि पश्चाद्विप्रतामुपजगाम ॥ २६ ॥ बृहत्क्षत्रस्य सुहोत्रः ॥ २७ ॥

---

## अथैकोनविंशोऽध्यायः

॥ १–११ ॥ मातेत्यादि ॥ भस्त्रा—चर्मधृतिः, तत्स्थानीया माता । धृतौ निक्षिप्तं द्रव्यं न धृतेः, किं तु निक्षेप्तुरेव । एवं जनयितुरेव पुत्रः, न मातुः । स एव सः—तद्बीजोपादानरूपत्वाद्देहस्य । अतः स्वपुत्रं भरेति भरतनामनिरुक्तिः ॥ १२ ॥

रेतोधा इति ॥ पुरा बीजक्षेत्रिणोः पुत्रविषये विवादे यमसभायां पुत्रं, रेतोधाः—गर्भस्याधातैव, नयति स्म—स्वीचक्रे, न तु क्षेत्री । अस्य च गर्भस्य त्वमाधाता ; अतस्तवायं पुत्र इति सत्यमाह शकुन्तला ॥ १३-१५ ॥

तत इति ॥ दीर्घतमस इति । बृहस्पतेरग्रजस्योतथ्यस्य पत्न्याः ममताख्याया गर्भे उतथ्यनिषिक्ते दीर्घतमस्संज्ञे मुनौ तिष्ठत्येव बृहस्पतिश्च कामाभिभूतश्चौर्येण स्ववीर्यं न्यषिञ्चत् । तद्गर्भस्थेनौतथ्येन स्वपादपश्चा-द्भागेन मातुर्योनेर्निष्कासितं भुवि पतितम् । ततः स तु गर्भस्थ औतथ्यो बृहस्पतिनाऽन्धो भवेति शप्तो दीर्घतमा ऽभूत् । तं तु भुवि पतितबृहस्पतिवीर्यजं बालं वीक्ष्य तौ पितरौ ममताबृहस्पती द्वाभ्यामावाभ्यां जनितत्वाद्-द्वाजमिमं त्वं भर—बिभृहीत्यन्योन्यमुक्त्वा तं पुत्रं त्यक्त्वा यातौ, अतो भरद्वाजाख्यः सः ॥ १६–२७ ॥

सुहोत्राद्धस्ती, य इदं हस्तिनपुरमावासयामास ॥ २८ ॥ अजमीढद्विजमीढपुरुमीढास्त्रयो हस्तिनस्तनयाः ॥ २९ ॥ अजमीढात्कण्वः ॥ ३० ॥ कण्वान्मेधातिथिः ॥ ३१ ॥ यतः कण्वायना द्विजाः ॥ ३२ ॥ अजमीढस्यान्यः पुत्रो बृहदिषुः ॥ ३३ ॥ बृहदिषोर्बृहद्धनु र्बृहद्धनुषश्च बृहत्कर्मा ततश्च जयद्रथस्तस्मादपि विश्वजित् ॥ ३४ ॥ ततश्च सेनजित् ॥ ३५ ॥ रुचिराश्वकाश्यदृढहनुवत्सहनुसंज्ञास्सेनजितः पुत्राः ॥ ३६ ॥ रुचिराश्वपुत्रः पृथुसेनः पृथुसेनात्पारः ॥ ३७ ॥ पारान्नीलः ॥ ३८ ॥ तस्यैकशतं पुत्राणाम् ॥ ३९ ॥ तेषां प्रधानः कांपिल्याधिपतिस्समरः ॥ ४० ॥ समरस्यापि पारसुपारसदश्वास्त्रयः पुत्राः ॥ ४१ ॥ सुपारात्पृथुः पृथोस्सुकृतेर्विभ्राजः ॥ ४२ ॥ तस्माच्चाणुहः ॥ ४३ ॥

यश्शुकदुहितरं कीर्तिं नामोपयेमे ॥ ४४ ॥ अणुहाद्ब्रह्मदत्तः ॥ ४५ ॥ ततश्च विष्वक्सेनस्तस्मादुदक्सेनः ॥ ४६ ॥ भल्लाभस्तस्य चात्मजः ॥ ४७ ॥ द्विजमीढस्य तु यवीनरसंज्ञः पुत्रः ॥ ४८ ॥ तस्यापि धृतिमांस्तस्माच्च सत्यधृतिस्ततश्च दृढनेमिस्तस्माच्च सुपार्श्वस्ततस्सुमतिस्ततश्च सन्नतिमान् ॥ ४९ ॥ सन्नतिमतः कृतः पुत्रोऽभूत् ॥ ५० ॥ यं हिरण्यनाभो योगमध्यापयामास ॥ ५१ ॥

यश्चतुर्विंशतिं प्राच्यसामगानां संहिताश्चकार ॥ ५२ ॥ कृताच्चोग्रायुधः ॥ ५३ ॥ येन प्राचुर्येण नीपक्षयः कृतः ॥ ५४ ॥ उग्रायुधात् क्षेम्यः क्षेम्यात्सुधीरस्तस्माद्रिपुंजयः तस्माच्च बहुरथ इत्येते पौरवाः ॥ ५५ ॥ अजमीढस्य नलिनी नाम पत्नी तस्यां नीलसंज्ञः पुत्रोऽभवत् ॥ ५६ ॥ तस्मादपि शान्तिः शान्तेस्सुशान्ति स्सुशान्तेः पुरंजयः तस्माच्च ऋक्षः ॥ ५७ ॥ ततश्च हर्यश्वः ॥ ५८ ॥ तस्मान्मुद्गलसृंजयबृहदिषुयवीनरकांपिल्यसंज्ञाः पंचानामेव तेषां विषयाणां रक्षणायालमेते मत्पुत्रा इति पित्राऽभिहिताः पाञ्चालाः ॥ ५९ ॥ मुद्गलाच्च मौद्गल्याः क्षत्रोपेता द्विजातयो बभूवुः ॥ ६० ॥ मुद्गलाद्ब्रह्मिष्ठः ॥ ६१ ॥ हर्यश्वाद्दिवोदासोऽहल्या च मिथुनमभूत् ॥ ६२ ॥

---

सुहोत्रादिति ॥ य इदं हस्तिनपुरम्, य इदं धर्मक्षेत्रम्, योऽयं सांप्रतमिति च निर्देशलिङ्गैः परीक्षिद्राज्यकाले हस्तिनपुरासन्नकुरुक्षेत्रे तेनेदं पुराणमुक्तमिति गम्यते ॥ २८–४३ ॥

य इति ॥ शुकदुहितरं—व्यासपुत्रदुहितरम् । यथा हरिवंशे वायव्ये च * पराशरकुलोत्पन्नः शुको नाम महायशाः । व्यासादरण्यां संभूतो विधूमोऽग्निरिव ज्वलन् ॥ स तस्यां पितृकन्यायां पीवर्यां जनयिष्यति । कृष्णं गौरं प्रभुं शम्भुं तथा भूरिश्रुतं जयम् ॥ कन्यां कीर्तिमतीं षष्ठीं योगिनीं योगमातरम् ॥ ब्रह्मदत्तस्य जननीं महिषीमणुहस्य च ॥ इति ॥ ४४–५१ ॥

य इति ॥ प्राच्यसामगानां चतुर्विंशतिसंहिताः यश्चकार ॥ ५२–६२ ॥

शरद्वतश्चाहल्यायां शतानन्दोऽभवत् ॥ ६३ ॥ शतानंदात्सत्यधृतिर्धनुर्वेदान्तगो जज्ञे ॥ ६४ ॥ सत्यधृतेर्वराप्सरसमुर्वशीं दृष्ट्वा रेतः स्कन्नं शरस्तंबे पपात ॥ ६५ ॥ तच्च द्विधागतमपत्यद्वयं कुमारः कन्या चाभवत् ॥ ६६ ॥ तौ च मृगयामुपयातश्शंतनुर्दृष्ट्वा कृपया जग्राह ॥ ६७ ॥ ततः कुमारः कृपः कन्या चाश्वत्थाम्नो जननी कृपी द्रोणाचार्यस्य पत्न्यभवत् ॥ ६८ ॥ दिवोदासस्य पुत्रो मित्रायुः॥६९॥ मित्रायोश्च्यवनो नाम राजा ॥ ७० ॥ च्यवनात्सुदासः सुदासात्सौदासः सौदासात्सहदेवस्तस्यापि सोमकः ॥ ७१ ॥ सोमकाज्जन्तुः पुत्रशतज्येष्ठोऽभवत् ॥ ७२ ॥ तेषां यवीयान् पृषतः पृषतात् द्रुपदस्तस्माच्च धृष्टद्युम्नस्ततो धृष्टकेतुः ॥ ७३ ॥ अजमीढस्यान्यो ऋक्षनामा पुत्रोऽभवत् ॥ ७४ ॥ तस्य संवरणः ॥ ७५ ॥ संवरणात्कुरुः ॥ ७६ ॥ य इदं धर्मक्षेत्रं कुरुक्षेत्रं चकार ॥ ७७ ॥ सुधनुर्जह्नुपरीक्षित्प्रमुखाः कुरोः पुत्राः बभूवुः ॥ ७८ ॥ सुधनुषः पुत्रस्सुहोत्रस्तस्माच्च्यवनः च्यवनात् कृतकः । ततश्चोपरिचरो वसुः ॥ ८० ॥ बृहद्रथप्रत्यग्रकुशांबकुचेलमात्स्यप्रमुखाः वसोः पुत्रास्सप्ताजायन्त ॥ ८१ ॥ बृहद्रथात्कुशाग्रः कुशाग्राद्वृषभः वृषभात् पुष्पवान् तस्मात्सत्यहितः तस्मात्सुधन्वा तस्य च जतुः ॥ ८२ ॥

बृहद्रथाच्चान्यश्शकलद्वयजन्मा जरया संधितो जरासंधनामा ॥ ८३ ॥ तस्मात्सहदेवस्सहदेवात्सोमपस्ततश्च श्रुतिश्रवाः ॥ ८४ ॥ इत्येते मया मागधा भूपालाः कथिताः ॥ ८५ ॥

इति श्रीविष्णुपुराणे चतुर्थेंऽशे एकोनविंशोऽध्यायः ॥ १९ ॥

---

## अथ विंशोऽध्यायः

श्रीपराशरः—

परीक्षितश्च जनमेजयश्रुतसेनोग्रसेनभीमसेनाश्चत्वारः पुत्राः॥१॥ जह्नोस्तु सुरथो नामात्मजो बभूव॥२॥ तस्यापि विदूरथः ॥ ३ ॥ तस्मात्सार्वभौमस्सार्वभौमाज्जयत्सेनस्तस्मादाराधितस्ततश्चायुतायुरयुतायोरक्रोधनः ॥ ४ ॥ तस्माद्देवातिथिः ॥ ५ ॥ ततश्च ऋक्षोऽन्योऽभवत् ॥ ६ ॥ ऋक्षाद्भीमसेनस्ततश्च दिलीपः ॥ ७ ॥ दिलीपात् प्रतीपः ॥ ८ ॥ तस्यापि देवापिशंतनुबाह्लीकसंज्ञास्त्रयः पुत्रा बभूवुः ॥ ९ ॥ देवापिर्बाल एवारण्यं विवेश ॥ १० ॥ शंतनुस्तु महीपालोऽभूत् ॥ ११ ॥ अयं च तस्य श्लोकः पृथिव्यां गीयते ॥ १२ ॥

---

शरद्वत इति ॥ शरद्वान्—गौतमः, तस्मात् ॥ ६३–८२ ॥

बृहद्रथादिति ॥ जरया—राक्षस्या ॥ ८३–८५ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशे एकोनविंशोऽध्यायः ॥ १९ ॥

## अथ विंशोऽध्यायः

परीक्षित इति ॥ परीक्षितः—कुरुपुत्रात् ॥ १–२५ ॥

यंयं कराभ्यां स्पृशति जीर्णं यौवनमेति सः । शान्तिं चाप्नोति येनाग्र्यां कर्मणा तेन शंतनुः ॥ १३ ॥

तस्य च शंतनो राष्ट्रे द्वादशवर्षाणि देवो न ववर्ष ॥ १४ ॥ ततश्चाशेषराष्ट्रविनाशमवेक्ष्यासौ राजा ब्राह्मणानपृच्छत् कस्मादस्माकं राष्ट्रे देवो न वर्षति को ममापराध इति ॥ १५ ॥ ततश्च तमूचुर्ब्राह्मणाः ॥ १६ ॥ अग्रजस्य ते हीयमवनिस्त्वया संभुज्यते; अतः परिवेत्ता त्वमित्युक्तस्स राजा पुनस्तानपृच्छत् ॥ १७ ॥ किं मयाऽत्र विधेयमिति ॥ १८ ॥ ततस्ते पुनरप्यूचुः ॥ १९ ॥ यावद्देवापिर्न पतनादिभिर्दोषैरभिभूयते तावदेतत्तस्यार्हं राज्यम् ॥ २० ॥ तदलमेतेन तु तस्मै दीयतामित्युक्ते तस्य मंत्रिप्रवरेणाश्मराविणा तत्रारण्ये तपस्विनो वेदवादविरोधवक्तारः प्रयुक्ताः ॥ २१ ॥ तैरस्याप्यतिऋजुमतेर्महीपतिपुत्रस्य बुद्धिर्वेदवादविरोधमार्गानुसारिण्यक्रियत ॥ २२ ॥ राजा च शंतनुर्द्विजवचनोत्पन्नपरिदेवनशोकस्तान् ब्राह्मणानग्रतः कृत्वाऽग्रजस्य प्रदानायारण्यं जगाम ॥ २३ ॥ तदाश्रममुपगताश्च तमवनतमवनीपतिपुत्रं देवापिमुपतस्थुः ॥ २४ ॥ ते ब्राह्मणा वेदवादानुबन्धीनि वचांसि राज्यमग्रजेन कर्तव्यमित्यर्थवन्ति तमूचुः ॥ २५ ॥

असावपि देवापिर्वेदवादविरोधयुक्तिदूषितमनेकप्रकारं तानाह ॥ २६ ॥ ततस्ते ब्राह्मणाश्शंतनुमूचुः ॥ २७ ॥ आगच्छ हे राजन्नलमत्रातिनिर्बंधेन । प्रशान्त एवासावनावृष्टिदोषः । पतितोऽयमनादिकालमभिहितवेदवचनदूषणोच्चराणात् ॥ २८ ॥

पतिते चाग्रजे नैव ते परिवेत्तृत्वं भवतीत्युक्तश्शंतनुस्स्वपुरमागम्य राज्यमकरोत् ॥ २९ ॥ वेदवादविरोधवचनोच्चारणदूषिते च तस्मिन्देवापौ तिष्ठत्यपि ज्येष्ठभ्रातर्यखिलसस्यनिष्पत्तये ववर्ष भगवान्पर्जन्यः॥ ३० ॥ बाह्लीकात्सोमदत्तः पुत्रोऽभूत् ॥ ३१ ॥ सोमदत्तस्यापि भूरिभूरिश्रवश्शल्यसंज्ञास्त्रयः पुत्रा बभूवुः ॥ ३२ ॥ शंतनोरप्यमरनद्यां जाह्नव्यामुदारकीर्तिरशेषशास्त्रार्थविद्भीष्मः पुत्रोऽभूत् ॥ ३३ ॥ सत्यवत्यां च चित्राङ्गदविचित्रवीर्यौ द्वौ पुत्रावुत्पादयामास शंतनुः ॥ ३४ ॥ चित्राङ्गदस्तु बाल एव चित्राङ्गदेनैव गंधर्वेणाहवे निहतः ॥ ३५ ॥ विचित्रवीर्योऽपि काशीराजतनये अंबांबालिके उपयेमे ॥ ३६ ॥ तदुपयोगातिखेदाच्च यक्ष्मणा गृहीतः स पञ्चत्वमगमत् ॥ ३७ ॥

सत्यवतीनियोगाच्च मत्पुत्रः कृष्णद्वैपायनो मातुर्वचनमनतिक्रमणीयमिति कृत्वा विचित्रवीर्यक्षेत्रे धृतराष्ट्रपाण्डू तत्प्रहितभुजिष्यायां विदुरं चोत्पादयामास ॥ ३८ ॥ धृतराष्ट्रोऽपि गांधार्यां दुर्योधनदुश्शासनप्रधानं पुत्रशतमुत्पादयामास ॥ ३९ ॥

---

असाविति ॥ वेदवादविरोधयुक्तिभिः तेषां वचो यथा दूषितं भवति तथाऽनेकप्रकारं तानाह । देवापेस्तत्कालमेव पातित्यं योगसिद्ध्या आगामिकृतयुगे क्षत्रवंशकर्तृत्वेन वक्ष्यमाणत्वात् । यद्देवापिः शंतनवे पुरोहितमिति मंत्रप्रस्तुतं तत्कल्पांतरविषयं नेतव्यम् ॥ २६–३७ ॥

सत्यवतीति ॥ भुजिष्या—दासी, तस्याम् ॥ ३८–३९ ॥

पाण्डोरप्यरण्ये मृगयायामृषिशापोपहतप्रजाजननसामर्थ्यस्य धर्मवायुशक्रैर्युधिष्ठिरभीमसेनार्जुनाः कुन्त्यां नकुलसहदेवौ चाश्विभ्यां माद्र्यां पञ्च पुत्रास्समुत्पादिताः ॥ ४० ॥ तेषां च द्रौपद्यां पञ्चैव पुत्रा बभूवुः ॥ ४१ ॥ युधिष्ठिरात्प्रतिविन्ध्यः भीमसेनाच्छ्रुतसेनः श्रुतकीर्तिरर्जुनाच्छ्रुतानीको नकुलाच्छ्रुतकर्मा सहदेवात् ॥ ४२ ॥ अन्ये च पाण्डवानामात्मजास्तद्यथा ॥ ४३ ॥ यौधेयी युधिष्ठिरादेवकं पुत्रमवाप ॥ ४४ ॥ हिडिंबा घटोत्कचं भीमसेनात्पुत्रं लेभे ॥ ४५ ॥ काशी च भीमसेनादेव सर्वगं सुतमवाप ॥ ४६ ॥ सहदेवाच्च विजया सुहोत्रं पुत्रमवाप ॥ ४७ ॥ रेणुमत्यां च नकुलोऽपि निरमित्रमजीजनत् ॥ ४८ ॥ अर्जुनस्याप्युलूप्यां नागकन्यायामिरावान्नाम पुत्रोऽभवत् ॥ ४९ ॥

(मणलूरु) मणिपुरपतिपुत्र्यां पुत्रिकाधर्मेण बभ्रुवाहनं नाम पुत्रमर्जुनोऽजनयत् ॥ ५० ॥ सुभद्रायां चार्भकत्वेऽपि योऽसावतिबलपराक्रमस्समस्तारातिरथजेता सोऽभिमन्युरजायत ॥ ५१ ॥ अभिमन्योरुत्तरायां परिक्षीणेषु कुरुष्वश्वत्थामप्रयुक्तब्रह्मास्त्रेण गर्भ एव भस्मीकृतो भगवतस्सकलसुरासुरवन्दितचरणयुगलस्यात्मेच्छया कारणमानुषरूपधारिणोऽनुभावात्पुनर्जीवितमवाप्य परीक्षिज्जज्ञे ॥ ५२ ॥

योऽयं सांप्रतमेतद्भूमण्डलमखण्डितायति धर्मेण पालयतीति ॥ ५३ ॥

इति श्रीविष्णुपुराणे चतुर्थांशे विंशोऽध्यायः ॥ २० ॥

---

## अथैकविंशोऽध्यायः

श्रीपराशरः—

अतः परं भविष्यानहं भूपालान्कीर्तयिष्यामि ॥ १ ॥ योऽयं सांप्रतमवनीपतिः परीक्षित्तस्यापि जनमेजयश्रुतसेनोग्रसेनभीमसेनाश्चत्वारः पुत्रा भविष्यन्ति ॥ २ ॥ जनमेजयस्यापि शतानीको भविष्यति ॥ ३ ॥ योऽसौ याज्ञवल्क्याद्वेदमधीत्य कृपादस्त्राण्यवाप्य विषमविषयविरक्तचित्तवृत्तिश्च शौनकोपदेशादात्मज्ञानप्रवीणः परं निर्वाणमवाप्स्यति ॥ ४ ॥ शतानीकादश्वमेधदत्तो भविता ॥ ५ ॥ तस्मादप्यधिसीमकृष्णः ॥ ६ ॥ अधिसीमकृष्णान्निचक्नुः ॥ ७ ॥ यो गङ्गयाऽपहृते हस्तिनपुरे कौशांब्यां निवत्स्यति ॥ ८ ॥

---

पांडोरिति ॥ पूर्वं यदुवंशशूरदुहितृकुंतीप्रसंगात् पांडवजन्मोक्तम् इदानीं पुरुवंश्यशंतनुपुत्रसंततिप्राप्तत्वात् पुनर्विस्तृत्योक्तम् । महत्वादर्जुनसंतानोऽन्ते प्रोक्तः ॥ ४०—४९ ॥

मणिपुरपतीति ॥ पुत्रिकाधर्मेण *अस्यां यो जायते पुत्रस्स मे पुत्रो भविष्यति* इति परिभाषितदानेन ॥ ५०—५२ ॥ य इति ॥ आयतिः—धनागमः ॥ ५३ ॥

इति श्रीविष्णुमहापुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशे विंशोऽध्यायः ॥ २० ॥

---

## अथैकविंशोऽध्यायः

॥ १—३ ॥ योऽसाविति ॥ शौनकोपदेशः—विष्णुधर्मोक्तभक्तिज्ञानयोगविधिः ॥ ४—१७ ॥

तस्याप्युष्णः पुत्रो भविता ॥ ९ ॥ उष्णाद्विचित्ररथः ॥ १० ॥ ततः शुचिरथः ॥ ११ ॥ तस्माद्वृष्णिमांस्ततस्सुषेणस्तस्यापि सुनीथस्सुनीथान्नृपचक्षुस्तस्मादपि सुखिबलस्तस्य च पारिप्लवस्ततश्च सुनयस्तस्यापि मेधावी ॥ १२ ॥ मेधाविनो रिपुंजयस्ततोऽर्वस्तस्माच्च तिग्मस्तस्माद्बृहद्रथः बृहद्रथाद्वसुदासः ॥ १३ ॥ ततोऽपरश्शतानीकः ॥ १४ ॥ तस्माचोदयन उदयनाद्विहीनरस्ततश्च दंडपाणिस्ततो निमित्तः ॥ १५ ॥ तस्माच्च क्षेमकः ॥ १६ ॥ अत्रायं श्लोकः ॥ १७ ॥

ब्रह्मक्षत्रस्य यो योनिर्वंशो देवर्षिसत्कृतः । क्षेमकं प्राप्य राजानं संस्थानं प्राप्यते कलौ ॥ इति ॥ १८ ॥

इति श्रीविष्णुपुराणे चतुर्थांश एकविंशोऽध्यायः ॥ २१ ॥

---

## अथ द्वाविंशोऽध्यायः



श्रीपराशरः—अतश्चेक्ष्वाकवो भविष्याः पार्थिवाः कथ्यन्ते ॥ १ ॥

बृहद्बलस्य पुत्रो बृहत्क्षणः ॥ २ ॥ तस्मादुरुक्षयस्तस्माच्च वत्सव्यूहस्ततश्च प्रतिव्योमस्तस्मादपि दिवाकरः ॥ ३ ॥ तस्मात्सहदेवः सहदेवाद्बृहदश्वस्तत्सूनुर्भानुरथस्तस्य च प्रतीताश्वस्तस्यापि सुप्रतीकस्ततश्च मरुदेवस्ततः सुनक्षत्रस्तस्मात्किन्नरः ॥ ४ ॥ किन्नरादन्तरिक्षस्तस्मात्सुपर्णस्ततश्चामित्रजित् ॥ ५ ॥ ततश्च बृहद्भ्राजस्तस्यापि धर्मी धर्मिणः कृतंजयः ॥ ६ ॥ कृतंजयाद्रणंजयः ॥ ७ ॥ रणंजयात्संजयस्तस्माच्छाक्याच्छुद्धोदनस्तस्माद्राहुलस्ततः प्रसेनजित् ॥ ८ ॥ ततश्च क्षुद्रकस्ततश्च कुंडकस्तस्मादपि सुरथः ॥ ९ ॥ तत्पुत्रश्च सुमित्रः ॥ १० ॥ इत्येते चेक्ष्वाकवो बृहद्बलान्वयाः ॥ ११ ॥ अत्रानुवंशश्लोकः ॥१२॥ इक्ष्वाकूणामयं वंशस्सुमित्रान्तो भविष्यति । यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ १३ ॥

इति श्रीविष्णुपुराणे चतुर्थांशे द्वाविंशोऽध्यायः ॥ २२ ॥

---

ब्रह्मक्षत्रस्येति ॥ संस्थानं—समाप्तिम् ॥ १८ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांश एकविंशोऽध्यायः ॥ २१ ॥

---

## अथ द्वाविंशोऽध्यायः



॥ १ ॥ बृहद्बलस्येति ॥ बृहद्बलोऽभिमन्युहत इति चतुर्थाध्यायान्त उक्तः ॥ २–१३ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशे द्वाविंशोऽध्यायः ॥ २२ ॥

## अथ त्रयोविंशोऽध्यायः

श्रीपराशरः—

मागधानां बार्हद्रथानां भाविनामनुक्रमं कथयिष्यामि ॥ १ ॥ अत्र हि वंशे महाबलपराक्रमा जरासंधप्रधाना बभूवुः ॥ २ ॥ जरासंधस्य पुत्रः सहदेवः ॥ ३ ॥ सहदेवात्सोमापिस्तस्यानुश्रुतश्रवास्तस्याप्ययुतायुस्ततश्च निरमित्रस्तत्तनयस्सुनेत्रस्तस्मादपि बृहत्कर्मा ॥ ४ ॥ ततश्च सेनजित्ततश्च श्रुतंजयस्ततो विप्रस्तस्य च पुत्रश्शुचिनामा भविष्यति ॥ ५ ॥ तस्यापि क्षेम्यस्ततश्च सुव्रतस्सुव्रताद्धर्मस्ततस्सुश्रवाः ॥ ६ ॥ ततो दृढसेनः ॥ ७ ॥ तस्मात्सुबलः ॥ ८ ॥ सुबलात्सुनीतो भविता ॥ ९ ॥ ततस्सत्यजित् ॥ १० ॥ तस्माद्विश्वजित् ॥ ११ ॥ तस्यापि रिपुंजयः ॥ १२ ॥

इत्येते बार्हद्रथा भूपतयो वर्षसहस्रमेकं भविष्यन्ति ॥ १३ ॥

इति श्रीविष्णुपुराणे चतुर्थांशे त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## अथ चतुर्विंशोऽध्यायः

श्रीपराशरः—

योऽयं रिपुंजयो नाम बार्हद्रथोऽन्त्यः तस्यामात्यो मुनिको नाम भविष्यति ॥ १ ॥ स चैनं स्वामिनं हत्वा स्वपुत्रं प्रद्योतनामानमभिषेक्ष्यति ॥ २ ॥ तस्यापि बलाकनामा पुत्रो भविता ॥ ३ ॥ ततश्च विशाखयूपः ॥ ४ ॥ तत्पुत्रो जनकः ॥ ५ ॥ तस्य च नन्दिवर्द्धनः ॥ ६ ॥ ततो नन्दी ॥ ७ ॥ इत्येतेऽष्टत्रिंशदुत्तरमष्टशतं पंच प्रद्योताः पृथिवीं भोक्ष्यन्ति ॥ ८ ॥ ततश्च शिशुनाभः ॥ ९ ॥ तत्पुत्रः काकवर्णो भविता ॥ १० ॥ तस्य च पुत्रः क्षेमधर्मा ॥ ११ ॥ तस्यापि क्षतौजाः ॥ १२ ॥ तत्पुत्रो विधिसारः ॥ १३ ॥ ततश्चाजातशत्रुः ॥ १४ ॥ तस्मादर्भकः ॥ १५ ॥ तस्माच्चोदयनः ॥ १६ ॥ तस्मादपि नन्दिवर्धनः ॥ १७ ॥ ततो महानन्दी ॥ १८ ॥ इत्येते शैशुनाभा भूपालास्त्रीणि वर्षशतानि द्विषष्ट्यधिकानि भविष्यन्ति ॥ १९ ॥ महानन्दिनस्ततश्शूद्रगर्भोद्भवोऽतिलुब्धोऽतिबलो महापद्मनामा नन्दः परशुराम इवापरोऽखिलक्षत्रांतकारी भविष्यति ॥ २० ॥ ततःप्रभृति शूद्रा भूपाला भविष्यन्ति ॥ २१ ॥ स चैकच्छत्रामनुल्लंघितशासनो महापद्मः पृथिवीं भोक्ष्यते ॥ २२ ॥ तस्याप्यष्टौ

---

### अथ त्रयोविंशोऽध्यायः

॥ १–१२ ॥ इतीति ॥ तेषां वर्षसंख्या तु कलौ स्वल्पायुष्यसूचनेन विरक्त्यर्था ॥ १३ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशे त्रयोविंशोऽध्यायः ॥ २३ ॥

---

### अथ चतुर्विंशोऽध्यायः

॥ १–२५ ॥ ततश्चेति ॥ कौटिल्यः—वात्स्यायनविष्णुमित्रगुप्तादिपर्यायश्चाणक्यः । समुद्धरिष्यति—उन्मूलयिष्यति ॥ २६, २७ ॥

सुतास्सुमाल्याद्या भवितारः ॥ २३ ॥ तस्य महापद्मस्यानु पृथिवीं भोक्ष्यन्ति ॥ २४ ॥ महापद्म-पुत्राश्चैकं वर्षशतमवनीपतयो भविष्यन्ति ॥ २५ ॥

ततश्च नव चैतान्नन्दान् कौटिल्यो ब्राह्मणस्समुद्धरिष्यति ॥ २६ ॥ तेषामभावे मौर्याः पृथिवीं भोक्ष्यन्ति ॥ २७ ॥

कौटिल्य एव चंद्रगुप्तमुत्पन्नं राज्येऽभिषेक्ष्यति ॥ २८ ॥ तस्यापि पुत्रो बिंदुसारो भविष्यति ॥ २९ ॥ तस्याप्यशोकवर्धनस्ततस्सुयशास्ततश्च दशरथस्ततश्च संयुतस्ततश्शालिशूकस्तस्मात्सोमशर्मा तस्यापि सोम-शर्मणश्शतधन्वा ॥ ३० ॥ तस्यानु बृहद्रथनामा भविता ॥ ३१ ॥ एवमेते मौर्या दश भूपतयो भविष्यन्ति अब्दशतं सप्तत्रिंशदुत्तरम् ॥ ३२ ॥ तेषामन्ते पृथिवीं दश शुंगा भोक्ष्यन्ति ॥ ३३ ॥ पुष्पमित्रस्सेनापतिस्स्वामिनं हत्वा राज्यं करिष्यति तस्यात्मजोऽग्निमित्रः ॥ ३४ ॥ तस्मात्सुज्येष्ठस्ततो वसुमित्रस्तस्मादप्युदंकस्ततः पुलिंदकस्ततो घोषवसुस्तस्मादपि वज्रमित्रस्ततो भागवतः ॥ ३५ ॥ तस्माद्देवभूतिः ॥ ३६ ॥ इत्येते शुंगा द्वादशोत्तरं वर्षशतं पृथिवीं भोक्ष्यन्ति ॥ ३७ ॥ ततः कण्वा-नेषा भूर्यास्यति ॥ ३८ ॥ देवभूतिं तु शुंगराजानं व्यसनिनं तस्यैवामात्यः कण्वो वसुदेवनामा तं निहत्य स्वयमवनीं भोक्ष्यति ॥ ३९ ॥ तस्य पुत्रो भूमित्रस्तस्यापि नारायणः ॥ ४० ॥ नारायणात्मज-स्सुशर्मा ॥ ४१ ॥ एते काण्वायनाश्चत्वारः पंचचत्वारिंशद्वर्षाणि भूपतयो भविष्यन्ति ॥ ४२ ॥ सुशर्माणं तु काण्वं तद्भृत्यो बलिपुच्छकनामा हत्वा आन्ध्रजातीयो वसुधां भोक्ष्यति ॥ ४३ ॥ ततश्च कृष्णनामा तद्भ्राता पृथिवीपतिर्भविष्यति ॥ ४४ ॥ तस्यापि पुत्रः शान्तकर्णिस्तस्यापि पूर्णोत्संगस्तत्पुत्रश्शात-कर्णिस्तस्माच्च लम्बोदरस्तस्माच्च पिलकस्ततो मेघस्वातिस्ततः पटुमान् ॥ ४५ ॥ ततश्चारिष्टकर्मा ततो हालाहलः ॥ ४६ ॥ हालाहलात्पललकस्ततः पुलिन्दसेनस्ततः सुंदरस्ततश्शातकर्णिस्ततश्शिवस्वातिस्त-तश्च गोमतिपुत्रस्तत्पुत्रोऽलिमान् ॥ ४७ ॥ तस्यापि शान्तकर्णिस्ततः शिवश्रितस्ततश्च शिवस्कन्धस्त-स्मादपि यज्ञश्रीस्ततो द्वियज्ञस्तस्माच्चन्द्रश्रीः ॥ ४८ ॥ तस्मात्पुलोमापिः ॥ ४९ ॥

एवमेते त्रिंशच्चत्वार्यब्दशतानि षट्पंचाशदधिकानि पृथिवीं भोक्ष्यन्ति ॥ ५० ॥ आन्ध्रभृत्यास्सप्ता-भीरप्रभृतयो दशगर्दभिनश्च भूभुजो भविष्यन्ति ॥ ५१ ॥ ततष्षोडश भूपतयो भवितारः ॥ ५२ ॥ ततश्चाष्टौ यवनाश्चतुर्दश तुरुष्का मुंडाश्च त्रयोदश एकादश मौना एते वै पृथिवीपतयः पृथिवीं दशवर्षशतानि नवत्यधिकानि भोक्ष्यन्ति ॥ ५३ ॥ ततश्च मौना एकादश भूपतयोऽब्दशतानि त्रीणि पृथिवीं भोक्ष्यन्ति ॥ ५४ ॥

तेषूत्सन्नेषु कैंकिला यवना भूपतयो भविष्यन्त्यमूर्द्धाभिषिक्ताः ॥ ५५ ॥

---

कौटिल्य इति ॥ चंद्रगुप्तं—नन्दस्यैव शूद्रायां मुरायां जातं मौर्याणां प्रथमम् ॥ २८—४९ ॥

एवमिति ॥ एवमेते त्रिंशत्, आन्ध्रा इति शेषः ॥ ५०—५२ ॥

ततश्चेति ॥ एते आभीराद्या अष्टषष्टिर्नृपाः पृथिवीं नवत्यधिकानि त्रयोदशवर्षशतानि भोक्ष्यन्ति ॥ ५३, ५४ ॥ तेष्विति ॥ भूपतयः—अमूर्द्धाभिषिक्ताः ॥ ५५ ॥

तेषामपत्यं विन्ध्यशक्तिस्ततः पुरंजयस्तस्माद्रामचंद्रस्तस्माद्धर्मवर्मा ततो वङ्गस्ततोभून्नन्दनस्ततस्सुनन्दी तद्भ्राता नन्दियशाश्शुक्रः प्रवीर एते वर्षशतं षड्वर्षाणि भूपतयो भविष्यन्ति ॥ ५६ ॥ ततस्तत्पुत्रास्त्रयोदशैते बाह्लिकाश्च त्रयः ॥ ५७ ॥ ततः पुष्यमित्राः पटुमित्रास्त्रयोदशैकलाश्च सप्तान्ध्राः ॥ ५८ ॥

ततश्च कोसलायां तु नव चैव भूपतयो भविष्यन्ति ॥ ५९ ॥ नैषधास्तु त एव ॥ ६० ॥

मागधायां तु विश्वस्फटिक संज्ञोऽन्यान्वर्णान्करिष्यति ॥ ६१ ॥ कैवर्तबटुपुलिन्दब्राह्मणान्राज्ये स्थापयिष्यति ॥ ६२ ॥ उत्साद्याखिलक्षत्रजातिं नव नागाः पद्मवत्यां नाम पुर्यामनुगङ्गाप्रयागं गयाद् गुप्तांश्च मागधा भोक्ष्यन्ति ॥ ६३ ॥ कोसलान्ध्रपुण्ड्रताम्रलिप्तसमतटपुरीं च देवरक्षितो रक्षिता ॥ ६४ ॥ कलिङ्गमाहिषमहेन्द्रभौमान् गुहा भोक्ष्यन्ति ॥ ६५ ॥ नैषधनैमिषककालकोशकाञ्जनपदान्मणिधान्यकवंशा भोक्ष्यन्ति ॥ ६६ ॥ त्रैराज्यमूषिकजनपदान्कनकाह्वयो भोक्ष्यति ॥ ६७ ॥ सौराष्ट्रावन्त्यशूद्राभीरान्नर्मदामरुभूविषयांश्च व्रात्यद्विजाभीरशूद्राद्या भोक्ष्यन्ति ॥ ६८ ॥

सिन्धुतटदाविकोर्वीचन्द्रभागाकाश्मीरविषयांश्च व्रात्यम्लेच्छशूद्रादयो भोक्ष्यन्ति ॥ ६९ ॥ एते च तुल्यकालास्सर्वे पृथिव्यां भूभुजो भविष्यन्ति ॥ ७० ।

अल्पप्रसादा बृहत्कोपास्सर्वकालमनृताधर्मरुचयः स्त्रीबालगोवधकर्तारः परस्वादानरुचयोऽल्पसारास्तमिस्रप्राया उदितास्तमितप्राया अल्पायुषो महेच्छा ह्यल्पधर्मा लुब्धाश्च भविष्यन्ति ॥ ७१ ॥

तैश्च विमिश्रा जनपदास्तच्छीलानुवर्तिनो राजाश्रयशुष्मिणो म्लेच्छाचाराश्च विपर्ययेण वर्तमानाः प्रजाः क्षपयिष्यन्ति ॥ ७२ ॥

ततश्चानुदिनमल्पाल्पह्रासव्यवच्छेदाद्धर्मार्थयोर्जगतस्संक्षयो भविष्यति ॥ ७३ ॥ ततश्चार्थ एवाभिजनहेतुः ॥ ७४ ॥ बलमेवाशेषधर्महेतुः ॥ ७५ ॥ अभिरुचिरेव दांपत्यसंबन्धहेतुः ॥ ७६ ॥ स्त्रीत्वमेवोपभोगहेतुः ॥ ७७ ॥ अनृतमेव व्यवहारजयहेतुः ॥ ७८ ॥

---

तेषामिति ॥ तेषां वंश्यो विंध्यशक्तिः ॥ ५६—५८ ॥

ततश्चेति ॥ कोसलायाम्—अयोध्यायाम् ॥ ५९, ६० ॥

मागधायामिति ॥ मागधायां पुर्यां विश्वस्फाटिकः क्षत्रमुन्मूल्य कैवर्तादीन् राज्ये स्थापयिष्यति ॥ ६१—६८ ॥ सिन्ध्विति ॥ दाविको देविकातटभवो देशः ॥ ६९, ७० ॥

अल्पप्रसादा इति ॥ उदितास्तमितप्रायाः—क्षणिककल्पाः ॥ ७१ ॥

तैश्चेति ॥ राजाश्रयशुष्मिणः—राजाश्रयेणैव शुष्मिणः—बलिनः, न तु धर्मेण ॥ ७२ ॥

तैश्चेति ॥ अल्पाल्पेत्यादि । धर्मार्थयोरल्पाल्पह्रासरूपेण क्षयाज्जगतो युगपन्नाशः ॥ ७३—७८ ॥

उन्नतांबुतैव पृथिवीहेतुः ॥ ७९ ॥ ब्रह्मसूत्रमेव विप्रत्वहेतुः ॥ ८० ॥ रत्नधातुतैव श्लाघ्यताहेतुः [रत्नतामूलमेव वृद्धिहेतुः ।] ॥ ८१ ॥ लिङ्गाधारणमेवाश्रमहेतुः ॥ ८२ ॥ अन्याय एव वृत्तिहेतुः ॥ ८३ ॥ दौर्बल्यमेवावृत्तिहेतुः ॥ ८४ ॥ अभयप्रगल्भोच्चारणमेव पाण्डित्यहेतुः ॥ ८५ ॥ अनाढ्यतैव साधुत्वहेतुः ॥ ८६ ॥ स्नानमेव प्रसाधनहेतुः ॥ ८७ ॥ दानमेव धर्महेतुः ॥ ८८ ॥ स्वीकरणमेव विवाहहेतुः ॥ ८९ ॥ सद्वेषधार्येव पात्रम् ॥ ९० ॥ दूरायतनोदकमेव तीर्थहेतुः ॥ ९१ ॥ कपटवेषधारणमेव महत्त्वहेतुः ॥ ९२ ॥ इत्येवमनेकदोषोत्तरे तु भूमण्डले सर्ववर्णेष्वेव योयो बलवान्सस भूपतिर्भविष्यति ॥ ९३ ॥ एवं चातिलुब्धकराजासहाश्शैलानामन्तरद्रोणीः प्रजास्संश्रयिष्यन्ति ॥ ९४ ॥ मधुशाकमूलफलपत्रपुष्पाद्याहाराश्च भविष्यन्ति ॥ ९५ ॥ तरुवल्कलपर्णचीरप्रावरणाश्चातिबहुप्रजाः शीतवातातपवर्षसहाश्च भविष्यन्ति ॥ ९६ ॥

न च कश्चित् त्रयोविंशतिवर्षाणि जीविष्यति । अनवरतं चात्र कलियुगे क्षयमायात्यखिल एवैष जनः ॥ ९७ ॥

श्रौतस्मार्ते च धर्मे विप्लवमत्यन्तमुपगते क्षीणप्राये च कलावशेषजगत्स्रष्टुश्चराचरगुरोरादिमध्यान्तरहितस्य ब्रह्ममयस्यात्मरूपिणो भगवतो वासुदेवस्यांशश्शंबलग्रामप्रधानब्राह्मणस्य विष्णुयशसो गृहेऽष्टगुणर्द्धिसमन्वितः कल्किरूपी जगत्यत्रावतीर्य सकलम्लेच्छदस्युदुष्टाचरणचेतसामशेषाणामपरिच्छिन्नशक्तिमाहात्म्यः क्षयं करिष्यति, स्वधर्मेषु चाखिलमेव संस्थापयिष्यति ॥ ९८ ॥

अनन्तरं चाशेषकलेरवसाने निशावसाने विबुद्धानामिव तेषामेव जनपदानाममलस्फटिकदलशुद्धा मतयो भविष्यन्ति ॥ ९९ ॥ तेषां च बीजभूतानामशेषमनुष्याणां परिणतानामपि तत्कालकृतापत्यप्रसूतिर्भविष्यति ॥ १०० ॥ तानि च तदपत्यानि कृतयुगानुसारीण्येव भविष्यन्ति ॥ १०१ ॥

अत्रोच्यते—

यदा चन्द्रश्च सूर्यश्च तथा तिष्ये बृहस्पतिः । एकराशौ समेष्यन्ति तदा भवति वै कृतम् ॥ १०२ ॥

---

उन्नतांबुतेति ॥ उन्नतांबुता—उन्नतस्थले सुलभसुभगजलवत्त्वं, पृथ्वीहेतुः—पृथ्वीस्वीकारे हेतुः न तु पुण्यभूमित्वम् । उन्नताम्रतेतिपाठे प्रभूतचूतादिद्रुमवत्त्वम् ॥ ७१—८७ ॥

दानमेवेति ॥ दानमेव धर्महेतुः, न तु यागादिः ॥ ८८—९७ ॥

श्रौतस्मार्ते चेति ॥ अष्टगुणाः—अणिमाद्याः । * अणिमा लघिमा प्राप्तिः प्राकाम्येशित्ववश्यताः । यत्रकामावसायित्वं महिमेति गुणाष्टकम् ॥ ९८—१०१ ॥

यदा चन्द्रश्चेति ॥ चन्द्रादिग्रहणं सर्वग्रहोपलक्षणार्थम् । चतुर्युगान्ते सर्वेषां ग्रहाणां मीनान्तस्थितेः । सर्वग्रहयोगे हि युगम् । यद्वा एषां ग्रहाणां चतुर्णामेव योगे कृतं—तदर्थं खलु ग्रहबाहुल्यमित्यर्थः; * चन्द्रार्कजीवज्ञसिताः कुजार्की च यथाक्रमम् । सत्त्वं रजस्तमोपि * इति गोचारोक्तेः । तथा तिष्ये बृहस्पतिरिति पाठेऽप्ययमेवार्थः । प्रतिद्वादशाब्दं गुरौ कर्कटस्थे कर्कटकमासे अमावास्यायां बहुवारं योगस्यास्य संभवात्, तथाऽप्येकराशौ समेष्यन्तीति सहप्रवेशोक्तेर्नातिप्रसङ्गदोषः ॥ १०२ ॥

अतीता वर्तमानाश्च तथैवानागताश्च ये । एते वंशेषु भूपालाः कथिता मुनिसत्तम ॥ १०३ ॥
यावत्परीक्षितो जन्म यावन्नन्दाभिषेचनम् । एतद्वर्षसहस्रं तु ज्ञेयं पंचाशदुत्तरम् ॥ १०४ ॥
सप्तर्षीणां तु यौ पूर्वौ दृश्येते ह्युदितौ दिवि । तयोस्तु मध्ये नक्षत्रं दृश्यते यत्समं निशि ॥ १०५ ॥
तेन सप्तर्षयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम् । ते तु पारीक्षिते काले मघास्वासन्द्विजोत्तम ॥ १०६ ॥
तदा प्रवृत्तश्च कलिर्द्वादशाब्दशतात्मकः ॥ १०७ ॥
यदैव भगवान्विष्णोरंशो यातो दिवं द्विज । वसुदेवकुलोद्भूतस्तदैवात्रागतः कलिः ॥ १०८ ॥
यावत्स पादपद्माभ्यां पस्पर्शेमां वसुंधराम् । तावत्पृथ्वीपरिष्वङ्गे समर्थो नाभवत्कलिः ॥ १०९ ॥
गते सनातनस्यांशे विष्णोस्तत्र भुवो दिवम् । तत्याज सानुजो राज्यं धर्मपुत्रो युधिष्ठिरः ॥ ११० ॥
विपरीतानि दृष्ट्वा च निमित्तानि हि पाण्डवः । याते कृष्णे चकाराथ सोऽभिषेकं परीक्षितः ॥ १११ ॥
प्रयास्यन्ति यदा चैते पूर्वाषाढां महर्षयः । तदा नन्दात्प्रभृत्येष गतिवृद्धिं गमिष्यति ॥ ११२ ॥
यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाऽहनि । प्रतिपन्नं कलियुगं तस्य संख्यां निबोध मे ॥ ११३ ॥

---

राजवंशं निगमयति अतीता इति ॥ १०३ ॥

यावदिति ॥ पंचशतोत्तरं वर्षसहस्रम । पाठान्तरे परीक्षिसमकालं मागधं सोममारभ्य रिपुंजयान्त मागधानां सहस्राब्दत्वस्योक्तत्वात् अनन्तरं प्रद्योतशिशुनागानां पंचशताब्दत्वस्योक्तत्वात् सार्द्धसाहस्रस्योक्तस्य व्याख्यातं वायूक्तेऽपि परीक्षिन्नन्दान्तरं सार्धसहस्रमेवेत्युक्तम । अत एव प्रयास्यन्ति यदेत्यादिश्लोकस्यायमर्थः— नन्दात्प्रभृत्येव प्रसरति कलौ काले, यदैते पूर्वाषाढां प्रयास्यन्ति तदा कलेः—अधर्मस्य वृद्धिः पूर्वोक्तकृतशब्दस्य धर्मपरत्ववत् लक्षणया नन्दान्तं क्षत्रियकुलमिति वचनात्, इहापि शूद्राद्याधिपत्योक्तेश्च । अतः पापस्यैव वृद्धिः न तु नियतमानस्य कलेः । अतः कलौ नन्दोत्तरकालीनेषु पूर्वाषाढापर्यायेषु स्थिता महर्षयः पापवृद्ध्ये जगत इति नक्षत्रचारफलोक्तिरेषा, न तु कालावच्छेदोक्तिः ॥ १०४ ॥

सप्तर्षीणां त्विति ॥ शकटाकारतारासप्तकं मुनिमण्डलं प्रागग्रे तत्र मण्डले ईषास्थानीयः प्राच्यां मरीचिः, ततः पश्चान्मध्ययुगंधराकारो वसिष्ठः सभार्यः, ततः पश्चादीषदुन्नत ईषामूलस्थानीयोऽङ्गिराः, तदासन्न पश्चिमचतुष्कस्य ऐशान्ये अत्रिः, अत्रेर्याम्यः पुलस्त्यः, पुलस्त्यात्पश्चिमः पुलहः, तदुदीच्यश्चतुष्कवायव्ये क्रतुः, वसिष्ठायाम्या सूक्ष्मतारा अरुंधती तत्र मण्डले; उक्तं च पूर्वभागे मरीचिर्भगवान् अपरभागे स्थितो वसिष्ठोऽस्मात्परतोऽङ्गिराः ततोऽत्रिस्तस्यासन्नः पुलस्त्यः पुलहः क्रतुर्भगवानासन्नानुक्रमेण पूर्वाद्यास्तारा वसिष्ठमुनिवरमुपाश्रिता अरुंधती साध्वी स्थितेति । एवं स्थिते यौ पूर्वौ—उदये प्रथमं दृश्यौ पुलस्त्यक्रतुसंज्ञौ मुनी शकटस्य पाश्चात्यौ तथाऽपि पूर्वमुदितौ दृश्येते, मध्ये—गगनमध्ये, तयोः—ताभ्यां समं—समदक्षिणोत्तररेखायां, यदश्विन्याद्यन्यतमं नक्षत्रमार्जवेनावतिष्ठते, तेन—नक्षत्रेण ते युक्ताः शताब्दं तिष्ठन्ति । तेषां प्रत्यक्षं शताब्दस्थित्युक्तिः कलिगताब्दज्ञानोद्देशार्था ॥ १०५–११२ ॥

यस्मिन् कृष्ण इति ॥ यस्मिन् श्रीकृष्णः दिवं जगाम, तस्मिन्नहनि—तत्क्षण एव कलियुगं प्रतिपन्नम् ॥ ११३ ॥

ीणि लक्षाणि वर्षाणां द्विज मानुष्यसंख्यया। षष्टिश्चैव सहस्राणि भविष्यत्येष वै कलिः ॥ ११४ ॥
ातानि तानि दिव्यानां सप्त पंच च संख्यया। निश्शेषेण गते तस्मिन्भविष्यति पुनः कृतम् ॥ ११५ ॥
ाह्मणाः क्षत्रिया वैश्याश्शूद्राश्च द्विजसत्तम। युगेयुगे महात्मानः समतीतास्सहस्रशः ॥ ११६ ॥
हुत्वान्नामधेयानां परिसंख्या कुलेकुले। पौनरुक्त्याद्धि साम्याच्च न मया परिकीर्तिता ॥ ११७ ॥
ेवापिः पौरवो राजा पुरुश्चेक्ष्वाकुवंशजः। महायोगबलोपेतौ कलापग्रामसंश्रितौ ॥ ११८ ॥
ृते युगे त्विहागम्य क्षत्रप्रावर्तकौ हि तौ। भविष्यतो मनोर्वंशबीजभूतौ व्यवस्थितौ ॥ ११९ ॥
ेतेन क्रमयोगेन मनुपुत्रैर्वसुंधरा। कृतत्रेताद्वापराणि युगानि त्रीणि भुज्यते ॥ १२० ॥
लौ ते बीजभूतास्तु केचित्तिष्ठन्ति वै मुने। यथैव देवापिपुरू सांप्रतं समधिष्ठितौ ॥ १२१ ॥
ष तूद्देशतो वंशस्तवोक्तो भूभुजां मया। निखिलो गदितुं शक्यो नैष वर्षशतैरपि ॥ १२२ ॥
ते चान्ये च भूपाला यैरत्र क्षितिमण्डले। कृतं ममत्वं मोहान्धैर्नित्यं हेयकलेवरे ॥ १२३ ॥
थं ममेयमचला मत्पुत्रस्य कथं मही। मद्वंशस्येति चिन्तार्ता जग्मुरन्तमिमे नृपाः ॥ १२४ ॥
भ्यः पूर्वतराश्चान्ये तेभ्यस्तेभ्यस्तथा परे। भविष्याश्चैव यास्यन्ति तेषामन्ये च येऽप्यनु ॥ १२५ ॥
लोक्यात्मजयोद्योगं यात्राव्यग्रान्नराधिपान्। पुष्पप्रहासैश्शरदि हसन्तीव वसुंधरा ॥ १२६ ॥
त्रेय पृथिवीगीताञ्छ्लोकांश्चात्र निबोध मे। यानाह धर्मध्वजिने जनकायासितो मुनिः ॥ १२७ ॥

पृथिव्युवाच :—

थमेष नरेन्द्राणां मोहो बुद्धिमतामपि। येन फेनसधर्माणोऽप्यतिविश्वस्तचेतसः ॥ १२८ ॥
मात्मजयं कृत्वा जेतुमिच्छन्ति मन्त्रिणः। ततो भृत्यांश्च पौरांश्च जिगीषन्ते तथा रिपून् ॥ १२९ ॥
मेणानेन जेष्यामो वयं पृथ्वीं ससागराम्। इत्यासक्तधियो मृत्युं न पश्यन्त्यविदूरगम् ॥ १३० ॥
मुद्रावरणं याति भूमण्डलमथो वशम्। कियदात्मजयस्यैतन्मुक्तिरात्मजये फलम् ॥ १३१ ॥

---

भगवद्ध्यानकालत्वेन कलेः प्रस्तावात् तत्संख्या प्रथमांशोक्ताऽपीहानूद्यते त्रीणि लक्षाणीति ॥ अत्र पादिविवर्जिता कलिसंख्योक्ता परीक्षित्काले कलिसंध्यादित्वात्। शतानि तानीत्यत्र तु दिव्यद्वादशाब्दशतमिति पादिसहिता संख्योक्ता ॥ ११४–११६ ॥

बहुत्वादिति ॥ प्रतिकुलं नाम्नामानन्त्यपौनरुक्त्याभ्यां परिसंख्या—परितः संख्या नोक्ता ॥ ७–११९ ॥

एतेनेति ॥ कृतत्रेताद्वापराणि इति युगत्रयं भुक्तिवचनं कलेरल्पक्षत्रत्वात् ॥ १२०–१३० ॥

राज्यमुक्त्योरिन्द्रियजयसाध्यत्वे किं मुक्तिं हित्वा अल्पेन राज्येनेत्याह—समुद्रेति ॥ १३१ ॥

उत्सृज्य पूर्वजा याता यां नादाय गतः पिता। तां मामतीव मूढत्वाज्जेतुमिच्छन्ति पार्थिवाः॥१३२॥

मत्कृते पितृपुत्राणां भ्रातृणां चापि विग्रहः। जायतेऽत्यन्तमोहेन ममत्वादृतचेतसाम् ॥ १३३ ॥

पृथ्वी ममेयं सकला ममैषा मदन्वयस्यापि च शाश्वतीयम्।
योयो मृतो ह्यत्र बभूव राजा कुबुद्धिरासीदिति तस्यतस्य ॥ १३४ ॥

दृष्ट्वा ममत्वादृतचित्तमेकं विहाय मां मृत्युवशं व्रजन्तम्।
तस्यानु यस्तस्य कथं ममत्वं हृद्यास्पदं मत्प्रभवं करोति ॥ १३५ ॥

पृथ्वी ममैषाऽऽशु परित्यजैनां वदन्ति ये दूतमुखैस्स्वशत्रून्।
नराधिपास्तेषु ममातिहासः पुनश्च मूढेषु दयाऽभ्युपैति ॥ १३६ ॥

श्रीपराशरः—

इत्येते धरणीगीताश्श्लोका मैत्रेय यैश्श्रुताः। ममत्वं विलयं याति तपत्यर्के यथा हिमम् ॥ १३७ ॥

इत्येष कथितः सम्यङ्मनोर्वंशो मया तव। यत्र स्थितिप्रवृत्तस्य विष्णोरंशांशका नृपाः॥ १३८ ॥

शृणोति य इमं भक्त्या मनोर्वंशमनुक्रमात्। तस्य पापमशेषं वै प्रणश्यत्यमलात्मनः ॥ १३९ ॥

धनधान्यर्द्धिमतुलां प्राप्नोत्यव्याहतेन्द्रियः। श्रुत्वैवमखिलं वंशं प्रशस्तं शशिसूर्ययोः ॥ १४० ॥

इक्ष्वाकुजह्नुमांधातृसगराविक्षितान्रघून्। ययातिनहुषाद्यांश्च ज्ञात्वा निष्ठामुपागतान् ॥ १४१ ॥

महाबलान्महावीर्याननन्तधनसंचयान्। कृतान्कालेन बलिना कथाशेषान्नराधिपान् ॥ १४२ ॥

श्रुत्वा न पुत्रदारादौ गृहक्षेत्रादिके तथा। द्रव्यादौ वा कृतप्रज्ञो ममत्वं कुरुते नरः ॥ १४३ ॥

तप्तं तपो यैः पुरुषप्रवीरैरुद्बाहुभिर्वर्षगणाननेकान्।
इष्ट्वा सुयज्ञैर्बलिनोऽतिवीर्याः कृता नु कालेन कथावशेषाः ॥ १४४ ॥

पृथुस्समस्तान्विचचार लोकानव्याहतो यो विजितारिचक्रः।
स कालवाताभिहतः प्रणष्टः क्षिप्तं यथा शाल्मलितूलमग्नौ ॥ १४५ ॥

---

उत्सृज्येति ॥ यां भुवम् उत्सृज्य—नादायैव, पितामहाद्या याताः पिता च गतः ॥ १३२,१३३ ॥

पृथ्वीति ॥ पृथ्वी ममेयमिति भिन्नवक्तृवाक्यभङ्गयः। तत्र भूरेषा ममेत्येकः। इयं ममेत्यन्यः। अपरो ममेयं शाश्वतीति वदन्नेव योयो राजा मृतो लोकान्तरे जातः, तस्य तस्यापि इह प्राक्स्मरणादियं भूर्ममेति बुद्धिरासीत्। मृतेऽन्यत्रेति पाठे, अन्यत्र—प्राचीने राज्ञि मृते अथान्यो यो बभूव राजा तस्याप्येवं दुर्बुद्धिरासीत् ॥ १३४ ॥

दृष्ट्वेत्यादि ॥ तस्यानु यः परः मां त्यक्त्वा मृतं दृष्ट्वा यस्ततः परो नृपस्स्यात् तस्य हृदि मत्प्रभवं—भूविषयं ममत्वं कथमास्पदं करोति ॥ १३५ ॥

पृथ्वीति ॥ इत्येवं ममत्वकारिषु ममातिहासो भवति, दया चाभ्युपैति; मामिति शेषः। दयामुपैमीति वा पाठः ॥ १३६—१४० ॥ इक्ष्वाकिति ॥ निष्ठाम्—नाशम् ॥ १४१—१४५ ॥

यः कार्तवीर्यो बुभुजे समस्तान्द्वीपान्समाक्रम्य हतारिचक्रः ।
कथाप्रसङ्गेष्वभिधीयमानस्स एव संकल्पविकल्पहेतुः ॥ १४६ ॥

दशाननाविक्षतराघवाणामैश्वर्यमुद्भासितदिङ्मुखानाम् ।
भस्मापि शिष्टं न कथं क्षणेन भ्रूभङ्गपातेन धिगन्तकस्य ॥ १४७ ॥

कथाशरीरत्वमवाप यद्वै मांधातृनामा भुवि चक्रवर्त्ती ।
श्रुत्वाऽपि तत्को हि करोति साधुर्ममत्वमात्मन्यपि मन्दचेताः ॥ १४८ ॥

भगीरथाद्यास्सगरः ककुत्स्थो दशननो राघवलक्ष्मणौ च ।
युधिष्ठिराद्याश्च बभूवुरेते सत्यं न मिथ्या क नु ते न विद्मः ॥ १४९ ॥

ये सांप्रतं ये च नृपा भविष्याः प्रोक्ता मया विप्रवरोग्रवीर्याः ।
एते तथाऽन्ये च तथाभिधेयाः सर्वे भविष्यन्ति यथैव पूर्वे ॥ १५० ॥

एतद्विदित्वा न नरेण कार्यं ममत्वमात्मन्यपि पण्डितेन ।
तिष्ठन्तु तावत्तनयात्मजायाक्षेत्रादयो ये च शरीरिणोऽन्ये ॥ १५१ ॥

इति श्रीविष्णुपुराणे चतुर्थांशे चतुर्विंशोऽध्यायः ॥ २४ ॥

श्रीविष्णुपुराणे चतुर्थांशः समाप्तः ॥

---

य इति ॥ संकल्पविकल्पहेतुः—संकल्पस्य–मनसः विकल्पः—संशयः, तस्य हेतुः, किमेवंविधः श्चिदासीन्न वेति संशयस्य निमित्तम् ॥ १४६ ॥

दशाननेति ॥ भस्मापि कथं न जातं—कथं न तिष्ठति । यद्वा तेषामैश्वर्यं निश्शेषदग्धत्वात् भस्मा-ख्यमपि न जातम् । इदं कथमित्याश्चर्ये ॥ १४७ ॥

कथाशरीरत्वमिति ॥ आत्मनि—अहंत्वाश्रये देहेऽपि, किमुत ममत्वास्पदे पुत्रकलत्रक्षेत्रादौ ॥ ४८–१४९ ॥ पूर्वे अधिपा इव वर्त्तमाना भविष्याश्च नष्टा भविष्यन्ति इत्यभिधेयाः ॥ १५० ॥

उक्तमर्थं संक्षिपन्नाह—एतद्विदित्वेति ॥ १५१ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये चतुर्थांशे चतुर्विंशोऽध्यायः ॥ २४ ॥

॥ श्रीविष्णुचित्तीये चतुर्थांशः समाप्तः ॥

॥ श्रीमते रामानुजाय नमः ॥

# अथ पञ्चमांशे प्रथमोऽध्यायः

मैत्रेयः—

नृपाणां कथितस्सर्वो भवता वंशविस्तरः । वंशानुचरितं चैव यथावदनुवर्णितम् ॥ १ ॥

अंशावतारो ब्रह्मर्षे योऽयं यदुकुलोद्भवः । विष्णोस्तं विस्तरेणाहं श्रोतुमिच्छामि तत्त्वतः ॥ २ ॥

चकार यानि कर्माणि भगवान्पुरुषोत्तमः । अंशांशेनावतीर्योर्व्यां तत्र तानि मुने वद ॥ ३ ॥

श्रीपराशरः—

मैत्रेय श्रूयतामेतद्यत्पृष्टोऽहमिह त्वया । विष्णोरंशांशसंभूतिचरितं जगतो हितम् ॥ ४ ॥

देवकस्य सुतां पूर्वं वसुदेवो महामुने । उपयेमे महाभागां देवकीं देवतोपमाम् ॥ ५ ॥

कंसस्तयोर्वररथं चोदयामास सारथिः । वसुदेवस्य देवक्या संयोगे भोजनन्दनः ॥ ६ ॥

अथान्तरिक्षे वागुच्चैः कंसमाभाष्यसादरम् । मेघगंभीरनिर्घोषं समाभाष्येदमब्रवीत् ॥ ७ ॥

यामेतां वहसे मूढ सह भर्त्रा रथे स्थिताम् । अस्यास्तवाष्टमो गर्भः प्राणानपहरिष्यति ॥ ८ ॥

श्रीपराशरः—

इत्याकर्ण्य समुत्पाट्य खड्गं कंसो महाबलः । देवकीं हन्तुमारब्धो वसुदेवोऽब्रवीदिदम् ॥ ९ ॥

न हंतव्या महाभाग देवकी भवताऽनघ । समर्पयिष्ये सकलान्गर्भानस्योदरोद्भवान् ॥ १० ॥

---

## अथ पञ्चमांशे प्रथमोऽध्यायः

नृपाणामिति ॥ उक्तश्चतुर्थेंऽशे लोकज्ञापकधर्मप्रवर्तकः क्षत्रवंशः ॥ १ ॥

अंशावतार इति ॥ विष्णोः—व्यापकस्य नारायणस्य, * अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः * इति श्रुतेः ॥ २ ॥

चकारेति ॥ भगवान् पुरुषोत्तमः परव्यूहविभवादिषु सर्वत्र स्वरूपरूपगुणादिभिः परिपूर्ण एव सन् इच्छागृहीतपरिच्छिन्नदेवमनुष्यादिदेहतया अंश इति अंशांश इति च व्यपदिश्यते; कृष्णाद्यवतारेष्वपि विश्वरूपदर्शनाद्यतिमानुषप्रवृत्तौ सर्वैश्वर्यस्य व्यक्तत्वात् ॥ ३ ॥

मैत्रेयेति ॥ संभूतिश्चरितं च संभूतिचरितम् ॥ ४,५ ॥

कंस इति ॥ वररथं—कल्याणरथम् । वधूश्च वरश्च वरौ, तयो रथम् इति वा ॥ ६ ॥

अथेत्यादि ॥ अत्र वाक्छब्देनाशरीरी वक्ता लक्ष्यते । आभाष्यसादरमिति समासपदम् । आभाष्यार्थे यथा सादरः स्यात्तथा तं समाभाष्य—आमंत्र्य ॥ ७–९ ॥

न हन्तव्येति ॥ अस्योदरोद्भवानित्यार्षस्सन्धिः । यद्वा अस्य तवेत्यन्वयः । अथवा अस्य मम उदरोद्भवान् इति वा । * अङ्गादङ्गात् * इति श्रुतेः, * पुमान् पुंसोऽधिके शुक्रे * इत्यादिस्मृतिवचनाच्च ॥ १० ॥

श्रीपराशरः—

तथेत्याह ततः कंसो वसुदेवं द्विजोत्तम । न घातयामास च तां देवकीं तस्य गौरवात् ॥ ११ ॥
एतस्मिन्नेव काले तु भूरिभारावपीडिता । जगाम धरणी मेरौ समाजं त्रिदिवौकसाम् ॥ १२ ॥
सब्रह्मकान्सुरान्सर्वान्प्रणिपत्याथ मेदिनी । कथयामास तत्सर्वं खेदात्करुणभाषिणी ॥ १३ ॥

भूमिः—

अग्निस्सुवर्णस्य गुरुर्गवां सूर्यः परो गुरुः । ममाप्यखिललोकानां गुरुर्नारायणोऽगुरुः ॥ १४ ॥
प्रजापतिपतिर्ब्रह्मा पूर्वेषामपि पूर्वजः । कलाकाष्ठानिमेषात्मा कालश्चाव्यक्तमूर्तिमान् ॥ १५ ॥
तदंशभूतस्सर्वेषां समूहो वस्सुरोत्तमाः ॥ १६ ॥
आदित्या मरुतस्साध्या रुद्रा वस्वश्विवह्नयः ।
पितरो ये च लोकानां स्रष्टारोऽ(त्र)त्रिपुरोगमाः ॥ १७ ॥
एते तस्याप्रमेयस्य विष्णो रूपं महात्मनः ॥ १८ ॥
यक्षराक्षसदैतेयपिशाचोरगदानवाः । गन्धर्वाप्सरसश्चैव रूपं विष्णोर्महात्मनः ॥ १९ ॥
ग्रहर्क्षतारकाचित्रगगनाग्निजलानिलाः । अहं च विषयाश्चैव सर्वं विष्णुमयं जगत् ॥ २० ॥
तथा चानेकरूपस्य यस्य रूपाण्यहर्निशम् । बाध्यबाधकतां यान्ति कल्लोला इव सागरे ॥ २१ ॥
तत्साम्प्रतममी दैत्याः कालनेमिपुरोगमाः । मर्त्यलोकं समाक्रम्य बाधन्तेऽहर्निशं प्रजाः ॥ २२ ॥
कालनेमिर्हतो योऽसौ विष्णुना प्रभविष्णुना । उग्रसेनसुतः कंसस्संभूतस्स महासुरः ॥ २३ ॥
अरिष्टो धेनुकः केशी प्रलम्बो नरकस्तथा । सुन्दोऽसुरस्तथाऽत्युग्रो बाणश्चापि बलेस्सुतः ॥ २४ ॥
तथाऽन्ये च महावीर्या नृपाणां भवनेषु ये । समुत्पन्ना दुरात्मानस्तान्न संख्यातुमुत्सहे ॥ २५ ॥
अक्षौहिण्योऽत्र बहुला दिव्यमूर्तिधरास्सुराः । महाबलानां दृप्तानां दैत्येन्द्राणां ममोपरि ॥ २६ ॥
तद्भूरिभारपीडार्ता न शक्नोम्यमरेश्वराः । बिभर्तुमात्मानमहमिति विज्ञापयामि वः ॥ २७ ॥
क्रियतां तन्महाभागा मम भारावतारणम् । यथा रसातलं नाहं गच्छेयमतिविह्वला ॥ २८ ॥

---

तथेति ॥ तथेत्यङ्गीकृत्य कंसः देवकीं न घातयामास । स्वार्थे णिच् ॥ ११–१३ ॥

अग्निरित्यादि ॥ नारायणोगुरुरिति ॥ अगुरुः—गुरुरहितः । अत्र गुरुशब्दः कारणवाची, * अग्नेरपत्यं प्रथमं हिरण्यं भूर्वैष्णवी सूर्यसुताश्च गावः । लोकास्त्रयस्तेन भवन्ति दत्ता यः काञ्चनं गां च महीं च दद्यात् ॥ इति संवर्तस्मृतेः ॥ १४,१५ ॥

तदंशभूत इति ॥ तदंशभूतः—तच्छरीरभूतः । उत्तरत्र * रूपं विष्णोर्महात्मनः, * सर्वं विष्णुमयं जगत् * इत्यादेर्दर्शनात् ॥ १६–१९ ॥

ग्रहर्क्षेति ॥ ऋक्षाणि—नक्षत्राणि । तारकाः—अश्विन्यादयः ॥ २०–२५ ॥

इत्याकर्ण्य धरावाक्यमशेषैस्त्रिदशेश्वरैः । भुवो भारावतारार्थं ब्रह्मा प्राह प्रचोदितः ॥ २९ ॥

ब्रह्मा—यथाह वसुधा सर्वं सत्यमेव दिवौकसः । अहं भवो भवन्तश्च सर्वे नारायणात्मकाः ॥ ३० ॥

विभूतयश्च यास्तस्य तासामेव परस्परम् । आधिक्यन्यूनताबाध्यबाधकत्वेन वर्तते ॥ ३१ ॥

तदागच्छत गच्छामः क्षीराब्धेस्तटमुत्तमम् । तत्राराध्य हरिं तस्मै सर्वं विज्ञापयाम वै ॥ ३२ ॥

सर्वथैव जगत्यर्थे स सर्वात्मा जगन्मयः । सत्त्वांशेनावतीर्योर्व्यां धर्मस्य कुरुते स्थितिम् ॥ ३३ ॥

श्रीपराशरः—

इत्युक्त्वा प्रययौ तत्र सह देवैः पितामहः । समाहितमनाश्चैवं तुष्टाव गरुडध्वजम् ॥ ३४ ॥

ब्रह्मा—

द्वे विद्ये त्वमनाम्नाय परा चैवापरा तथा । ते एव भवतो रूपे मूर्तामूर्तात्मिके प्रभो ॥ ३५ ॥

द्वे ब्रह्मणी त्वणीयोतिस्थूलात्मन्सर्व सर्ववित् । शब्दब्रह्म परं चैव ब्रह्म ब्रह्ममयस्य यत् ॥ ३६ ॥

ऋग्वेदस्त्वं यजुर्वेदस्सामवेदस्त्वथर्वणः । शिक्षा कल्पो निरुक्तं च च्छन्दो ज्योतिषमेव च ॥ ३७ ॥

इतिहासपुराणे च तथा व्याकरणं प्रभो । मीमांसा न्यायशास्त्रं च धर्मशास्त्राण्यधोक्षज ॥ ३८ ॥

आत्माऽऽत्मदेहगुणवद्विचाराचारि यद्वचः । तदप्याद्यपते नान्यदध्यात्मात्मस्वरूपवत् ॥ ३९ ॥

---

अक्षौहिण्य इति ॥ * अक्षौहिण्याः सप्ततिरष्टशतान्येकविंशतिसहस्रम् । द्विरदास्तथा रथास्तत्त्रिपञ्च-गुणकास्तुरङ्गकनराः * ॥ २६–३० ॥

विभूतय इत्यादि ॥ तासामेवाधिक्यन्यूनता परस्परं बाध्यबाधकत्वेन वर्त्तते—बाध्यबाधकत्वे हेतु-रित्यर्थः ॥ ३१–३४ ॥

द्वे विद्ये इत्यादिश्लोकद्वयमेकं वाक्यम् ॥ द्वे विद्ये इति ॥ अनाम्नाय—आम्नायापरिच्छेद्य ! द्वे विद्ये इति–शब्दजन्यं विवेकजन्यं च ज्ञानमुच्यते ॥ * आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते । शब्दब्रह्मागममयं परं ब्रह्म विवेकजम् * इति हि वक्ष्यति । ब्रह्मपरम्—ब्रह्मविषयम्, शब्दब्रह्म—आगमोत्थं ज्ञानम् । परं चैव—ब्रह्मविवेकजं ज्ञानम् । ब्रह्मविषये विवेकजशब्दब्रह्मविषयागमजज्ञानात्मिके परापरे द्वे विद्ये इत्यन्वयः । त्वद्रूपे इत्यर्थः । ते–उपनिषत्प्रसिद्धे मूर्तामूर्तात्मिके, द्वे ब्रह्मणी–प्रकृतिपुरुषौ च, भवत एव रूपे । अणीयोतिस्थूलात्मन्–अणीयसामतिस्थूलानां चात्मभूत । अथवा अनाम्नाय इत्यनादिरक्रतुरितिवदध्ययनादिविधेरवश्यं भवतो रूपे–निरूपके, मूर्तामूर्तात्मिके–मूर्तामूर्तब्रह्मविषयतया तदात्मिके शब्दब्रह्मपरब्रह्मरूपे द्वे ब्रह्मशब्दवाच्ये मूर्तामूर्तात्मिके–परावररूपे द्वे विद्ये त्वम्, ते एव भवतो रूपे इत्यन्वयः ॥ ३५,३६ ॥

कर्मप्रतिपादकऋग्वेदाद्यागमोऽपि त्वद्रूपमित्याह–ऋग्वेद इत्यादिना ॥ ३७,३८ ॥

ब्रह्मप्रतिपादकोपनिषद्भागोऽपि त्वद्रूपमित्याह–आत्मात्मेति ॥ अत्र प्रथमेनात्मशब्देन जीवपरावुच्येते । द्वितीयेन सूक्ष्मशरीरम् । देहः स्थूलशरीरम् । गुणवदव्यक्तम् । एवमुभयात्मोभयदेहाव्यक्तविषयं विचारमाचरद्यदुप-निषद्वाक्यं तच्च त्वत्तो नान्यत् ॥ ३९ ॥

त्वमव्यक्तमनिर्देश्यमचिन्त्यानामवर्णवत् । अपाणिपादरूपं च शुद्धं नित्यं परात्परम् ॥ ४० ॥

शृणोष्यकर्णः परिपश्यसि त्वमचक्षुरूपो बहुरूपरूपः ।
अपादहस्तो जवनो ग्रहीता त्वं वेत्सि सर्वं न च सर्ववेद्यः ॥ ४१ ॥
अणोरणीयांसमसत्स्वरूपं त्वां पश्यतोऽज्ञाननिवृत्तिरग्र्या ।
धीरस्य धीरस्य बिभर्ति नान्यद्वरेण्यरूपात्परतः परात्मन् ॥ ४२ ॥
त्वं विश्वनाभिर्भुवनस्य गोप्ता सर्वाणि भूतानि तवान्तराणि ।
यद्भूतभव्यं यदणोरणीयः पुमांस्त्वमेकः प्रकृतेः परस्तात् ॥ ४३ ॥
एकश्चतुर्धा भगवान्हुताशो वर्चो विभूतिं जगतो ददाति ।
त्वं विश्वतश्चक्षुरनन्तमूर्ते त्रेधा पदं त्वं निदधासि धातः ॥ ४४ ॥
यथाऽग्निरेको बहुधा समिध्यते विकारभेदैरविकाररूपः ।
तथा भवान्सर्वगतैकरूपी रूपाण्यशेषाण्यनुपुष्यतीश ॥ ४५ ॥
एकं तवाग्र्यं परमं पदं यत्पश्यन्ति त्वां सूरयो ज्ञानदृश्यम् ।
त्वत्तो नान्यत्किंचिदस्ति स्वरूपं यद्वा भूतं यच्च भव्यं परात्मन् ॥ ४६ ॥

---

यथात्मानं—देहमविकृत्य वर्तमानतया अध्यात्मनो जीवस्य स्वरूपं त्वत्तो नान्यत् । तद्वन्मुक्तोऽपि त्वद्रूपमित्याह—त्वमव्यक्तमिति ॥ अव्यक्तम्—बाह्येंद्रियागोचरम् । अनिर्देश्यम् इतरसजातीयतया । अचिन्त्यं मनसा । अनाम—देवमनुष्यादिनामरहितम् । अवर्णं—पीतशुक्लादिवर्णहीनम् । शुद्धं—क्लेशकर्मादिनिर्मुक्तम् । परं पदं—मुक्तस्वरूपं गुणप्रवृत्त्या परं पदम् । तस्यागुणं महदित्युक्तम् । परविषयो वा अयं श्लोकः । शुद्धं नित्यं परं पदं चेति च पाठः ॥ ४० ॥

अथ परमेवाह—शृणोषीत्यादिना ॥ अचक्षुरूपः—अचक्षुररूपश्च, चक्षुस्स्वरूपरहितो वा । बहुरूपरूपः—स्वेच्छागृहीतबहुविधरूपः । अनेन करणनिरपेक्षं सर्वकार्यसामर्थ्यमुक्तम्, * अपाणिपादः * इत्यादिश्रुतेः॥४१॥

अणोरिति ॥ अणोः—जीवादणीयांसम् । असत्स्वरूपम्—दृश्यरूपरहितम् । धीः अस्य यस्योपासकस्य धीः वरेण्यरूपा त्वत्तोऽन्यन्न बिभर्ति—न विषयीकरोति, तस्य—त्वां पश्यतः, अग्र्या—आत्यन्तिकी, अज्ञाननिवृत्तिः—कर्मनिवृत्तिः । यद्वा पूर्वार्धमेकं वाक्यम् । तस्य स्पष्टोऽर्थः । धीरस्य—यस्य धीः—संकल्पः, सर्वं बिभर्ति, तस्मात् त्वत्तोऽन्यन्नास्तीति ॥ ४२ ॥

त्वमिति ॥ नाभिराधारः आन्तराणि—अन्तस्थानि, यदणोरणीयः यद्भूतं भव्यम्, प्रकृतेः परस्तात् पुमान् यः, तत्सर्वं त्वमेक एव ॥ ४३ ॥

एक इत्यादि ॥ चतुर्धा—त्रेतौपासनात्मना, वैद्युतजाठरनिर्मन्थ्यवाडवात्मना वा, यो हुताशो जगतो वर्चः—तेजः, विभूतिम्—अणिमादिं ददाति, सोऽपि त्वम्, त्रेधा पदं—त्रिविक्रमत्वे त्रिषु लोकेषु पदं निदधासि । यद्वा, * स इमान् लोकान् विचक्रमेऽधो देवानभोवाचम् * इति श्रुत्युक्तप्रकारेण । अथवा उपासनार्थं गिरित्रये सन्निधत्ते समारोहणे विष्णुपदे गयशिरसीति हि नैरुक्ताः ॥ ४४,४५ ॥

एकमिति ॥ अग्र्यम्—अप्राकृतम्, एकम्—अद्वयं तव परमं पदं यत्तदपि त्वमेवेति । यद्वा तव परमं पदं यत्तदेकं केवलमग्र्यम्—अप्राकृतम् ॥ ४६ ॥

व्यक्ताव्यक्तस्वरूपस्त्वं समष्टिव्यष्टिरूपवान् । सर्वज्ञस्सर्ववित्सर्वशक्तिज्ञानबलर्द्धिमान् ॥ ४७ ॥
अन्यूनश्चाप्यवृद्धिश्च स्वाधीनो नादिमान्वशी । क्लमतन्द्रीभयक्रोधकामादिभिरसंयुतः ॥ ४८ ॥
निरवद्यः परः प्राप्तेर्निरधिष्ठोऽक्षरः क्रमः । सर्वेश्वर(ः) पराधारो धाम्नां धामात्मकोऽक्षयः ॥ ४९ ॥
सकलावरणातीतनिरालम्बनभावन । महाविभूतिसंस्थान नमस्ते पुरुषोत्तम ॥ ५० ॥
नाकारणात्कारणाद्वा कारणाकारणान्न च । शरीरग्रहणं व्यापिन् धर्मत्राणाय केवलम् ॥ ५१ ॥

श्रीपराशरः—

इत्येवं संस्तवं श्रुत्वा मनसा भगवानजः । ब्रह्माणमाह प्रीतेन विश्वरूपं प्रकाशयन् ॥ ५२ ॥

भगवानुवाच :—

भोभो ब्रह्मंस्त्वया मत्तस्सह देवैर्यदिष्यते । तदुच्यतामशेषं च सिद्धमेवावधार्यताम् ॥ ५३ ॥

श्रीपराशरः—

ततो ब्रह्मा हरेर्दिव्यं विश्वरूपमवेक्ष्य तत् । तुष्टाव भूयो देवेषु साध्वसावनतात्मसु ॥ ५४ ॥

ब्रह्मा— नमो नमस्तेऽस्तु सहस्रकृत्वस्सहस्रबाहो बहुवक्त्रपाद ।
नमो नमस्ते जगतः प्रवृत्तिविनाशसंस्थानकराप्रमेय ॥ ५५ ॥

---

चेतनाचेतनयोः कार्यकारणभावावस्थाद्वयमपि त्वमेवेत्याह—व्यक्तेति ॥ यद्वा * समष्टिं विदुरव्यक्तं व्यष्टिर्व्यक्तमिहोच्यते * इति वा । अथवा समष्टिर्वासुदेवः, व्यष्टिस्संकर्षणादिः । सर्वज्ञस्सर्वदृगिति च पाठः । सर्वज्ञस्सर्वदृगिति । सर्वश्चासौ ज्ञश्च, सर्वदृक्—सर्वद्रष्टा । यद्वा करणैः सर्वतश्च ज्ञाता । सर्वशक्तिज्ञानबलर्द्धिमान्—सामान्यविषयं ज्ञानं सर्वज्ञानम् ॥ ४७—४८ ॥

निरवद्य इति । परः प्राप्तेः—प्राप्तेः परः, दुष्प्राप इत्यर्थः । निरधिष्ठः—निराधारः, क्रमः—अप्रतिबंधमहोत्साहः । * वृत्तिसर्गतायनेषु क्रमः * इति सूत्रे वृत्तिरप्रतिबंधः, सर्ग उत्साहः, तायनं स्थि(र)ततेति दर्शनात् । क्रम इति कर्तरि द्वयोरर्थयोर्व्युत्पत्तिः । सर्वेश्वर पराधार—सर्वेषामीश्वर परेषामाधार । सर्वेषामीश्वराणां पराधारेति वा । धाम्नां धामात्मक—ज्योतिषां ज्योतिः । पाठान्तरे सर्वेश्वरेत्यादि संबुद्धिः ॥ ४९ ॥

सकलेत्यादि ॥ आवरणानि—प्रकृत्यादीनि, कर्माणि वा । निरालंबनभावन—अशरण्यभावन । महाविभूतिसंस्थान—त्रिपाद्विभूतौ संस्थानं स्थितिर्यस्य तथोक्त ॥ ५० ॥

नाकारणादित्यादि ॥ कारणं—प्रयोजनं सुखम् । अकारणम्—अप्रयोजनं दुःखम् । कारणाकारणं—मिश्रम् । एतदुक्तं भवति—न नारकिवदधर्मफलानुभवाय तव शरीरग्रहणम् । न च स्वर्गिवत् धर्मफलानुभवार्थम् । नापि मनुष्यादिवदुभयफलानुभवार्थम् । किं तु केवलं धर्मत्राणायेति । यद्वा कस्य—सुखस्य आरणत्वात्—प्रापकत्वात् कारणं धर्मः, तद्विरुद्धमकारणमधर्मः, तदुभयं कारणाकारणम् । एभ्यः क्रमात् तिर्यग्देवनराणां जन्म । तव तु नैवम्, अकर्मवश्यत्वात् । किं तु केवलमिच्छया धर्मत्राणायेति । * इच्छागृहीताभिमतोरुदेहः, * न सा कर्मनिमित्तजा * इति च वक्ष्यति ॥ ५१—५५ ॥

सूक्ष्मातिसूक्ष्मातिबृहत्प्रमाण गरीयसामप्यतिगौरवात्मन् ।
प्रधानबुद्धीन्द्रियवत्प्रधान मूलात्परात्मन् भगवन्प्रसीद ॥ ५६ ॥
एषा मही देव महीप्रसूतैर्महासुरैः पीडितशैलबन्धा ।
परायणं त्वां जगतामुपैति भारावतारार्थमपारसार ॥ ५७ ॥
एते वयं वृत्ररिपुस्तथाऽयं नासत्यदस्रौ वरुणस्तथैव ।
इमे च रुद्रा वसवस्ससूर्यास्समीरणाग्निप्रमुखास्तथाऽन्ये ॥ ५८ ॥
सुरास्समस्तास्सुरनाथ कार्यमेभिर्मया यच्च तदीश सर्वम् ।
आज्ञापयाज्ञां परिपालयन्तस्तवैव तिष्ठाम सदाऽस्तदोषाः ॥ ५९ ॥

श्रीपराशरः—एवं संस्तूयमानस्तु भगवान्परमेश्वरः । उज्जहारात्मनः केशौ सितकृष्णौ महामुने ॥६०॥
उवाच च सुरानेतौ मत्केशौ वसुधातले । अवतीर्य भुवो भारक्लेशहानिं करिष्यतः ॥ ६१ ॥
सुराश्च सकलास्स्वांशैरवतीर्य महीतले । कुर्वन्तु युद्धमुन्मत्तैः पूर्वोत्पन्नैर्महासुरैः ॥ ६२ ॥
ततः क्षयमशेषास्ते दैतेया धरणीतले । प्रयास्यन्ति न संदेहो मद्दृक्पातविचूर्णिताः ॥ ६३ ॥
वसुदेवस्य या पत्नी देवकी देवतोपमा । तत्रायमष्टमो गर्भो मत्केशो भविता सुराः ॥ ६४ ॥
अवतीर्य च तत्रायं कंसं घातयिता भुवि । कालनेमिं समुद्भूतमित्युक्त्वाऽन्तर्दधे हरिः ॥ ६५ ॥
अदृश्याय ततस्तस्मै प्रणिपत्य महामुने । मेरुपृष्ठं सुरा जग्मुरवतेरुश्च भूतले ॥ ६६ ॥
कंसाय चाष्टमो गर्भो देवक्या धरणीधरः । भविष्यतीत्याचचक्षे भगवान्नारदो मुनिः ॥ ६७ ॥
कंसोऽपि तदुपश्रुत्य नारदात्कुपितस्ततः । देवकीं वसुदेवं च गृहे गुप्तावधारयत् ॥ ६८ ॥
वसुदेवेन कंसाय तेनैवोक्तं यथा पुरा । तथैव वसुदेवोऽपि पुत्रमर्पितवान्द्विज ॥ ६९ ॥
हिरण्यकशिपोः पुत्राष्षड्गर्भा इति विश्रुताः । विष्णुप्रयुक्ता स्तान्निद्रा क्रमाद्गर्भानयोजयत् ॥ ७० ॥

---

सूक्ष्मेति ॥ प्रधानस्य—प्रकृतेः बुद्धीन्द्रियवतः पुंसश्च प्रधान—शेषिभूत । तेन मूलभूतादव्यक्तात् परात्मन् । तत्प्रधानेति पाठे, अव्यक्तस्य बुद्ध्याद्यन्तःकरणस्य चक्षुरादेर्वागादेश्च प्रधान—मूलभूत जीवादुत्कृष्ट । प्रधानमूलमिति पाठे, प्रधानमूलभूतस्त्वमित्यर्थः ॥ ५६—५९ ॥

एवमिति ॥ केशौ—तेजसी । कः—आत्मा तस्मिन् शेत इति केशः । मोक्षधर्मे केशवनामनिर्वचने—सूर्यस्य तपतो लोकानग्नेस्सोमस्य चैव हि । अंशवो ये प्रकाशंते मम ते केशसंज्ञिताः ॥ इति ॥ ६०—६३ ॥

वसुदेवस्येति ॥ तस्यायमिति पाठे तस्यायमित्यार्षस्सन्धिः ॥ ६४—६९ ॥

हिरण्यकशिपोरिति ॥ षड्गर्भाः—प्राग्जन्मनाम्ना कीर्तिमत्सुषेणाद्याः । ते हि पूर्वं हिरण्यकशिपोर्भ्रातुः कालनेम्यसुरस्य पुत्रास्तं हिरण्यकशिपुमनादृत्य ब्रह्मार्चनात्कुपितेन तेन भाविजन्मनि पितैव वो निहनिष्यतीति शप्ताः समुद्रे शायिता इति श्रीहरिवंशे । तेन हिरण्यकशिपोः पुत्रा इत्युपचारः । गर्भानयोजयत्—देवकीजठरे गर्भत्वेनायोजयत् ॥ ७० ॥

योगनिद्रा महामाया वैष्णवी मोहितं यया । अविद्यया जगत्सर्वं तामाह भगवान्हरिः ॥ ७१ ॥

श्रीभगवानुवाच :—

निद्रे गच्छ ममादेशात्पातालतलसंश्रयान् । एकैकत्वेन षड्गर्भान्देवकीजठरं नय ॥ ७२ ॥

हतेषु तेषु कंसेन शेषाख्योऽशस्ततो मम । अंशांशेनोदरे तस्यास्सप्तमः संभविष्यति ॥ ७३ ॥

गोकुले वसुदेवस्य भार्याऽन्या रोहिणी स्थिता । तस्यास्स संभूतिसमं देवि नेयस्त्वयोदरम् ॥ ७४ ॥

सप्तमो भोजराजस्य भयाद्रोधोपरोधतः । देवक्याः पतितो गर्भ इति लोको वदिष्यति ॥ ७५ ॥

गर्भसंकर्षणात्सोऽथ लोके संकर्षणेति वै । संज्ञामवाप्स्यते वीरश्श्वेताद्रिशिखरोपमः ॥ ७६ ॥

ततोऽहं संभविष्यामि देवकीजठरे शुभे । गर्भं त्वया यशोदाया गन्तव्यमविलंबितम् ॥ ७७ ॥

प्रावृट्काले च नभसि कृष्णाष्टम्यामहं निशि । उत्पत्स्यामि नवम्यां तु प्रसूतिं त्वमवाप्स्यसि ॥ ७८ ॥

यशोदाशयने मां तु देवक्यास्त्वामनिन्दिते । मच्छक्तिप्रेरितमतिर्वसुदेवो नयिष्यति ॥ ७९ ॥

कंसश्च त्वामुपादाय देवि शैलशिलातले । प्रक्षेप्स्यत्यन्तरिक्षे च संस्थानं त्वमवाप्स्यसि ॥ ८० ॥

ततस्त्वां शतदृक्छक्रः प्रणम्य मम गौरवात् । प्रणिपातानतशिरा भगिनीत्वे ग्रहीष्यति ॥ ८१ ॥

त्वं च शुंभनिशुंभादीन्हत्वा दैत्यान् सहस्रशः । स्थानैरनेकैः पृथिवीमशेषां मण्डयिष्यसि ॥ ८२ ॥

त्वं भूतिः सन्नतिः क्षान्तिः कान्तिर्द्यौः पृथिवी धृतिः ।
लज्जा पुष्टि रुषा या तु काचिदन्या त्वमेव सा ॥ ८३ ॥

ये त्वामार्येति दुर्गेति वेदगर्भाम्बिकेति च । भद्रेति भद्रकालीति क्षेमदा भाग्यदेति च ॥ ८४ ॥

---

योगनिद्रेति ॥ योगनिद्रा—योग एव निद्रा । भगवतः समाधिविशेषो योगः । अयं निद्रायत इत्यन्येषां व्यामोहकत्वादस्य निद्रात्वम् । सैव विचित्रकार्यकारित्वान्महामाया, ज्ञानविरोधित्वादविद्या ॥ ७१-७३ ॥

गोकुल इति ॥ तस्याः संभूतिसममिति क्रियाविशेषणम् । गर्भाधानप्रसवकालाविरोधेन नेय इत्यर्थः । प्रागेव हि वसुदेवनिषिक्तगर्भायाः पश्चाद्गोकुलं गताया रोहिण्या जठरे सप्तमासावस्थितं वायुरूपं गर्भमपसार्य तत्र देवकीगर्भं साप्तमासिकं संक्रामयेति हरिवंशे उक्तम् । तस्या उदरं नेय इत्यन्वयः ॥ ७४ ॥

सप्तम इति ॥ रोधोपरोधतः—रुध्यतेऽस्मिन्निति रोधो निरोधस्थानम् ॥ ७५—७७ ॥

प्रावृट्काल इति ॥ नभसि—श्रावणे मासि । नवम्याम्—कृष्णाष्टम्या निशाशेषे नवम्यप्यस्तीति भावः ॥ ७८—८० ॥ तत इति ॥ शतदृक्—सहस्रदृक् । शतसहस्रादिशब्दा बह्वर्थवाचिनोऽपि दृश्यन्ते ॥ ८१ ॥

त्वं चेति ॥ स्थानैः—योगपीठाख्यायतनैर्विन्ध्यजालंधराद्यैः ॥ ८२, ८३ ॥

य इति ॥ आर्यादिनामाष्टकं दुर्गामन्त्रविशेषोद्धारार्थम् ॥ ८४ ॥

प्रातश्चैवापराह्णे च स्तोष्यन्त्यानम्रमूर्तयः । तेषां हि प्रार्थितं सर्वं मत्प्रसादाद्भविष्यति ॥ ८५ ॥
सुरामांसोपहारैश्च भक्ष्यभोज्यैश्च पूजिता । नृणामशेषकामांस्त्वं प्रसन्ना संप्रदास्यसि ॥ ८६ ॥
ते सर्वे सर्वदा भद्रे मत्प्रसादादसंशयम् । असंदिग्धा भविष्यन्ति गच्छ देवि यथोदितम् ॥ ८७ ॥

इति श्रीविष्णुपुराणे पंचमेऽशे प्रथमोऽध्यायः ॥ १ ॥

---

## अथ द्वितीयोऽध्यायः

श्रीपराशरः—

यथोक्तं सा जगद्धात्रा देवदेवेन वै तथा । षड्गर्भगर्भविन्यासं चक्रे चान्यस्य कर्षणम् ॥ १ ॥
सप्तमे रोहिणीं गर्भे प्राप्ते गर्भं ततो हरिः । लोकत्रयोपकाराय देवक्याः प्रविवेश ह ॥ २ ॥
योगनिद्रा यशोदायास्तस्मिन्नेव तथा दिने । संभूता जठरे तद्वद्यथोक्तं परमेष्ठिना ॥ ३ ॥
ततो ग्रहगणस्सम्यक्प्रचचार दिवि द्विज । विष्णोरंशे भुवं याते ऋतवश्चाबभुश्शुभाः ॥ ४ ॥
न सेहे देवकीं द्रष्टुं कश्चिदप्यतितेजसा । जाज्वल्यमानां तां दृष्ट्वा मनांसि क्षोभमाययुः ॥ ५ ॥
अदृष्टाः पुरुषैस्स्त्रीभिर्देवकीं देवतागणाः । बिभ्राणां वपुषा विष्णुं तुष्टुवुस्तामहर्निशम् ॥ ६ ॥

देवताः—

प्रकृतिस्त्वं परा सूक्ष्मा ब्रह्मगर्भाऽभवत्पुरा । ततो वाणी जगद्धातुर्वेदगर्भाऽसि शोभने ॥ ७ ॥
सृज्यस्वरूपगर्भाऽसि सृष्टिभूता सनातने । बीजभूता तु सर्वस्य यज्ञ(गर्भा)भूताऽभवस्त्रयी ॥ ८ ॥
फलगर्भा त्वमेवेज्या वह्निगर्भा तथाऽरणिः । अदितिर्देवगर्भा त्वं दैत्यगर्भा तथा दितिः ॥ ९ ॥

---

प्रातरिति ॥ मत्प्रसादादिति । न हि शक्तेः शक्तिमन्तमन्तरेण सामर्थ्यमिति भावः ॥ ८५ ॥

सुरेति ॥ सुरामांसाद्युपहारस्तु तत्तदधिकारविशेषशूद्रादेः, न सर्वेषाम् ॥ ८६ ॥

ते सर्वं इति ॥ ते सर्वे कामाः असंदिग्धाः—अव्यभिचरितावाप्तयः स्युः । अत्र संशयो नास्ति ॥८७॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे प्रथमोऽध्यायः ॥ १ ॥

---

## अथ द्वितीयोऽध्यायः

यथोक्तमिति ॥ षड्गर्भाख्यानां गर्भे—देवक्या उदरे निक्षेपम्, अन्यस्य—शेषाद्वयस्य सप्तमगर्भस्य तज्जठरात् कर्षणम् ॥ १ ॥

सप्तम इति ॥ गर्भे इतो रोहिणीं प्राप्ते देवक्या गर्भे हरिः प्रविवेश ॥ २—६ ॥

प्रकृतिरिति ॥ ब्रह्मगर्भा—आत्मगर्भा । यद्वा ब्रह्मशब्दो महद्वाची । या पुराऽभवत् सा त्वमित्यन्वयः । जगद्धातुः संबन्धिनी । वेदगर्भा वाणी—प्रणवः ॥ ७—९ ॥

ज्योत्स्ना वासरगर्भा त्वं ज्ञानगर्भाऽसि सन्नतिः । नयगर्भा परा नीतिर्लज्जा त्वं प्रश्रयोद्वहा ॥ १० ॥
कामगर्भा तथेच्छा त्वं तुष्टिस्संतोषगर्भिणी । मेधा च बोधगर्भाऽसि धैर्यगर्भोद्वहा धृतिः ॥ ११ ॥
ग्रहर्क्षतारकागर्भा द्यौरस्याखिलहैतुकी । एता विभूतयो देवि तथाऽन्याश्च सहस्रशः ॥ १२ ॥
तथाऽसंख्या जगद्धात्री सांप्रतं जठरे तव । समुद्राद्रिनदीद्वीपवनपत्तनभूषणा ।
ग्रामखर्वटखेटाढ्या समस्ता पृथिवी शुभे ॥ १३ ॥
समस्तवह्नयोऽम्भांसि सकलाश्च समीरणाः । महोरगास्तथा यक्षा राक्षसाः प्रेतगुह्यकाः ॥ १४ ॥
ग्रहर्क्षतारकाचित्रविमानशतसंकुलम् । अवकाशमशेषस्य यद्ददाति नभस्स्थलम् ॥ १५ ॥
भूर्लोकश्च भुवर्लोकस्स्वर्लोकोऽथ महर्जनः । तपश्च ब्रह्मलोकश्च ब्रह्माण्डमखिलं शुभे ॥ १६ ॥
तदन्तरे स्थिता देवा दैत्यगन्धर्वचारणाः । महोरगास्तथा यक्षा राक्षसाः प्रेतगुह्यकाः ॥ १७ ॥
मनुष्याः पशवश्चान्ये ये च जीवा यशस्विनि । तैरन्तस्स्थैरनन्तोऽसौ सर्वगस्सर्वभावनः ॥ १८ ॥
(रूप)नामकर्मस्वरूपाणि न परिच्छेदगोचरे । यस्याखिलप्रमाणानां स विष्णुर्गर्भगस्तव ॥ १९ ॥
त्वं स्वाहा त्वं स्वधा विद्या सुधा त्वं ज्योतिरम्बरे । त्वं सर्वलोकरक्षार्थमवतीर्णा महीतले ॥ २० ॥
प्रसीद देवि सर्वस्य जगतश्शं शुभे कुरु । प्रीत्या तं धारयेशानं धृतं येनाखिलं जगत् ॥ २१ ॥

इति श्रीविष्णुपुराणे पञ्चमांशे द्वितीयोऽध्यायः ॥ २ ॥

---

ज्योत्स्नेति ॥ ज्योत्स्ना—प्राक्संध्या । सत्सु नतिः सन्नतिः, शुश्रूषा । नीतिः—नीतिशास्त्रं, तत्साध्यो न्यायो नयः ॥ १० ॥

कामगर्भेति ॥ कामः—काम्योऽर्थः । तुष्टिस्तृप्तिः, तज्जन्यो हर्षस्संतोषः । मेधा—धारणाशक्तिः । धृतिः—धीप्रतिष्ठा । धैर्यम्—अलौल्यम् ॥ ११ ॥

ग्रहर्क्षेति ॥ हेतुरेव हैतुकी । एता इति । एताः—प्रकृत्यादयो विभूतयः, अन्याश्च ॥ १२ ॥

तथेति ॥ असंख्या जगद्धात्री च तव जठरे । इदं प्रकृत्यादिभिः तत्सामानाधिकरण्यनिबन्धनम् ॥ १३-१८ ॥

नामकर्मेति ॥ नामादेः प्रमाणानां परिच्छेदागोचरत्वमनवधित्वम् । प्रमाणानीति पाठे, यस्य विभूत्यादेः ज्ञापकानीत्यर्थः ॥ १९ ॥

त्वमिति ॥ ज्योतिरम्बर इति । अत्र ज्योतिश्शब्देन * अदितिर्द्यौरदितिरन्तरिक्षम् * इति मन्त्रोक्तादितिरुच्यते । सुरभ्यदितिभ्यां प्रलोभितः काश्यपो वरुणस्य गां जहार । ततः कुपितेन ब्रह्मणा गोपो भवेति शप्तोऽसौ वसुदेवत्वं गतो गवाध्यक्षोऽभूत् । अदितिर्देवकी सुरभिः रोहिणीति हि हरिवंशे कथा ॥ २० ॥

प्रसीदेति ॥ प्रीत्या धारय—मातुः प्रीत्या हि गर्भस्य गुणपोषः ॥ २१ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पञ्चमांशे द्वितीयोऽध्यायः ॥ २ ॥

## अथ तृतीयोऽध्यायः

श्रीपराशरः—

एवं संस्तूयमाना सा देवैर्देवमधारयत् । गर्भेण पुण्डरीकाक्षं जगतस्त्राणकारणम् ॥ १ ॥
ततोऽखिलजगत्पद्मबोधायाच्युतभानुना । देवकीपूर्वसन्ध्यायामाविर्भूतं महात्मना ॥ २ ॥
तज्जन्मदिनमत्यर्थमाह्लाद्यमलदिङ्मुखम् । बभूव सर्वलोकस्य कौमुदी शशिनो यथा ॥ ३ ॥
सन्तस्संतोषमधिकं प्रशमं चण्डमारुताः । प्रसादं निम्नगा याता जायमाने जनार्दने ॥ ४ ॥
सिन्धवो निजशब्देन वाद्यं चक्रुर्मनोहरम् । जगुर्गन्धर्वपतयो ननृतुश्चाप्सरोगणाः ॥ ५ ॥
ससृजुः पुष्पवर्षाणि देवा भुव्यन्तरिक्षगाः । जज्वलुश्चाग्नयश्शान्ता जायमाने जनार्दने ॥ ६ ॥
मन्दं जगर्जुर्जलदाः पुष्पवृष्टिमुचो द्विज । अर्धरात्रेऽखिलाधारे जायमाने जनार्दने ॥ ७ ॥
फुल्लेन्दीवरपत्राभं चतुर्बाहुमुदीक्ष्य तम् । श्रीवत्सवक्षसं जातं तुष्टावानकदुन्दुभिः ॥ ८ ॥
अभिष्टूय च तं वाग्भिः प्रसन्नाभिर्महामतिः । विज्ञापयामास तदा कंसाद्भीतो द्विजोत्तम ॥९॥

वसुदेव उवाच :—

जातोऽसि देवदेवेश शङ्खचक्रगदाधर । दिव्यरूपमिदं देव प्रसादेनोपसंहर ॥ १० ॥
अद्यैव देव कंसोऽयं कुरुते मम घातनम् । अवतीर्ण इति ज्ञात्वा त्वामस्मिन्मम मन्दिरे॥११॥

देवक्युवाच—

योऽनन्तरूपोऽखिलविश्वरूपो गर्भेऽपि लोकान्वपुषा बिभर्ति ।
प्रसीदतामेष स देवदेवो यो माययाऽविष्कृतबालरूपः ॥ १२ ॥
उपसंहर सर्वात्मन् रूपमेतच्चतुर्भुजम् । जानातु माऽवतारं ते कंसोऽयं दितिजन्मजः ॥ १३ ॥

श्रीभगवानुवाच—

स्तुतोऽहं यत्त्वया पूर्वं पुत्रार्थिन्या तदद्य ते । सफलं देवि संजातं जातोऽहं यत्तवोदरात् ॥ १४ ॥

श्रीपराशरः—

इत्युक्त्वा भगवांस्तूष्णीं बभूव मुनिसत्तम । वसुदेवोऽपि तं रात्रावादाय प्रययौ बहिः ॥ १५ ॥
मोहिताश्चाभवंस्तत्र रक्षिणो योगनिद्रया । मथुराद्वारपालाश्च व्रजत्यानकदुन्दुभौ ॥ १६ ॥

---

## अथ तृतीयोऽध्यायः

॥ १,२ ॥ तज्जन्मेति ॥ आह्लादि—आह्लादकम् ॥ ३–११ ॥

य इति ॥ अखिलविश्वरूपः—अखिलजगद्रूपः । गर्भेऽपि—गर्भस्थितोऽपि । मायया—आश्चर्यरूपया शक्त्या ॥ १२ ॥

उपसंहरेति ॥ दितिजन्मजः—दितिजन्मा दैत्यः, तस्माज्जातः । द्रमिडाख्येन दैत्येनोग्रसेनस्य वेषधरेण तद्भार्यायां चौर्येणोत्पादितः कंस इति हरिवंशोक्तेः ॥ १३ ॥

स्तुत इति ॥ पूर्वं—स्वायंभुवे मन्वन्तरे । युवयोः, पृश्निसुतपस्त्वे पृश्निगर्भः, स एवादितिकाश्यपयोर्वामनः, देवकीवसुदेवत्वे कृष्ण इति जातोऽहम् । इत्थं भागवतोक्तम् । कृष्णस्य चतुर्भुजरूपोपसंहारोक्त्या कंसवधान्तं द्विभुजत्वोपलब्धिः । परमार्थतस्तु चतुर्भुजत्वमेव, नरकशिशुपालपौण्ड्रकवधादिषु प्रसिद्धेः ॥ १४-१६ ॥

वर्षतां जलदानां च तोयमत्युल्बणं निशि । संवृत्यानुययौ शेषः फणैरानकदुन्दुभिम् ॥ १७ ॥
यमुनां चातिगंभीरां नानावर्तशताकुलाम् । वसुदेवो वहन्विष्णुं जानुमात्रवहां ययौ ॥ १८ ॥
कंसस्य करदानाय तत्रैवाभ्यागतांस्तटे । नन्दादीन्गोपवृद्धांश्च यमुनाया ददर्श सः ॥ १९ ॥
तस्मिन्काले यशोदाऽपि मोहिता योगनिद्रया । तामेव कन्यां मैत्रेय प्रसूता मोहिते जने ॥ २० ॥
वसुदेवोऽपि विन्यस्य बालमादाय दारिकाम् । यशोदाशयनात्तूर्णमाजगामामितद्युतिः ॥ २१ ॥
ददृशे च प्रबुद्धा सा यशोदा जातमात्मजम् । नीलोत्पलदलश्यामं ततोऽत्यर्थं मुदं ययौ ॥ २२ ॥
आदाय वसुदेवोऽपि दारिकां निजमन्दिरे । देवकीशयने न्यस्य यथापूर्वमतिष्ठत ॥ २३ ॥
ततो बालध्वनिं श्रुत्वा रक्षिणस्सहसोत्थिताः । कंसायावेदयामासुर्देवकीप्रसवं द्विज ॥ २४ ॥
कंसस्तूर्णमुपेत्यैनां ततो जग्राह बालिकाम् । मुञ्चमुञ्चेति देवक्या सन्नकण्ठ्या निवारितः ॥ २५ ॥
चिक्षेप च शिलापृष्ठे सा क्षिप्ता वियति स्थिता । अवाप रूपं सुमहत्सायुधाष्टमहाभुजम् ॥ २६ ॥
प्रजहास तथैवोच्चैः कंसं च रुषिताऽब्रवीत् । किं मया क्षिप्तया कंस जातो यस्त्वां वधिष्यति ॥२७॥
सर्वस्वभूतो देवानामासीन्मृत्युः पुरा स ते । तदेतत्संप्रधार्याशु क्रियतां हितमात्मनः ॥ २८ ॥
इत्युक्त्वा प्रययौ देवी दिव्यस्रग्गन्धभूषणा । पश्यतो भोजराजस्य स्तुता सिद्धैर्विहायसा ॥ २९ ॥

इति श्रीविष्णुपुराणे पंचमेंशे तृतीयोऽध्यायः ॥ ३ ॥

## अथ चतुर्थोऽध्यायः

श्रीपराशरः—

कंसस्ततोद्विग्नमनाः प्राह सर्वान्महासुरान् । प्रलंबकेशिप्रमुखानाहूयासुरपुङ्गवान् ॥ १ ॥

---

वर्षतामिति ॥ अत्युल्बणम्—अतिशब्दम् ॥ १७ ॥
यमुनामिति ॥ जानुमात्रवहामित्यत्र हेतुः—वहन् विष्णुमिति ॥ १८ ॥
कंसस्येति ॥ नन्दादीन् ददर्श, स्वयं तैरदृष्टः ॥ १९—२६ ॥
प्रजहासेति ॥ यस्त्वां वधिष्यति स जात इत्यन्वयः ॥ २७ ॥
सर्वस्वभूत इति ॥ पुरा—कालनेमित्वे ॥ २८,२९ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे तृतीयोऽध्यायः ॥ ३ ॥

## अथ चतुर्थोऽध्यायः

कंस इति ॥ ततोद्विग्नेत्यार्षः संधिः ॥ १ ॥

सः—

हे प्रलंब महाबाहो केशिन् धेनुक पूतने । अरिष्टाद्यास्तथैवान्ये श्रूयतां वचनं मम ॥ २ ॥
मां हन्तुममरैर्यत्नः कृतः किल दुरात्मभिः । मद्वीर्यतापितान्वीरो न त्वेतान्गणयाम्यहम् ॥ ३ ॥
किमिन्द्रेणाल्पवीर्येण किं हरेणैकचारिणा । हरिणा वापि किं साध्यं छिद्रेष्वसुरघातिना ॥ ४ ॥
किमादित्यैः किं वसुभिरल्पवीर्यैः किमग्निभिः । किं वाऽन्यैरमरैः सर्वैर्मद्बाहुबलनिर्जितैः ॥ ५ ॥
किं न दृष्टोऽमरपतिर्मया संयुगमेत्य सः । पृष्ठेनैव वहन्बाणानपगच्छन्न वक्षसा ॥ ६ ॥
मद्राष्ट्रे वारिता वृष्टिर्यदा शक्रेण किं तदा । मद्बाणभिन्नैर्जलदैरापोऽमुक्ता यथेप्सिताः ॥ ७ ॥
किमुर्व्यामवनीपाला मद्बाहुबलभीरवः । ते सर्वेऽसन्नतिं याता जरासंधमृते गुरुम् ॥ ८ ॥
अमरेषु ममावज्ञा जायते दैत्यपुङ्गवाः । हास्यं मे जायते वीरास्तेषु यत्नपरेष्वपि ॥ ९ ॥
तथाऽपि खलु दुष्टानां तेषामप्यधिकं मया । अपकाराय दैत्येन्द्रा यतनीयं दुरात्मनाम् ॥ १० ॥
तद्ये यशस्विनः केचित्पृथिव्यां ये च यज्वनः । कार्यो देवापकाराय तेषां सर्वात्मना वधः ॥ ११ ॥
उत्पन्नश्चापि मे मृत्युर्भूतपूर्वस्स वै किल । इत्येतद्दारिका प्राह देवकीगर्भसंभवा ॥ १२ ॥
तस्माद्बालेषु च परो यत्नः कार्यो महीतले । यत्रोद्रिक्तं बलं बाले स हन्तव्यः प्रयत्नतः ॥ १३ ॥
इत्याज्ञाप्यासुरान्कंसः प्रविश्याशु गृहं ततः । मुमोच वसुदेवं च देवकीं च निरोधतः ॥ १४ ॥

स उवाच—

युवयोर्घातिता गर्भा वृथैवैते मयाऽधुना । कोऽप्यन्य एव नाशाय मम गर्भस्समुद्यतः ॥ १५ ॥
तदलं परितापेन नूनं तद्भाविनो हि ते । अर्भका युवयोर्दोषाच्चायुषो यद्वियोजिताः ॥ १६ ॥

पराशरः—

इत्याश्वास्य विमुक्त्वा च कंसस्तौ परिशङ्कितः । अन्तर्गृहं द्विजश्रेष्ठ प्रविवेश ततः स्वकम् ॥ १७ ॥

इति श्रीविष्णुपुराणे पंचमेंशे चतुर्थोऽध्यायः ॥ ४ ॥

---

हे प्रलंबेति ॥ हे प्रलंबेत्यादि युष्माभिरन्यैश्च श्रूयताम् इत्यन्वयः ॥ २—६ ॥

मद्राष्ट्र इति ॥ आपोमुक्ताः—अमुक्ता इति च्छेदः ॥ ७ ॥

किमुर्व्यामिति ॥ ते सर्वे सन्नतिमित्यत्र असन्नतिमिति पदच्छेदः । न सर्वे इति वा पाठः । गुरुं—गुरुम् ॥ ८—१० ॥

तदिति ॥ यज्वनः—यज्वानः; दीर्घाभाव आर्षः । वधान्निरन्ना देवा नङ्क्ष्यन्तीति देवापकारः ॥ —१५ ॥ तदलमिति ॥ तद्भाविनः—भवितव्यतादृशमरणाः ॥ १६,१७ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमेंशे चतुर्थोऽध्यायः ॥ ४ ॥

## अथ पञ्चमोऽध्यायः

श्रीपराशरः—

विमुक्तो वसुदेवोऽपि नन्दस्य शकटं गतः। प्रहृष्टं दृष्टवान्नन्दं पुत्रो जातो ममेति वै ॥ १ ॥
वसुदेवोऽपि तं प्राह दिष्ट्यादिष्ट्येति सादरम्। वार्धकेऽपि समुत्पन्नस्तनयोऽयं तवाधुना ॥ २ ॥
दत्तो हि वार्षिकस्सर्वो भवद्भिर्नृपतेः करः। यदर्थमागतास्तस्मान्नात्र स्थेयं महाधनैः ॥ ३ ॥
यदर्थमागताः कार्यं तन्निष्पन्नं किमास्यते। भवद्भिर्गम्यतां नन्द तच्छीघ्रं निजगोकुलम् ॥ ४ ॥
ममापि बालकस्तत्र रोहिणीप्रभवो हि यः। स रक्षणीयो भवता यथाऽयं तनयो निजः ॥ ५ ॥
इत्युक्ताः प्रययुर्गोपा नन्दगोपपुरोगमाः। शकटारोपितैर्भाण्डैः करं दत्त्वा महाबलाः ॥ ६ ॥
वसतां गोकुले तेषां पूतना बालघातिनी। सुप्तं कृष्णमुपादाय रात्रौ तस्मै स्तनं ददौ ॥ ७ ॥
यस्मै यस्मै स्तनं रात्रौ पूतना संप्रयच्छति। तस्यतस्य क्षणेनाङ्गं बालकस्योपहन्यते ॥ ८ ॥
कृष्णस्तु तत्स्तनं गाढं कराभ्यामतिपीडितम्। गृहीत्वा प्राणसहितं पपौ क्रोधसमन्वितः ॥ ९ ॥
साऽतिमुक्तमहारावा विच्छिन्नस्नायुबंधना। पपात पूतना भूमौ म्रियमाणाऽतिभीषणा ॥ १० ॥
तन्नादश्रुतिसंत्रस्ताः प्रबुद्धास्ते व्रजौकसः। ददृशुः पूतनोत्सङ्गे कृष्णं तां च निपातिताम् ॥ ११ ॥
आदाय कृष्णं संत्रस्ता यशोदाऽपि द्विजोत्तम। गोपुच्छभ्रामणेनाथ बालदोषमपाकरोत् ॥ १२ ॥
गोकरीषमुपादाय नन्दगोपोऽपि मस्तके। कृष्णस्य प्रददौ रक्षां कुर्वंश्चैतदुदीरयन् ॥ १३ ॥

नन्दगोपः—

रक्षतु त्वामशेषाणां भूतानां प्रभवो हरिः। यस्य नाभिसमुद्भूतपङ्कजादभवज्जगत् ॥ १४ ॥
येन दंष्ट्राग्रविधृता धारयत्यवनिर्जगत्। वराहरूपधृग्देवस्स त्वां रक्षतु केशवः ॥ १५ ॥
नखाङ्कुरविनिर्भिन्नवैरिवक्षस्स्थलो विभुः। नृसिंहरूपी सर्वत्र रक्षतु त्वां जनार्दनः ॥ १६ ॥
वामनो रक्षतु सदा भवन्तं यः क्षणादभूत्। त्रिविक्रमक्रमाक्रान्तत्रैलोक्यः स्फुरदायुधः ॥ १७ ॥
शिरस्ते पातु गोविन्दः कण्ठं रक्षतु केशवः। गुह्यं च जठरं विष्णुर्जंघे पादौ जनार्दनः ॥ १८ ॥
मुखं बाहू प्रबाहू च मनः सर्वेन्द्रियाणि च। रक्षत्वव्याहतैश्वर्यस्तव नारायणोऽव्ययः ॥ १९ ॥
शार्ङ्गचक्रगदापाणेश्शंखनादहताः क्षयम्। गच्छन्तु प्रेतकूष्माण्डराक्षसा ये तवाहिताः ॥ २० ॥
त्वां पातु दिक्षु वैकुण्ठो विदिक्षु मधुसूदनः। हृषीकेशोऽम्बरे भूमौ रक्षतु त्वां महीधरः ॥ २१ ॥

---

### अथ पञ्चमोऽध्यायः

॥ १,२ ॥ दत्तो हीति ॥ वार्षिकः—सांवत्सरिकः। नात्र स्थेयमित्यादिना महाधनानां दुष्टनृपसमीपस्थितिर्दोषाय तद्गम्यतामिति स्वसुतरक्षणाभिप्रायेणोक्तिः सूचिता ॥ ३–१६ ॥

वामन इति ॥ त्रिभिर्विक्रमैः—पदन्यासैः, क्रमेणाक्रान्तत्रैलोक्यः ॥ १७–१८ ॥

मुखमिति ॥ प्रबाहू—कूर्परादधोभागौ ॥ १९–२१ ॥

पराशरः—

एवं कृतस्वस्त्ययनो नन्दगोपेन बालकः । शायितश्शकटस्याधो बालपर्यङ्किकातले ॥ २२ ॥
ते च गोपा महद्दृष्ट्वा पूतनायाः कलेवरम् । मृतायाः परमं त्रासं विस्मयं च तदा ययुः ॥ २३ ॥

इति श्रीविष्णुपुराणे पञ्चमांशे पञ्चमोऽध्यायः ॥ ५ ॥

---

अथ षष्ठोऽध्यायः

पराशरः—

कदाचिच्छकटस्याधश्शयानो मधुसूदनः । चिक्षेप चरणावूर्ध्वं स्तन्यार्थी प्ररुरोद ह ॥ १ ॥
तस्य पादप्रहारेण शकटं परिवर्त्तितम् । विध्वस्तकुंभभाण्डं तद्विपरीतं पपात वै ॥ २ ॥
ततो हाहाकृतस्सर्वो गोपगोपीजनो द्विज । आजगामाथ ददृशे बालमुत्तानशायिनम् ॥ ३ ॥
गोपाः केनेति केनेदं शकटं परिवर्तितम् । तत्रैव बालकाः प्रोचुर्बालेनानेन पातितम् ॥ ४ ॥
रुदता दृष्टमस्माभिः पादविक्षेपपातितम् । शकटं परिवृत्तं वै नैतदन्यस्य चेष्टितम् ॥ ५ ॥
ततः पुनरतीवासन्गोपा विस्मयचेतसः । नन्दगोपोऽपि जग्राह बालमत्यन्तविस्मितः ॥ ६ ॥
यशोदा शकटारूढभग्नभाण्डकपालिकाः । शकटं चार्चयामास दधिपुष्पफलाक्षतैः ॥ ७ ॥
गर्गश्च गोकुले तत्र वसुदेवप्रचोदितः । प्रच्छन्न एव गोपानां संस्कारानकरोत्तयोः ॥ ८ ॥
ज्येष्ठं च राममित्याह कृष्णं चैव तथाऽवरम् । गर्गो मतिमतां श्रेष्ठो नाम कुर्वन्महामतिः ॥ ९ ॥

---

एवमिति ॥ स्वस्त्ययनं—क्षेमप्रापणं कर्म । बालपर्यंकिका—बालार्थोऽल्पपर्यङ्कः । तलम्—उपरिभागः २३ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पञ्चमेंऽशे पञ्चमोऽध्यायः ॥ ५ ॥

---

अथ षष्ठोऽध्यायः

॥ १ ॥ तस्येति ॥ विध्वस्तकुंभभाण्डं—कुंभाः—घटाः, भाण्डानि—गर्गर्याद्युपकरणानि । कुप्यभाण्ड-पाठे स्वर्णरजतेतरद्रव्यमयभाण्डमित्यर्थः । शकटं मुराविष्टम् । * तदा शकटरूपेण दैत्यस्तामाश्रितो मुरः * हरिवंशे ॥ २, ३ ॥

गोपा इति ॥ केनकेनेत्यत्रापि प्रोचुरित्यन्वयः । विस्मयाद्वीप्सा ॥ ४—६ ॥

यशोदेत्यादि ॥ अर्चनार्थं शकटे आरोपिताः भग्नभाण्डकपालिकाः यया सा ॥ ७ ॥

गर्गश्चेति ॥ गर्गः—यदुपुरोहितः । गोपानां संछन्नः—तैरज्ञातः ॥ ८ ॥

ज्येष्ठमिति ॥ मतिमतां—मुनीनाम् ॥ ९ ॥

स्वल्पेनैव तु कालेन रंगिणौ तौ तदा व्रजे । घृष्टजानुकरौ विप्र बभूवतुरुभावपि ॥ १० ॥
करीषभस्मदिग्धाङ्गौ भ्रममाणावितस्ततः । न निवारयितुं सेहे यशोदा तौ न रोहिणी ॥ ११ ॥
गोवाटमध्ये क्रीडन्तौ वत्सवाटं गतौ पुनः । तदहर्जातगोवत्सपुच्छाकर्षणतत्परौ ॥ १२ ॥
यदा यशोदा तौ बालावेकस्थानचरावुभौ । शशाक नो वारयितुं क्रीडन्तावतिचञ्चलौ ॥ १३ ॥
दाम्ना मध्ये ततो बद्ध्वा बबन्ध तमुलूखले । कृष्णमक्लिष्टकर्माणमाह चेदममर्षिता ॥ १४ ॥
यदि शक्नोषि गच्छ त्वमतिचञ्चलचेष्टित । इत्युक्त्वाऽथ निजं कर्म सा चकार कुटुंबिनी ॥ १५ ॥
व्यग्रायामथ तस्यां स कर्षमाण उलूखलम् । यमलार्जुनमध्येन जगाम कमलेक्षणः ॥ १६ ॥
कर्षता वृक्षयोर्मध्ये तिर्यग्गतमुलूखलम् । भग्नावुत्तुंगशाखाग्रौ तेन तौ यमलार्जुनौ ॥ १७ ॥
ततः कटकटाशब्दसमाकर्णनतत्परः । आजगाम व्रजजनो ददर्श च महाद्रुमौ ॥ १८ ॥
नवोद्गताल्पदन्तांशुसितहासं च बालकम् । तयोर्मध्यगतं दाम्ना बद्धं गाढं तथोदरे ॥ १९ ॥
ततश्च दामोदरतां स ययौ दामबंधनात् ॥ २० ॥
गोपवृद्धास्ततः सर्वे नन्दगोपपुरोगमाः । मन्त्रयामासुरुद्विग्ना महोत्पातातिभीरवः ॥ २१ ॥
स्थाने नेह न नः कार्यं व्रजामोऽन्यन्महावनम् । उत्पाता बहवो ह्यत्र दृश्यन्ते नाशहेतवः ॥२२॥
पूतनाया विनाशश्च शकटस्य विपर्ययः । विना वातादिदोषेण द्रुमयोः पतनं तथा ॥ २३ ॥
वृन्दावनमितस्स्थानात्तस्माद्गच्छाम मा चिरम् । यावद्भौममहोत्पातदोषो नाभिभवेद्व्रजम् ॥ २४ ॥
इति कृत्वा मतिं सर्वे गमने ते व्रजौकसः । ऊचुस्स्वं स्वं कुलं शीघ्रं गम्यतां मा विलम्बथ ॥२५॥
ततः क्षणेन प्रययुः शकटैर्गोधनैस्तथा । यूथशो वत्सपालाश्च कालयन्तो व्रजौकसः ॥ २६ ॥
द्रव्यावयवनिर्धूतं क्षणमात्रेण तत्तदा । काकभाससमाकीर्णं व्रजस्थानमभूद्द्विज ॥ २७ ॥
वृन्दावनं भगवता कृष्णेनाक्लिष्टकर्मणा । शुभेन मनसा ध्यातं गवां सिद्धिमभीप्सता ॥ २८ ॥
ततस्तत्रातिरूक्षेऽपि घर्मकाले द्विजोत्तम । प्रावृट्काल इवोद्भूतं नवशष्पं समंततः ॥ २९ ॥
स समावासितः सर्वो व्रजो वृन्दावने ततः । शकटीवाटपर्यन्तश्चन्द्रार्धाकारसंस्थितः ॥ ३० ॥

---

स्वल्पेनेति ॥ रंगिणौ—संचारिणौ ॥ १०, ११ ॥

गोवाटमध्य इति ॥ गोवाटं—गोक्षेत्रम् ॥१२–२१॥ स्थानेनेति ॥ स्थानेन—स्थित्या ॥२२–२३॥

वृन्दावनमिति ॥ इतः—बृहद्वनाख्यात्, भौममहोत्पातः—चरस्थिरेषु विकृतिः । स सप्तरात्रपाकः । तत्पाककालात्प्राक् तद्भूमित्यागिनां न दोष इति श्रूयते ॥ २४ ॥ इतीति ॥ कुलं—कुटुंबम् ॥ २५ ॥

तत इति ॥ कालयन्तः—चारयन्तः । गोवनमिति शेषः ॥ २६ ॥

द्रव्यावयवेति ॥ द्रव्यावयवनिर्धूतं—व्रीह्यन्नदध्यादिद्रव्यावयवाः निर्धूताः—आकीर्णा यत्र । * क्तोऽधिकरणे च * इति सूत्रम् ॥ २७–२९ ॥

स इति ॥ शकटीवाटः—अलातशकटीश्रेणी प्रान्ते यस्य सः । व्रततिवाटी वा वाटशब्दः । चंद्रार्द्धाकारत्वं यमुनानुरोधात् । शकटीवाटपर्यन्त इति च पाठः ॥ ३० ॥

वत्सपालौ च संवृत्तौ रामदामोदरौ ततः । एकस्थानस्थितौ गोष्ठे चेरतुर्बाललीलया ॥ ३१ ॥
बर्हिपत्रकृतापीडौ वन्यपुष्पावतंसकौ । गोपवेणुकृतातोद्यपत्रवाद्यकृतस्वनौ ॥ ३२ ॥
काकपक्षधरौ बालौ कुमाराविव पावकी । हसन्तौ च रमन्तौ च चेरतुः स्म महावनम् ॥ ३३ ॥
क्वचिद्वहन्तावन्योन्यं क्रीडमानौ तथा परैः । गोपपुत्रैस्समं वत्सांश्चारयन्तौ विचेरतुः ॥ ३४ ॥
कालेन गच्छता तौ तु सप्तवर्षौ महाव्रजे । सर्वस्य जगतः पालौ वत्सपालौ बभूवतुः ॥ ३५ ॥
प्रावृट्कालस्ततोऽतीव मेघौघस्थगिताम्बरः । बभूव वारिधाराभिरैक्यं कुर्वन्दिशामिव ॥ ३६ ॥
प्ररूढनवशष्पाढ्या शक्रगोपाचिता मही । तथा मारकतीवासीत्पद्मरागविभूषिता ॥ ३७ ॥
ऊहुरुन्मार्गवाहीनि निम्नगाम्भांसि सर्वतः । मनांसि दुर्विनीतानां प्राप्य लक्ष्मीं नवामिव ॥ ३८ ॥
न रेजेऽन्तरितश्चन्द्रो निर्मलो मलिनैर्घनैः । सद्वादिवादो मूर्खाणां प्रगल्भाभिरिवोक्तिभिः ॥ ३९ ॥
निर्गुणेनापि चापेन शक्रस्य गगने पदम् । अवाप्यताविवेकस्य नृपस्येव परिग्रहे ॥ ४० ॥
मेघपृष्ठे बलाकानां रराज विमला ततिः । दुर्वृत्ते वृत्तचेष्टेव कुलीनस्यातिशोभना ॥ ४१ ॥
न बबन्धाम्बरे स्थैर्यं विद्युदत्यन्तचञ्चला । मैत्रीव प्रवरे पुंसि दुर्जनेन प्रयोजिता ॥ ४२ ॥
मार्गा बभूवुरस्पष्टास्तृणशष्पचयावृताः । अर्थान्तरमनुप्राप्ताः प्रजडानामिवोक्तयः ॥ ४३ ॥
उन्मत्तशिखिसारंगे तस्मिन्काले महावने । कृष्णरामौ मुदा युक्तौ गोपालैश्चेरतुस्सह ॥ ४४ ॥
क्वचिद्गोभिस्समं रम्यं गेयतानरतावुभौ । चेरतुः क्वचिदत्यर्थं शीतवृक्षतलाश्रितौ ॥ ४५ ॥
क्वचित्कदम्बस्रक्चित्रौ मयूरस्रग्विराजितौ । विलिप्तौ क्वचिदासातां विविधैर्गिरिधातुभिः ॥ ४६ ॥

---

वत्सपालाविति ॥ एकस्थानस्थितौ—लीलास्थानस्थितौ ॥ ३१ ॥

बर्हीति ॥ आपीडः—शेखरः । गोपवेणुकृतातोद्यपत्रवाद्यकृतस्वनौ—गोपोचितवेणुभिरेव रचितमुरजादिकृत्यौ, पर्णमयवाद्यैः कृतस्वनौ च ॥ ३२ ॥

काकपक्षधराविति ॥ काकपक्षः—शिखा । पावकी—शाखविशाखाख्यौ स्कन्दांशौ ॥ ३३–३६ ॥

प्ररूढेति ॥ शक्रगोपः—अरुणः कीटविशेषः । मारकती—मरकतमयी ॥ ३७ ॥

ऊहुरितिः ॥ ऊहुः—जग्मुः । वहतिरत्र प्रापणे ॥ ३८ ॥

नेति ॥ सद्वादिवादः—वैदिकवादः । मूर्खाः—वेदबाह्यकुदृष्टयः ॥ ३९ ॥

निर्गुणेनेति ॥ अविवेकनृपतिपरिग्रहे निर्गुणेन पुरुषेणेव ॥ ४० ॥

मेघपृष्ठ इति ॥ दुर्वृत्ते—अपकारिणि, कुलीनस्य—अभिजातस्य, वृत्तचेष्टा—सच्चरितमुपकारादिकं लब्धपरभागमौज्ज्वल्यं याति । यद्वा दुर्वृत्तलक्षणं दृष्ट्वा सज्जनचेष्टेव ॥ ४१,४२ ॥

मार्गा इति ॥ अर्थान्तरं—स्वविवक्षितादन्यमर्थम् ॥ ४३ ॥

उन्मत्तेति ॥ सारंगः— चातकः ऋष्यो वा ॥ ४४ ॥

क्वचिदिति ॥ गेयतानरतौ—तानो नाम गायतोऽन्यस्यान्येन वेण्वादिकृतस्वश्रुत्याद्यनुग्रहः ॥ ४५–४६ ॥

पर्णशय्यासु संसुप्तौ क्वचिन्निद्रान्तरैषिणौ । क्वचिद्गर्जति जीमूते हाहाकाररवाकुलौ ॥ ४७ ॥
गायतामन्यगोपानां प्रशंसापरमौ क्वचित् । मयूरकेकानुगतौ गोपवेणुप्रवादकौ ॥ ४८ ॥
इति नानाविधैर्भावैरुत्तमप्रीतिसंयुतौ । क्रीडन्तौ तौ वने तस्मिंश्चेरतुस्तुष्टमानसौ ॥ ४९ ॥
विकाले च समं गोभिर्गोपवृन्दसमन्वितौ । विहृत्याथ यथायोगं व्रजमेत्य महाबलौ ॥ ५० ॥
गोपैस्समानैस्सहितौ क्रीडन्तावमराविव । एवं तावूषतुस्तत्र रामकृष्णौ महाद्युती ॥ ५१ ॥

इति श्रीविष्णुपुराणे पंचमेंशे षष्ठोध्यायः ॥ ६ ॥

## अथ सप्तमोऽध्यायः

श्रीपराशर :—

एकदा तु विना रामं कृष्णो वृन्दावनं ययौ । विचचार वृतो गोपैर्वन्यपुष्पस्रगुज्ज्वलः ॥ १ ॥
स जगामाथ कालिन्दीं लोलकल्लोलशालिनीम् । तीरसंलग्नफेनौघैर्हसन्तीमिव सर्वतः ॥ २ ॥
तस्याश्चातिमहाभीमं विषाग्निश्रितवारिणम् । ह्रदं कालीयनागस्य ददर्शातिविभीषणम् ॥ ३ ॥
विषाग्निना प्रसरता दग्धतीरमहीरुहम् । वाताहताम्बुविक्षेपस्पर्शदग्धविहंगमम् ॥ ४ ॥
तमतीव महारौद्रं मृत्युवक्त्रमिवापरम् । विलोक्य चिन्तयामास भगवान्मधुसूदनः ॥ ५ ॥

अस्मिन्वसति दुष्टात्मा कालीयोऽसौ विषायुधः ।
यो मया निर्जितस्त्यक्त्वा दुष्टो गच्छेत् पयोनिधिम् ॥ ६ ॥

तेनेयं दूषिता सर्वा यमुना सागरंगमा । न नरैर्गोधनैश्चापि तृषार्तैरुपभुज्यते ॥ ७ ॥
तदस्य नागराजस्य कर्तव्यो निग्रहो मया । निस्त्रासास्तु सुखं येन चरेयुर्व्रजवासिनः ॥ ८ ॥
एतदर्थं तु लोकेऽस्मिन्नवतारः कृतो मया । यदेषामुत्पथस्थानां कार्या शान्तिर्दुरात्मनाम् ॥ ९ ॥

---

पर्णशय्यास्विति ॥ निद्रान्तरैषिणौ—निद्रार्थमवकाशार्थिनौ ॥ ४७ ॥

गायतामिति ॥ केकानुगतौ—तारध्वन्यनुगतौ । तदुक्तम्—* तारं तु विद्यात्सवनं तृतीयं शिरोगतं तच्च सदा प्रयोज्यम् । मयूरहंसान्यभृतस्वराणां तुल्येन नादेन शिरःस्थितेन * इति ॥ ४८, ४९ ॥

विकाले चेति ॥ विकाले—रात्रावपि ॥ ५०, ५१ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे षष्ठोऽध्यायः ॥ ६ ॥

## अथ सप्तमोऽध्यायः

एकदा त्विति ॥ विना रामम्—स हि तस्य नागह्रदप्रवेशं नानुमन्येत ॥ १ ॥

स इति ॥ फेनस्य शौक्ल्याद्धसन्तीमिवेत्युत्प्रेक्षा । हसन्तीम्—अङ्गारशकटिकामिवेत्युपमा वा । अत्र ज्वालावत्कल्लोलः, भस्मवत्फेनः ॥ २ ॥ तस्या इति ॥ श्रितं—तप्तम् ॥ ३–५ ॥

अस्मिन्निति ॥ यो मयेत्यादि । मया—मद्विभूतिभूतेन तार्क्ष्येणेत्यर्थः । नष्टः—न दृष्टः । सोऽस्मिन् मत्स्यानुजिघृक्षुसौभरिशापभीततार्क्ष्यदुष्प्रवेशे वसति । अयमर्थो भागवते द्रष्टव्यः ॥ ६–९ ॥

तदेतं नातिदूरस्थं कदंबमुरुशाखिनम् । अधिरुह्य पतिष्यामि ह्रदेऽस्मिन्ननिलाशिनः ॥ १० ॥

श्रीपराशरः—

इत्थं विचिन्त्य बद्ध्वा च गाढं परिकरं ततः । निपपात ह्रदे तत्र नागराजस्य वेगतः ॥ ११ ॥
तेनातिपतता तत्र क्षोभितस्स महाह्रदः । अत्यर्थं दूरजातांस्तु समसिञ्चन्महीरुहान् ॥ १२ ॥
ते हि दुष्टविषज्वालातप्तांबुपवनोक्षिताः । जज्वलुः पादपास्सद्यो ज्वालाव्याप्तदिगन्तराः ॥ १३ ॥
आस्फोटयामास तदा कृष्णो नागह्रदे भुजम् । तच्छब्दश्रवणाच्चाशु नागराजोऽभ्युपागमत् ॥१४॥
आताम्रनयनः क्रोपाद्विषज्वालाकुलैर्मुखैः । वृतो महाविषैश्चान्यैरुरगैरनिलाशनैः ॥ १५ ॥
नागपत्न्यश्च शतशो हारिहारोपशोभिताः । प्रकंपिततनुक्षेपचलत्कुंतलकान्तयः ॥ १६ ॥
ततः प्रवेष्टितस्सर्पैस्स कृष्णो भोगबन्धनैः । ददंशुस्तेऽपि तं कृष्णं विषज्वालाकुलैर्मुखैः ॥ १७ ॥
तं तत्र पतितं दृष्ट्वा सर्पभोगैर्निपीडितम् । गोपा व्रजमुपागम्य चुक्रुशुः शोकलालसाः ॥ १८ ॥

गोपाः—

एष मोहं गतः कृष्णो मग्नो वै कालियह्रदे । भक्ष्यते नागराजेन तमागच्छत पश्यत ॥ १९ ॥
तच्छ्रुत्वा तत्र ते गोपा वज्रपातोपमं वचः । गोप्यश्च त्वरिता जग्मुर्यशोदाप्रमुखा ह्रदम् ॥ २० ॥
हाहा क्वासाविति जनो गोपीनामतिविह्वलः । यशोदया समं भ्रान्तो द्रुतप्रस्खलितं ययौ ॥ २१ ॥
नन्दगोपश्च गोपाश्च रामश्चाद्भुतविक्रमः । त्वरितं यमुनां जग्मुः कृष्णदर्शनलालसाः ॥ २२ ॥
ददृशुश्चापि ते तत्र सर्पराजवशंगतम् । निष्प्रयत्नीकृतं कृष्णं सर्पभोगविवेष्टितम् ॥ २३ ॥
नन्दगोपोऽपि निश्चेष्टो न्यस्य पुत्रमुखे दृशम् । यशोदा च महाभागा बभूव मुनिसत्तम ॥ २४ ॥
गोप्यस्त्वन्या रुदन्त्यश्च ददृशुः शोककातराः । प्रोचुश्च केशवं प्रीत्या भयकातर्यगद्गदम् ॥ २५ ॥

गोप्यः—

सर्वा यशोदया सार्धं विशामोऽत्र महाह्रदम् । सर्पराजस्य नो गन्तुमस्माभिर्युज्यते व्रजम् ॥ २६ ॥

दिवसः को विना सूर्यं विना चन्द्रेण का निशा ।
विना वृषेण का गावो विना कृष्णेन को व्रजः ॥ २७ ॥

विनाकृता न यास्यामः कृष्णेनानेन गोकुलम् । अरम्यं नातिसेव्यं च वारिहीनम् यथा सरः ॥२८॥

---

तदिति ॥ कदंबोऽसावमृतमानयता तार्क्ष्येणक्रान्तत्वान्न दग्ध इति पुराणान्तरसिद्धम् ॥ १० ॥

इत्थमिति ॥ परितः क्रियत इति परिकरो वस्त्रम् ॥ ११—१५ ॥

नागपत्न्यश्चेति ॥ हारिहारेत्यादिना हारादिभूषितत्वोक्तेः, व्यक्तवाक्योक्तेश्च तासां मनुष्यसमपूर्वकायत्वं विज्ञेयम् ॥ १६—१७ ॥ तमिति ॥ लालसाः—व्याकुलाः । पश्यतेति चुक्रुशुः ॥ १८—२० ॥

हाहेति ॥ विह्वलः—परवशः ॥ २१ ॥

नन्दगोप इति ॥ कृष्णदर्शनलालसाः । अत्र लालसपदमौत्सुक्यपरम् ॥ २२—२४ ॥

गोप्य इति ॥ कातराः—अधीराः ॥ २५—२८ ॥

यत्र नेन्दीवरश्यामकायकान्तिरयं हरिः । तेनापि मातुर्वासेन रतिरस्तीति विस्मयः ॥ २९ ॥
उत्फुल्लपंकजदलस्पष्टकान्तिविलोचनम् । अपश्यन्तो हरिं दीनाः कथं गोष्ठे भविष्यथ ॥ ३० ॥
(अत्यर्थ) अत्यन्त मधुरालापहृताशेषमनोरथम् । न विना पुण्डरीकाक्षं यास्यामो नन्दगोकुलम् ॥३१॥
भोगेनावेष्टितस्यापि सर्पराजस्य पश्यत । स्मितशोभि मुखं गोप्यः कृष्णस्यास्मद्विलोकने ॥ ३२ ॥

श्रीपराशरः—

इति गोपीवचः श्रुत्वा रौहिणेयो महाबलः । गोपांश्च त्रासविधुरान्विलोक्य स्तिमितेक्षणान् ॥३३॥
नन्दं च दीनमत्यर्थं न्यस्तदृष्टिं सुतानने । मूर्च्छाकुलां यशोदां च कृष्णमाहात्मसंज्ञया ॥ ३४ ॥
किमिदं देवदेवेश भावोऽयं मानुषस्त्वया । व्यज्यतेऽत्यन्तमात्मानं किमनन्तं न वेत्सि यत् ॥३५॥
त्वमेव जगतो नाभिरराणामिव संश्रयः । कर्ताऽपहर्ता पाता च त्रैलोक्यं त्वं त्रयीमयः ॥ ३६ ॥
सेन्द्रै रुद्राग्निवसुभिरादित्यैर्मरुदश्विभिः । चिन्त्यसे त्वमचिन्त्यात्मन् समस्तैश्चैव योगिभिः ॥३७॥
जगत्यर्थं जगन्नाथ भारावतरणेच्छया । अवतीर्णोऽसि मर्त्येषु तवांशश्चाहमग्रजः ॥ ३८ ॥
मनुष्यलीलां भगवन् भजता भवता सुरः । विडम्बयन्तस्त्वल्लीलां सर्व एव सहासते ॥ ३९ ॥
अवतार्य भवान्पूर्वं गोकुले तु सुराङ्गनाः । क्रीडार्थमात्मनः पश्चादवतीर्णोऽसि शाश्वत ॥ ४० ॥
अत्रावतीर्णयोः कृष्ण गोपा एव हि बान्धवाः । गोप्यश्च सीदतः कस्मादेतान्बन्धूनुपेक्षसे ॥ ४१ ॥
दर्शितो मानुषो भावो दर्शितं बालचापलम् । तदयं दम्यतां कृष्ण दुष्टात्मा दशनायुधः ॥ ४२ ॥

---

यत्रेति ॥ यत्र न हरिः तेनापि मातुर्वासेन—जननीगृहेणापि रतिरस्ति चेद्विस्मयः । कृष्णरहिते मातृगृहेऽपि प्रीतिर्नास्तीत्यर्थः ॥ २९ ॥

उत्फुल्लेति ॥ कथं भविष्यथ—कथमपि भवितुं न शक्ष्यथेत्यर्थः ॥ ३० ॥

अत्यर्थेति ॥ अत्यर्थम्—अत्यन्तम् ॥ ३१ ॥

भोगेनेति ॥ अस्मद्विलोकने सतीति शेषः ॥ ३२ ॥

इतीति ॥ त्रासविधुरान्—त्रासनिश्चेष्टान् ॥ ३३ ॥

नन्दं चेति ॥ आत्मसंज्ञया—अनन्यवेद्येन संकेतेन ॥ ३४ ॥

किमिदमिति ॥ किं त्वमात्मानमनन्तम्—ईश्वरं यन्न वेत्सि, तेन सर्पदष्टत्वमूर्च्छादिरयं मानुषो भावः अत्यन्तं व्यज्यते, किमिदमित्यन्वयः ॥ ३५ ॥

त्वमेवेति ॥ अराणां नाभिरिव त्वमस्य जगतः संश्रयः ॥ ३६,३७ ॥

जगत्यर्थमिति ॥ तवांशः—तव विभूतिः ॥ ३८ ॥

मनुष्येत्यादि ॥ मनुष्यदेहग्रहणात्मिकां लीलां भजता त्वया हेतुभूतेन सुराश्च गोपेषु जातास्त्वल्लीलां विडंबयन्तः—अनुकुर्वन्त आसते ॥ ३९–४२ ॥

श्रीपराशरः—

इति संस्मारितः कृष्णः स्मितभिन्नोष्ठसंपुटः । आस्फोट्य मोचयामास स्वदेहं भोगिबंधनात् ॥४३॥

आनम्य चापि हस्ताभ्यामुभाभ्यां मध्यमं शिरः । आरुह्याभुग्नशिरसः प्रणनर्तोरुविक्रमः ॥ ४४ ॥

प्राणाः फणेऽभवंश्चास्य कृष्णस्यांघ्रिनिकुट्टनैः । यत्रोन्नतिं च कुरुते ननामास्य ततश्शिरः ॥ ४५ ॥

मूर्च्छामुपाययौ भ्रान्त्या नागः कृष्णस्य रेचकैः । दण्डपातनिपातेन ववाम रुधिरं बहु ॥ ४६ ॥

तं विभुग्नशिरोग्रीवमास्येभ्यस्स्रुतशोणितम् । विलोक्य करुणं जग्मुस्तत्पत्न्यो मधुसूदनम् ॥ ४७ ॥

नागपत्न्यः—

ज्ञातोऽसि देवदेवेश सर्वज्ञस्त्वमनुत्तमः । परं ज्योतिरचिन्त्यं यत्तदंशः परमेश्वरः ॥ ४८ ॥

न समर्थाः सुरास्स्तोतुं यमनन्यभवं विभुम् । स्वरूपवर्णनं तस्य कथं योषित्करिष्यति ॥ ४९ ॥

यस्याखिलमहीव्योमजलाग्निपवनात्मकम् । ब्रह्माण्डमल्पकाल्पांशः स्तोष्यामस्तं कथं वयम् ॥५०॥

यमतो न विदुर्नित्यं यत्स्वरूपं हि योगिनः । परमार्थमणोरल्पं स्थूलात्स्थूलं नताः स्म तम् ॥५१॥

न यस्य जन्मने धाता यस्य चान्ताय नान्तकः ।
स्थितिकर्ता न चान्योऽस्ति यस्य तस्मै नमस्सदा ॥ ५२ ॥

कोपः स्वल्पोऽपि ते नास्ति स्थितिपालनमेव ते । कारणं कालियस्यास्य दमने श्रूयतां वचः ॥ ५३ ॥

स्त्रियोऽनुकम्प्यास्साधूनां मूढा दीनाश्च जन्तवः । यतस्ततोऽस्य दीनस्य क्षम्यतां क्षमतां वर ॥५४॥

समस्तजगदाधारो भवानल्पबलः फणी । त्वत्पादपीडितो जह्यान्मुहूर्तार्धेन जीवितम् ॥ ५५ ॥

क्व पन्नगोऽल्पवीर्योऽयं क्व भवान्भुवनाश्रयः । प्रीतिद्वेषौ समोत्कृष्टगोचरौ भवतोऽव्यय ॥ ५६ ॥

ततः कुरु जगत्स्वामिन्प्रसादमवसीदतः । प्राणांस्त्यजति नागोऽयं भर्तृभिक्षा प्रदीयताम् ॥ ५७ ॥

भुवनेश जगन्नाथ महापुरुष पूर्वज । प्राणांस्त्यजति नागोऽयं भर्तृभिक्षां प्रयच्छ नः ॥ ५८ ॥

वेदान्तवेद्य देवेश दुष्टदैत्यनिबर्हण । प्राणांस्त्यजति नागोऽयं भर्तृभिक्षा प्रदीयताम् ॥ ५९ ॥

श्रीपराशरः—

इत्युक्ते ताभिराश्वस्य क्लान्तदेहोऽपि पन्नगः । प्रसीद देवदेवेति प्राह वाक्यं शनैः शनैः ॥ ६० ॥

---

इतीति ॥ स्मितभिन्नेति । मायोद्घाटनात् स्मितोदयः ॥ ४३–४४ ॥

प्राणा इति ॥ निकुट्टनैः—प्रहारैः ॥ ४५ ॥

मूर्च्छामिति ॥ भ्रान्तिरेचकदण्डपाताः नृत्तोक्ताः पादन्यासविशेषाः । यथाह भरतः—* अन्तर्भ्रमरिका ज्ञेया भ्रमरी बाह्यपूर्विका । अलग्नभ्रमरी च स्यादुचितभ्रमरी तथा ॥ चित्रभ्रमरिका चैव चक्रभ्रमरिका तथा । तिर्यग्भ्रमरिका चेति भ्रमास्सप्त प्रकीर्त्तिताः ॥ पार्श्वात्पार्श्वं तु गमनं स्खलितैश्चलितैः पदैः । विविधैश्चैव पादैश्च पादरेचक उच्यते ॥ पार्ष्णी यस्य स्थितौ भूमावूर्ध्वमग्रतलं तथा । अङ्गुल्यश्चाञ्चितास्सर्वास्सपादस्त्वञ्चितस्स्मृतः ॥ पृष्ठतो ह्यञ्चितं कृत्वा पादमग्रतलेन तु । द्रुतं निपातयेद्भूमौ चादिनूपुरपादिका ॥ चरणं नूपुरं कृत्वा पुरतः संप्रसारयेत् । क्षिप्रमाविद्धकरणं दण्डपाता तु सा स्मृता ॥ इति ॥ ४६–५२ ॥

कोप इति ॥ स्थितिपालनं—लोकमर्यादास्थापनम् । श्रूयतामथ—अथ अस्मद्वचनं श्रूयताम् ॥५३-५५॥

क्वेति ॥ समोत्कृष्टयोः प्रीतिर्द्वेषो वा कार्यः । न त्वीदृशे निकृष्ट इति भावः ॥ ५६–६० ॥

कालियः—

तवाष्टगुणमैश्वर्यं नाथ स्वाभाविकं परम् । निरस्तातिशयं यस्य तस्य स्तोष्यामि किन्न्वहम् ॥ ६१ ॥
त्वं परस्त्वं परस्याद्यः परं त्वत्तः परात्मकम् । परस्मात्परमो यस्त्वं तस्य स्तोष्यामि किन्न्वहम् ॥६२॥
यस्माद्ब्रह्मा च रुद्रश्च चन्द्रेन्द्रमरुदश्विनः । वसवश्च सहादित्यैस्तस्य स्तोष्यामि किन्न्वहम् ॥ ६३ ॥
एकावयवसूक्ष्मांशो यस्यैतदखिलं जगत् । कल्पनावयवस्यांशस्तस्य स्तोष्यामि किन्न्वहम् ॥ ६४ ॥
सदसद्रूपिणो यस्य ब्रह्माद्यास्त्रिदशेश्वराः । परमार्थं न जानन्ति तस्य स्तोष्यामि किन्न्वहम् ॥ ६५ ॥
ब्रह्माद्यैरर्च्यते यस्तु गन्धपुष्पानुलेपनैः । नन्दनादिसमुद्भूतैस्सोऽर्च्यते वा कथं मया ॥ ६६ ॥
यस्यावताररूपाणि देवराजस्सदाऽर्चति । न वेत्ति परमं रूपं सोऽर्च्यते वा कथं मया ॥ ६७ ॥
विषयेभ्यस्समावृत्य सर्वाक्षाणि च योगिनः । यमर्चयन्ति ध्यानेन सोऽर्च्यते वा कथं मया ॥६८॥
हृदि संकल्प्य यद्रूपं ध्यानेनार्चन्ति योगिनः । भावपुष्पादिना नाथः सोऽर्च्यते वा कथं मया ॥६९॥
सोऽहं ते देवदेवेश नार्चनादौ स्तुतौ न च । सामर्थ्यवान् कृपामात्रमनोवृत्तिः प्रसीद मे ॥ ७० ॥
सर्पजातिरियं क्रूरा यस्यां जातोऽस्मि केशव । तत्स्वभावोऽयमत्रास्ति नापराधो ममाच्युत ॥७१॥
सृज्यते भवता सर्वं तथा संह्रियते जगत् । जातिरूपस्वभावाश्च सृज्यन्ते सृजता त्वया ॥ ७२ ॥
यथाऽहं भवता सृष्टो जात्या रूपेण चेश्वर । स्वभावेन च साधुत्वं तथेदं चेष्टितं मया ॥ ७३ ॥
यद्यन्यथा प्रवर्तेयं देवदेव ततो मयि । न्याय्यो दण्डनिपातो वै तवैव वचनं यथा ॥ ७४ ॥

---

तवेत्यादि ॥ किन्नु स्तोष्यामीति भावः । अष्टौ गुणा यस्य तदष्टगुणमैश्वर्यम् । ते चाणिमादयः । स्वाभाविकत्वादिविशेषणैस्सनकादिव्यावृत्तिः ॥ ६१ ॥

त्वं पर इत्यादि ॥ प्रकृतेः परः पुमांस्त्वम् । परस्याद्यः परः मुक्तः स त्वम् । परं त्वत्तः परात्मकम्—इन्द्रियादेरुत्कृष्टं प्रधानमपि त्वत्तो भवति । परस्मात्परमो यस्त्वम्—उक्ताद्बद्धमुक्तप्रधानरूपात्परस्मात् परमो यः सः त्वम्; तस्य तव किं स्तोष्यामीति । परं त्वत्तः परात्मकेति पाठे, हे परात्मक—उत्कृष्टस्वरूप । त्वत्तः परं प्रधानं प्रवर्तते । परस्याद्यः मुक्तः स त्वमिति शेषः । त्वं परस्त्वं परस्याद्यः परं त्वत्तः परात्मकम् इति च पाठः ॥ ६२, ६३ ॥

एकावयवेति ॥ कल्पनावयवात्मा—संकल्पसिद्धावयवात्मा । इच्छागृहीताभिमतोरुदेह इति यावत् ॥ ६४ ॥ सदसद्रूपिण इति ॥ सदसद्रूपिणः—मूर्तामूर्तरूपवतः ॥ ६५–६८ ॥

हृदीत्यादि ॥ यद्रूपं ध्यानेन संकल्प्य । भावमयानि पुष्पाणि—अहिंसादीनि, * अहिंसा प्रथमं पुष्पं पुष्पमिन्द्रियनिग्रहः । सर्वभूतदया पुष्पं क्षमा पुष्पं विशिष्यते ॥ शमः पुष्पं दमः पुष्पं ध्यानपुष्पं च सप्तमम् । सत्यं चैवाष्टमं पुष्पमेभिस्तुष्यति केशवः ॥ इति वचनात् ॥ ६९–७४ ॥

तथाऽप्ययं जगत्स्वामिन्दण्डं पातितवान्मयि। स सोढव्यो मया दण्डस्त्वत्तो मामेत्ययं वरः ॥७५॥
हतवीर्यो हतविषो दमितोऽहं त्वयाऽच्युत। जीवितं दीयतामेकमाज्ञापय करोमि किम् ॥ ७६ ॥

श्रीभगवानुवाच :—

नात्र स्थेयं त्वया सर्प कदाचिद्यमुनाजले। सपुत्रपरिवारस्त्वं समुद्रसलिलं व्रज ॥ ७७ ॥
मत्पदानि च ते सर्प दृष्ट्वा मूर्धनि सागरे। गरुडः पन्नगरिपुस्त्वयि न प्रहरिष्यति ॥ ७८ ॥

श्रीपराशरः—

इत्युक्त्वा सर्पराजं तं मुमोच भगवान्हरिः। प्रणम्य सोऽपि कृष्णाय जगाम पयसां निधिम् ॥ ७९ ॥
पश्यतां सर्वभूतानां सभृत्यसुतबान्धवः। समस्तभार्यासहितः परित्यज्य स्वकं ह्रदम् ॥ ८० ॥
गते सर्पे परिष्वज्य मृतं पुनरिवागतम्। गोपा मूर्धनि हार्देन सिषिचुर्नेत्रजैर्जलैः ॥ ८१ ॥
कृष्णमक्लिष्टकर्माणमन्ये विस्मितचेतसः। तुष्टुवुर्मुदिता गोपा दृष्ट्वा शिवजलां नदीम् ॥ ८२ ॥
गीयमानः स गोपीभिश्चरितैस्साधुचेष्टितैः। संस्तूयमानो गोपैश्च कृष्णो व्रजमुपागमत् ॥ ८३ ॥

इति श्रीविष्णुपुराणे पञ्चमेंऽशे सप्तमोऽध्यायः ॥ ७ ॥

## अथाष्टमोऽध्यायः

श्रीपराशरः—

गाः पालयन्तौ च पुनः सहितौ बलकेशवौ। भ्रममाणौ वने तस्मिन् रम्यं तालवनं गतौ ॥ १ ॥
तत्तु तालवनं दिव्यं धेनुको नाम दानवः। मृगमांसकृताहारः सदाऽध्यास्ते खराकृतिः ॥ २ ॥
तत्तु तालवनं पक्वफलसंपत्समन्वितम्। दृष्ट्वा स्पृहान्विता गोपाः फलादानेऽब्रुवन्वचः ॥ ३ ॥

गोपाः—हे राम हे कृष्ण सदा धेनुकेनैष रक्ष्यते। भूप्रदेशो यतस्तस्मात्पक्वानीमानि सन्ति वै ॥ ४ ॥
फलानि पश्य तालानां गन्धामोदितदिंशि वै। वयमेतान्यभीप्सामः पात्यन्तां यदि रोचते ॥ ५ ॥

श्रीपराशरः—इति गोपकुमाराणां श्रुत्वा संकर्षणो वचः। एतत्कर्तव्यमित्युक्त्वा पातयामास तानि वै।
कृष्णश्च पातयामास भुवि तानि फलानि वै ॥ ६ ॥
फलानां पततां शब्दमाकर्ण्य सुदुरासदः। आजगाम स दुष्टात्मा कोपाद्दैतेयगर्दभः ॥ ७ ॥
पद्भ्यामुभाभ्यां स तदा पश्चिमाभ्यां बलं बली। जघानोरसि ताभ्यां च स च तेनाभ्यगृह्यत ॥८॥

---

तथेति ॥ स सोढव्य इति। अयं दण्डरूपो वरस्त्वत्तो मामेति, मया सोढव्यः। स श्लाघ्योऽयं वरो दण्डस्त्वत्तो मे नान्यतो वरः, इति च पाठः ॥ ७५–८० ॥ गत इति ॥ गोपाः—नन्दाद्या वृद्धाः ॥ ८१ ॥

कृष्णमिति ॥ अन्ये—श्रीदामादिसवयसः ॥ ८२ ॥ गीयमान इति ॥ चरितैः हेतुभिः ॥ ८३ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमेंऽशे सप्तमोऽध्यायः ॥ ७ ॥

## अथ अष्टमोऽध्यायः

॥ १–७ ॥ पद्भ्यामिति ॥ ताभ्यां—तयोरित्यर्थः ॥ ८ ॥

गृहीत्वा भ्रामयामास सोऽम्बरे गतजीवितम् । तस्मिन्नेव स चिक्षेप वेगेन तृणराजनि ॥ ९ ॥
ततः फलान्यनेकानि तालाग्रान्निपतन्खरः । पृथिव्यां पातयामास महावातो घनानिव ॥ १० ॥
अन्यानथ सजातीयानागतान्दैत्यगर्दभान् । कृष्णश्चिक्षेप तालाग्रे बलभद्रश्च लीलया ॥ ११ ॥
क्षणेनालंकृता पृथ्वी पक्वैस्तालफलैस्तदा । दैत्यगर्दभदेहैश्च मैत्रेय शुशुभेऽधिकम् ॥ १२ ॥
ततो गावो निराबाधास्तस्मिंस्तालवने द्विज । नवशष्पं सुखं चेरुर्यन्न भुक्तमभूत्पुरा ॥ १३ ॥

इति श्रीविष्णुपुराणे पंचमेंशेऽष्टमोऽध्यायः ॥ ८ ॥

## अथ नवमोऽध्यायः

श्रीपराशर :—

तस्मिन्रासभदैतेये सानुगे विनिपातिते । सौम्यं तद्गोपगोपीनां रम्यं तालवनं बभौ ॥ १ ॥
ततस्तौ जातहर्षौ तु वसुदेवसुतावुभौ । हत्वा धेनुकदैतेयं भाण्डीरं वटमागतौ ॥ २ ॥
क्ष्वेलमानौ प्रगायन्तौ विचिन्वन्तौ च पादपान् । चारयन्तौ च गा दूरे व्याहरन्तौ च नामभिः ॥३॥
निर्योगपाशस्कन्धौ तौ वनमालाविभूषितौ । शुशुभाते महात्मानौ बालशृङ्गाविवर्षभौ ॥ ४ ॥
सुवर्णाञ्जनचूर्णाभ्यां तौ तदा रूषिताम्बरौ । महेन्द्रायुधसंयुक्तौ श्वेतकृष्णाविवाम्बुदौ ॥ ५ ॥
चेरतुर्लोकसिद्धाभिः क्रीडाभिरितरेतरम् । समस्तलोकनाथानां नाथभूतौ भुवं गतौ ॥ ६ ॥
मनुष्यधर्माभिरतौ मानयन्तौ मनुष्यताम् । तज्जातिगुणयुक्ताभिः क्रीडाभिश्चेरतुर्वनम् ॥ ७ ॥
ततस्त्वान्दोलिकाभिश्च नियुद्धैश्च महाबलौ । व्यायामं चक्रतुस्तत्र क्षेपणीयैस्तथाऽश्मभिः ॥ ८ ॥
तल्लिप्सुरसुरस्तत्र ह्युभयो रममाणयोः । आजगाम प्रलंबाख्यो गोपवेषतिरोहितः ॥ ९ ॥
सोऽवगाहत निश्शङ्कस्तेषां मध्यममानुषः । मानुषं वपुरास्थाय प्रलंबो दानवोत्तमः ॥ १० ॥

---

गृहीत्वेति ॥ तं गृहीत्वा तृणराजनि—ताले ॥ ९–१२ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमेंशे अष्टमोऽध्यायः ॥ ८ ॥

## अथ नवमोऽध्यायः

॥ १,२ ॥ क्ष्वेलमानाविति ॥ क्ष्वेलन्तौ—सिंहवन्नादं कुर्वन्तौ । विचिन्वन्तौ—वासयोग्यान् देशानन्विष्छन्तौ ॥ ३ ॥ निर्योगपाश इति ॥ निर्योगपाशः—नियमनरज्जुः ॥ ४ ॥

सुवर्णेति ॥ रूषिताम्बरौ—रञ्जितवस्त्रौ । महेन्द्रायुधसंकाशावित्यम्बुदविशेषणम् । महेंद्रायुधेन प्रकाशमानावित्यर्थः ॥ ५–७ ॥

तत इति ॥ आन्दोलिकाभिः—द्वयोर्गोपयोर्हस्तद्वयमयान्दोलिकाभिः । नियुद्धैः—बाहुयुद्धैः । व्यायामं—श्रमम् ॥ ८ ॥ तल्लिप्सुरिति ॥ तल्लिप्सुः—तौ जिघृक्षुः ॥ ९, १० ॥

तयोश्छिद्रान्तरप्रेप्सुरविषह्यममन्यत । कृष्णं ततो रौहिणेयं हन्तुं चक्रे मनोरथम् ॥ ११ ॥
हरिणाक्रीडनं नाम बालक्रीडनकं ततः । प्रकुर्वन्तो हि ते सर्वे द्वौद्वौ युगपदुत्थितौ ॥ १२ ॥
श्रीदाम्ना सह गोविन्दः प्रलंबेन तथा बलः । गोपालैरपरैश्चान्ये गोपालाः पुप्लुवुस्ततः ॥ १३ ॥
श्रीदामानं ततः कृष्णः प्रलंबं रोहिणीसुतः । जितवान्कृष्णपक्षीयैर्गोपैरन्ये पराजिताः ॥ १४ ॥
ते वाहयन्तस्त्वन्योन्यं भाण्डीरं वटमेत्य वै । पुनर्निववृतुस्सर्वे येये तत्र पराजिताः ॥ १५ ॥
संकर्षणं तु स्कन्धेन शीघ्रमुत्क्षिप्य दानवः । नभस्स्थलं जगामाशु सचन्द्र इव वारिदः ॥ १६ ॥
असहन्रौहिणेयस्य स भारं दानवोत्तमः । ववृधे सुमहाकायः प्रावृषीव बलाहकः ॥ १७ ॥
संकर्षणस्तु तं दृष्ट्वा दग्धशैलोपमाकृतिम् । स्रग्दामलम्बाभरणं मकुटाटोपमस्तकम् ॥ १८ ॥
रौद्रं शकटचक्राक्षं पादन्यासचलत्क्षितिम् । अभीतमनसा तेन रक्षसा रोहिणीसुतः ।
ह्रियमाणस्ततः कृष्णमिदं वचनमब्रवीत् ॥ १९ ॥
कृष्ण कृष्ण ह्रियाम्येष पर्वतोदग्रमूर्तिना । केनापि पश्य दैत्येन गोपालच्छद्मरूपिणा ॥ २० ॥
यदत्र सांप्रतं कार्यं मया मधुनिषूदन । तत्कथ्यतां प्रयात्येष दुरात्माऽतित्वरान्वितः ॥ २१ ॥

श्रीपराशरः—तमाह रामं गोविन्दस्स्मितभिन्नोष्ठसंपुटः । महात्मा रौहिणेयस्य बलवीर्यप्रमाणवित् ॥२२॥

श्रीकृष्णः—किमयं मानुषो भावो व्यक्तमेवावलम्ब्यते । सर्वात्मन् सर्वगुह्यानां गुह्य गुह्यात्मना त्वया ॥
स्मराशेषजगद्बीज कारणं कारणाग्रज । आत्मानमेकं तद्वच्च जगत्येकार्णवे च यत् ॥ २४ ॥
किं न वेत्सि यथाहं च त्वं चैकं कारणं भुवः । भारावतारणार्थाय मर्त्यलोकमुपागतौ ॥ २५ ॥

नभश्शिरस्तेऽम्बुवहाश्च केशाः पादौ क्षितिर्वक्त्रमनन्तवह्निः ।
सोमो मनस्ते श्वसितं समीरणो दिशश्चतस्रोऽव्यय बाहवस्ते ॥ २६ ॥
सहस्रवक्त्रो भगवान्महात्मा सहस्रहस्ताङ्घ्रिशरीरभेदः ।
सहस्रपद्मोद्भवयोनिराद्यस्सहस्रशस्त्वां मुनयो गृणन्ति ॥ २७ ॥
दिव्यं हि रूपं तव वेत्ति नान्यो देवैरशेषैरवतारूपम् ।
तदर्च्यते वेत्सि न किं यदन्ते त्वय्येव विश्वं लयमभ्युपैति ॥ २८ ॥
त्वया धृतेयं धरणी बिभर्ति चराचरं विश्वमनन्तमूर्ते ।
कृतादिभेदैरज कालरूपो निमेषपूर्वो जगदेतदत्सि ॥ २९ ॥

---

तयोरिति ॥ छिद्रान्तरप्रेप्सुः—प्रमादावसरं प्रतीक्षमाणः ॥ ११ ॥

हरिणेति ॥ हरिणाक्रीडनम्—हरिणवदाक्रीडनम्, उत्प्लुतिः । द्वयोर्युगपदुत्प्लुतयोरलसः जितः, पटुर्जेता । तत्र जितो जेतारं वहन् भाण्डीरं गत्वा पुनरुत्प्लुतिस्थानं नयेदिति पणबन्धः ॥ १२ ॥

श्रीदाम्नेति ॥ तत्र प्रलंबः श्रीदामपक्षीयः ॥ १३–१९ ॥

कृष्णकृष्णेति ॥ ह्रियामि—ह्रिये । गोपालच्छद्मरूपिणा—कृत्रिमगोपालरूपिणा ॥ २० ॥

यदत्रेति ॥ अत्र—दानवे ॥ २१–२३ ॥

स्मरेत्यादि ॥ जगद्बीज—कारणानामप्यादिभूत । जगति–जगदवस्थायाम्, तद्वदेकार्णवे च–एकार्णवावस्थायां च यत्तदेकं कारणमात्मानं किं न वेत्सि ॥ २४–२९ ॥

अत्तं यथा बाडबवह्निनाऽम्बु हिमस्वरूपं परिगृह्य कास्तम् ।
हिमाचले भानुमतोंऽशुसङ्गाज्जलत्वमभ्येति पुनस्तदेव ॥ ३० ॥

एवं त्वया संहरणेऽत्तमेतज्जगत्समस्तं त्वदधीनकं पुनः ।
तवैव सर्गाय समुद्यतस्य जगत्त्वमभ्येत्यनुकल्पमीश ॥ ३१ ॥

भवानहं च विश्वात्मन्नेकमेव च कारणम् । जगतोऽस्य जगत्यर्थे भेदेनावां व्यवस्थितौ ॥ ३२ ॥

तत्स्मर्यताममेयात्मंस्त्वयाऽऽत्मा जहि दानवम् । मानुष्यमेवावलम्ब्य बन्धूनां क्रियतां हितम् ॥३३॥

श्रीपराशर :—

इति संस्मारितो विप्र कृष्णेन सुमहात्मना । विहस्य पीडयामास प्रलंबं बलवान्बलः ॥ ३४ ॥

मुष्टिना सोऽहनन्मूर्ध्नि कोपसंरक्तलोचनः । तेन चास्य प्रहारेण बहिर्याते विलोचने ॥ ३५ ॥

स निष्कासितमस्तिष्को मुखाच्छोणितमुद्वमन् । निपपात महीपृष्ठे दैत्यवर्यो ममार च ॥ ३६ ॥

प्रलंबं निहतं दृष्ट्वा बलेनाद्भुतकर्मणा । प्रहृष्टास्तुष्टुवुर्गोपास्साधुसाध्विति चाब्रुवन् ॥ ३७ ॥

संस्तूयमानो गोपैस्तु रामो दैत्ये निपातिते । प्रलंबे सह कृष्णेन पुनर्गोकुलमाययौ ॥ ३८ ॥

इति श्रीविष्णुपुराणे पञ्चमेंशे नवमोऽध्यायः ॥ ९ ॥

---

अत्तमिति ॥ अत्तं—चर्वितम् । कास्तं—छर्दितम् । यद्वा, केन—वायुना, अस्तं—वडवाग्निगतत्वेनार्करश्मिनाडीमयेन क्षिप्तम् । अयमर्थः—सवायुना वडवाग्निना पीतं समुद्राम्बु घनीभूय हिमतां गतं तेन वायुनाडीमयार्करश्मिना सोमद्वारा हिमवति हिमाद्रौ क्षिप्तं ग्रीष्मे पुनरादित्यांशुसंयोगाद्विलीनं सत् यथा जलतां यातीति । अयमेवार्थः सरित्समुद्रेत्यादिना पूर्वमुक्तः ॥ ३० ॥

एवमित्यादि ॥ संहरणात्तम्—संहरणकाले अत्तम् । तवैव सर्गाय समुद्यतस्य—त्वय्येव सर्गाय समुद्यते सति ॥ ३१,३२ ॥

तदिति ॥ मानुष्यमेवेति । स्तुत्युद्बोधितदिव्यशक्तिरपि मानुष्यमवलम्ब्यैव-मनुष्यमूर्त्यैव दानवं जहि ॥ ३३ ॥ इतीति ॥ विहस्येति उद्बोधितस्वरूपानुसंधानचिह्नम् ॥ ३४,३५ ॥

स इति ॥ निष्कासितमस्तिष्कः—निर्गमितमस्तकस्नेहः ॥ ३६–३८ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमेंशे नवमोऽध्यायः ॥ ९ ॥

## अथ दशमोऽध्यायः

पराशरः—

तयोर्विहरतोरेवं रामकेशवयोर्व्रजे । प्रावृड् व्यतीता विकसत्सरोजा चाभवच्छरत् ॥ १ ॥
अवापुस्तापमत्यर्थं शफर्यः पल्वलोदके । पुत्रक्षेत्रादिसक्तेन ममत्वेन यथा गृही ॥ २ ॥
मयूरा मौनमातस्थुः परित्यक्तमदा वने । असारतां परिज्ञाय संसारस्येव योगिनः ॥ ३ ॥
उत्सृज्य जलसर्वस्वं विमलास्सितमूर्तयः । तत्यजुश्चाम्बरं मेघा गृहं विज्ञानिनो यथा ॥ ४ ॥
शरत्सूर्यांशुतप्तानि ययुश्शोषं सरांसि च । बह्वालम्बममत्वेन हृदयानीव देहिनाम् ॥ ५ ॥
कुमुदैश्शरदम्भांसि योग्यतालक्षणं ययुः । अवबोधैर्मनांसीव समत्वममलात्मनाम् ॥ ६ ॥
तारकाविमले व्योम्नि रराजाखण्डमण्डनः । चन्द्रश्चरमदेहात्मा योगी साधुकुले यथा ॥ ७ ॥
शनकैश्शनकैस्तीरं तत्यजुश्च जलाशयाः । ममत्वं क्षेत्रपुत्रादिरूढमुच्चैर्यथा बुधाः ॥ ८ ॥
पूर्वं त्यक्तैस्सरोंभोभिर्हंसा योगं पुनर्ययुः । क्लेशैः कुयोगिनो शेषैरन्तरायहता इव ॥ ९ ॥
निभृतोऽभवदत्यर्थं समुद्रस्तिमितोदकः । क्रमावाप्तमहायोगो निश्चलात्मा यथा यतिः ॥ १० ॥
सर्वत्रातिप्रसन्नानि सलिलानि तथाऽभवन् । ज्ञाते सर्वगते विष्णौ मनांसीव सुमेधसाम् ॥ ११ ॥
बभूव निर्मलं व्योम शरदा ध्वस्ततोयदम् । योगाग्निदग्धक्लेशौघं योगिनामिव मानसम् ॥ १२ ॥
सूर्यांशुजनितं तापं निन्ये तारापतिश्शमम् । अहंमानोद्भवं दुःखं विवेकस्सुमहानिव ॥ १३ ॥
नभसोऽब्दं भुवः पङ्कं कालुष्यं चाम्भसश्शरत् । इन्द्रियाणीन्द्रियार्थेभ्यः प्रत्याहार इवाहरत् ॥१४॥

---

## अथ दशमोऽध्यायः

॥ १ ॥ अथ वर्ण्यमानशरद् दृष्टान्तव्याजेनात्मविद्यामाह——अवापुरित्यादिना ॥ अवापुरिति ॥ शफर्यः—द्मत्स्याः ॥ २ ॥

मयूरा इति ॥ मौनम्——अनुक्तिर्मुनिवृत्तिश्च ॥ ३ ॥

उत्सृज्येति ॥ जलसर्वस्वं——कृत्स्नं जलम्, अहंमानादिजडभावं च । मले—कार्ष्ण्यं, रागादि च ॥ तं—शुभ्रे शुद्धं च । विग्रहं—विरोधम् । * गृहं विज्ञानिनो यथा * इति च पाठः ॥ ४,५ ॥

कुमुदैरिति ॥ योग्यतालक्षणम्——योग्यतात्मकं संबन्धं ययुः । योग्यो हि निर्मलजलस्य सितकुमुदानां संबन्धः । अमलात्मनाम्—अमलमनसाम् ॥ ६ ॥

तारकेति ॥ तारकाविमले——तारकाभिर्विमले । अखण्डमण्डलः पौर्णमास्याम् । चरमदेहात्मा—चरमस्य आत्मा ॥ ७,८ ॥ पूर्वमिति ॥ अन्तरायाः —विघ्नाः ॥ ९ ॥

निभृत इति ॥ क्रमावाप्तमहायोगः——क्रमेण मन्त्रस्पर्शभावाभावाख्ययोगचतुष्कानन्तरं लब्धमहायोगः १० ॥ सर्वत्रेति ॥ सर्वत्र——देशे शत्रुमित्रादिषु च ॥ ११–१४ ॥

प्राणायाम इवाम्भोभिस्सरसां कृतपूरकैः । अभ्यस्यतेऽनुदिवसं रेचकाकुंभकादिभिः ॥ १५ ॥
विमलाम्बरनक्षत्रे काले चाभ्यागते व्रजे । ददर्शेन्द्रमहारम्भायोद्यतांस्तान्व्रजौकसः ॥ १६ ॥
कृष्णस्तानुत्सुकान्दृष्ट्वा गोपानुत्सवलालसान् । कौतूहलादिदं वाक्यं प्राह वृद्धान्महामतिः ॥१७॥
कोऽयं शक्रमहो नाम येन वो हर्ष आगतः । प्राह तं नन्दगोपश्च पृच्छन्तमतिसादरम् ॥ १८ ॥
नन्दगोपः——मेघानां पयसां चेशो देवराजश्शतक्रतुः । तेन संचोदिता मेघा वर्षन्त्यम्बुमयं रसम् ॥१९॥
तद्वृष्टिजनितं सस्यं वयमन्ये च देहिनः । वर्तयामोपयुञ्जानास्तर्पयामश्च देवताः ॥ २० ॥
क्षीरवत्य इमा गावो वत्सवत्यश्च निर्वृताः । तेन संवर्द्धितैस्सस्यैस्तुष्टाः पुष्टा भवन्ति वै ॥ २१ ॥
नासस्या नातृणा भूमिर्न बुभुक्षार्दितो जनः । दृश्यते यत्र दृश्यन्ते वृष्टिमन्तो बलाहकाः ॥ २२ ॥
भौममेतत्पयो दुग्धं गोभिः सूर्यस्य वारिदैः । पर्जन्यस्सर्वलोकस्योद्भवाय भुवि वर्षति ॥ २३ ॥
तस्मात्प्रावृषि राजानस्सर्वे शक्रं मुदा युताः । मखैस्सुरेशमर्चन्ति वयमन्ये च मानवाः ॥ २४ ॥
श्रीपराशरः——नन्दगोपस्य वचनं श्रुत्वेत्थं शक्रपूजने । रोषाय त्रिदशेन्द्रस्य प्राह दामोदरस्तदा ॥ २५॥
न वयं कृषिकर्तारो वाणिज्याजीविनो न च । गावोऽस्मद्दैवतं तात वयं वनचरा यतः ॥ २६ ॥
आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथा परा । विद्याचतुष्टयं चैतद्वार्तामात्रं शृणुष्व मे ॥ २७ ॥
कृषिर्वणिज्या तद्वच्च तृतीयं पशुपालनम् । विद्या ह्येका महाभाग वार्ता वृत्तित्रयाश्रया ॥ २८ ॥
कर्षकाणां कृषिर्वृत्तिः पण्यं विपणिजीविनाम् । अस्माकं गौः परा वृत्तिर्वार्ताभेदैरियं त्रिभिः ॥२९॥

---

प्राणायाम इत्यादि ॥ प्राणयामो हि कृतपूरकैर्योगिभिः आकुंभकरेचकप्रधानाभिर्वायुनयनक्रियाभिरभ्यस्यते, * पूरकः पूरणं वायोः कुंभकस्स्थापनं क्वचित् ॥ बहिर्निस्सरणं तस्य रेचकः परिकीर्तितः ॥ इति वचनात् । अयमर्थः सरसां योगिस्थानीयानां प्राणायामः सस्यार्थं कुल्यादिभिः पूर्वं कृतपूरकैः श्वासस्थानीयैरंभोभिः कारणैः पश्चात्स्थापनरेचकादिक्रियाभिरभ्यस्यते ॥ १५ ॥

विमलेति ॥ महः—उत्सवः ॥ १६ ॥

कृष्ण इति ॥ उत्सुकान्—उद्युक्तान् । उत्सवलालसान्—उत्सवकामान् ॥ १७–२२ ॥

भौममित्यादि ॥ पर्जन्यो हि भूगतं जलं सूर्यरश्मिभिरात्तं ततो मेघेषु दुग्धं तैर्जगद्भूत्यै वर्षति ॥२३॥

तस्मादिति ॥ प्रावृषि गतायामिति शेषः, शरदः प्रस्तुतत्वात् । यत्तु नभसि नभस्ये वा द्वादश्यामिन्द्रमहारंभ इति गर्गादिनोक्तं, तत्तु गोवर्धनोद्धारोत्तरकालविषयं कल्प्यम । एतद्धरिवंशे कृष्णं प्रतीन्द्रोक्तिः * ये चेमे वार्षिका मासाश्चत्वारो विहिता मम । एषां तेऽर्धं प्रदास्यामि शरत्कालं हि पश्चिमम् ॥ अद्यप्रभृति मासौ द्वौ ज्ञास्यन्ति मम मानवाः । वर्षार्धे च ध्वजे नित्यं ततः पूजामवाप्स्यसि ॥ इति । यत्तु हरिवंश एव * ततः प्रवर्तते पुण्या शरत्सुतोत्थिते त्वयि * इत्यादीन्द्रवाक्यं, तद्भगवत्प्रबोधानन्तरशरच्छेषप्रसङ्गार्थम् ॥२४–२८॥

कर्षकाणामिति ॥ अस्माकमित्यादि । गौरिति जात्यभिप्रायमेकवचनम् । सा परावृत्तिरिति पाठे परा वृत्तिर्या—पाशुपाल्यवृत्तिः । त्रिभिर्भेदैरुपलक्षितेयं वार्ता ॥ २९ ॥

विद्यया यो यया युक्तस्तस्य सा दैवतं महत् । सैव पूज्याऽर्चनीया च सैव तस्योपकारिका ॥३०॥
यो यस्य फलमश्नन्वै पूजयत्यपरं नरः । इह च प्रेत्य चैवासौ न तदाप्नोति शोभनम् ॥ ३१ ॥

कृष्यान्ता प्रथिता सीमा सीमान्तं च पुनर्वनम् ।
वनान्ता गिरयस्सर्वे सा चास्माकं परा गतिः ॥ ३२ ॥

न द्वारबंधावरणा न गृहक्षेत्रिणस्तथा । सुखिनस्त्वखिले लोके यथा वै चक्रचारिणः ॥ ३३ ॥
श्रूयन्ते गिरयश्चैव वनेऽस्मिन्कामरूपिणः । तत्तद्रूपं समास्थाय रमन्ते स्वेषु सानुषु ॥ ३४ ॥
यदा चैते प्रबाध्यन्ते तेषां ये काननौकसः । तदा सिंहादिरूपैस्तान्घातयन्ति महीधराः ॥ ३५ ॥
गिरियज्ञस्त्वयं तस्माद्गोयज्ञश्च प्रवर्त्यताम् । किमस्माकं महेन्द्रेण गावश्शैलाश्च देवताः ॥ ३६ ॥
मन्त्रयज्ञपरा विप्रास्सीरयज्ञाश्च कर्षकाः । गिरिगोयज्ञशीलाश्च वयमद्रिवनाश्रयाः ॥ ३७ ॥
तस्माद्गोवर्धनश्शैलो भवद्भिर्विविधार्हणैः । अर्च्यतां पूज्यतां मेध्यान्पशून्हत्वा विधानतः ॥ ३८ ॥
सर्वघोषस्य संदोहो गृह्यतां मा विचार्यताम् । भोज्यन्तां तेन वै विप्रास्तथा ये चाभिवाञ्छकाः ॥३९॥
तत्रार्चिते कृते होमे भोजितेषु द्विजातिषु । शरत्पुष्पकृतापीडाः परिगच्छन्तु गोगणाः ॥ ४० ॥
एतन्मम मतं गोपास्संप्रीत्या क्रियते यदि । ततः कृता भवेत्प्रीतिर्गवामद्रेस्तथा मम ॥ ४१ ॥

पराशरः—इति तस्य वचः श्रुत्वा नन्दाद्यास्ते व्रजौकसः ।
प्रीत्युत्फुल्लमुखा गोपास्साधुसाध्वित्यथाब्रुवन् ॥ ४२ ॥

शोभनं ते मतं वत्स यदेतद्भवतोदितम् । तत्करिष्यामहे सर्वं गिरियज्ञः प्रवर्त्यताम् ॥ ४३ ॥
तथा च कृतवन्तस्ते गिरियज्ञं व्रजौकसः । दधिपायसमांसाद्यैर्ददुश्शैलबलिं ततः ॥ ४४ ॥

द्विजांश्च भोजयामासुश्शतशोऽथ सहस्रशः ॥ ४५ ॥

गावश्शैलं ततश्चक्रुरर्चितास्ताः प्रदक्षिणम् । वृषभाश्चातिनर्दन्तस्सतोया जलदा इव ॥ ४६ ॥
गिरिमूर्धनि कृष्णोऽपि शैलोऽहमिति मूर्तिमान् । बुभुजेऽन्नं बहुतरं गोपवर्याहृतं द्विज ॥ ४७ ॥
स्वेनैव कृष्णो रूपेण गोपैस्सह गिरेश्शिरः । अधिरुह्यार्चयामास द्वितीयामात्मनस्तनुम् ॥ ४८ ॥

---

विद्ययेति ॥ पूज्या—मान्या ॥ ३०, ३१ ॥

कृष्यान्ता इति ॥ देशस्थितिरियम् । सेति गिरयः परामृश्यन्ते । गतिशब्दसमभिव्याहारात् स्त्रीत्वमे-व च । कृष्यन्ताः प्रथितास्सीमाः ते चास्माकं परा गतिरिति च पाठः ॥ ३२ ॥

न द्वारेति ॥ द्वारबंधैः—गृहैरावरणं येषां ते तथोक्ताः ग्रामस्थाः । यद्वा, आवरणगृहैकवासा-जः । गृहक्षेत्रिण इति गृहकेदारादिक्षेत्रसंचारनियताः कर्षकाः । अयमन्वयः—यथा गिरेर्बलेन तृणजलादि-देशेषु स्वैरं चक्रवता शकटेन चरन्तो वयं सुखिनः, न तथा द्वारबंधावरणाः—न तथा गृहक्षेत्रिण इति ॥—३६ ॥ मन्त्रयज्ञेति ॥ मन्त्रयज्ञपराः—मन्त्रप्रकाशितदेवतायज्ञपराः ॥ ३७, ३८ ॥

सर्वघोषस्येति ॥ संदोहः—सम्यग्दुग्धम् ॥ ३९–४८ ॥

अन्तर्धानं गते तस्मिन्गोपा लब्ध्वा ततो वरान् ।
कृत्वा गिरिमखं गोष्ठं निजमभ्याययुः पुनः ॥ ४९ ॥

इति श्रीविष्णुपुराणे पंचमेंशे दशमोऽध्यायः ॥ १० ॥

## अथैकादशोऽध्यायः



श्रीपराशरः—

मखे प्रतिहते शक्रो मैत्रेयातिरुषाऽन्वितः । संवर्तकं नाम गणं तोयदानामथाब्रवीत् ॥ १ ॥
भोभो मेघा निशम्यैतद्वचनं गदतो मम । आज्ञानन्तरमेवाशु क्रियतामविचारितम् ॥ २ ॥
नन्दगोपस्सुदुर्बुद्धिर्गोपैरन्यैस्सहायवान् । कृष्णाश्रयबलाध्मातो मखभङ्गमचीकरत् ॥ ३ ॥
आजीवो यः परस्तेषां गावस्तस्य च कारणम् । ता गावो वृष्टिपातेन पीड्यन्तां वचनान्मम ॥ ४ ॥
अहमप्यद्रिशृङ्गाभं तुङ्गमारुह्य वारणम् । साहाय्यं वः करिष्यामि वाय्वम्बूत्सर्गयोजितम् ॥ ५ ॥

श्रीपराशरः—

इत्याज्ञप्तास्ततस्तेन मुमुचुस्ते बलाहकाः । वातवर्षं महाभीममभावाय गवां द्विज ॥ ६ ॥
ततः क्षणेन पृथिवी ककुभोऽम्बरमेव च । एकं धारामहासारपूरणेनाभवन्मुने ॥ ७ ॥
विद्युल्लताकशाघातत्रस्तैरिव घनैर्घनम् । नादापूरितदिक्चक्रैर्धारासारमपात्यत ॥ ८ ॥
अन्धकारीकृते लोके वर्षद्भिरनिशं घनैः । अधश्चोर्ध्वं च तिर्यक् च जगदाप्यमिवाभवत् ॥ ९ ॥
गावस्तु तेन पतता वर्षवातेन वेगिना । धूताः प्राणाञ्जहुस्सन्नत्रिकसक्थिशिरोधराः ॥ १० ॥

---

अन्तर्धानमिति ॥ ततः—गोवर्धनात् ॥ ४९ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे दशमोऽध्यायः ॥ १० ॥

## अथैकादशोऽध्यायः



॥ १, २ ॥ नन्दगोप इति ॥ आध्मातः—उपबृंहितः ॥ ३ ॥

आजीव इति ॥ आजीवः—जीवनोपायः, गोपत्वस्य च कारणं यास्ता गावः ॥ ४ ॥

अहमिति ॥ वाय्वम्बुनोरुत्सर्गेण संबद्धम् ॥ ५, ६ ॥

तत इत्यादि ॥ धाराणाम् वेगवद्वर्षपूरणेन धरण्यादिकमेकमभवत् ॥ ७ ॥

विद्युल्लतेति ॥ घनं—निरंतरम् । धारासारमपात्यत । आर्षत्वाल्लिङ्गव्यत्ययः ॥ ८ ॥

अंधकारीकृत इति ॥ आप्यम्—अम्मयम् ॥ ९ ॥

गावस्त्विति ॥ धूताः—कंपिताः । त्रिकं * पृष्ठवंशाधरे त्रिकम् * इत्यमरः । सक्थि—ऊरुः ॥ १० ॥

क्रोडेन वत्सानाक्रम्य तस्थुरन्या महामुने । गावो विवत्साश्च कृता वारिपूरेण चापराः ॥ ११ ॥
वत्साश्च दीनवदना वातकम्पितकंधराः । त्राहित्राहीत्यल्पशब्दाः कृष्णमूचुरिवातुराः ॥ १२ ॥
ततस्तद्गोकुलं सर्वं गोगोपी(जन)गोपसंकुलम् । अतीवार्तं हरिर्दृष्ट्वा मैत्रेयाचिन्तयत्तदा ॥ १३ ॥
एतत्कृतं महेन्द्रेण मखभङ्गविरोधिना । तदेतदखिलं गोष्ठं त्रातव्यमधुना मया ॥ १४ ॥
इममद्रिमहं धैर्यादुत्पाट्योरुशिलाघनम् । धारयिष्यामि गोष्ठस्य पृथुच्छत्रमिवोपरि ॥ १५ ॥

पराशरः—

इति कृत्वा मतिं कृष्णो गोवर्धनमहीधरम् । उत्पाट्यैककरेणैव धारयामास लीलया ॥ १६ ॥
गोपांश्चाह हसञ्छौरिस्समुत्पाटितभूधरः । विशध्वमत्र त्वरिताः कृतं वर्षनिवारणम् ॥ १७ ॥
सुनिवातेषु देशेषु यथाजोषमिहास्यताम् । प्रविश्यतां न भेतव्यं गिरिपाताच्च निर्भयैः ॥ १८ ॥
इत्युक्तास्तेन ते गोपा विविशुर्गोधनैस्सह । शकटारोपितैर्भाण्डैर्गोप्यश्चासारपीडिताः ॥ १९ ॥
कृष्णोऽपि तं दधारैव शैलमत्यन्तनिश्चलम् । व्रजौकवासिभिर्हर्षविस्मिताक्षैर्निरीक्षितः ॥ २० ॥
गोपगोपीजनैर्हृष्टैः प्रीतिविस्तारितेक्षणैः । संस्तूयमानचरितः कृष्णश्शैलमधारयत् ॥ २१ ॥
सप्तरात्रं महामेघा ववर्षुर्नन्दगोकुले । इन्द्रेण चोदिता विप्र गोपानां नाशकारिणा ॥ २२ ॥
ततो धृते महाशैले परित्राते च गोकुले । मिथ्याप्रतिज्ञो बलभिद्वारयामास तान्घनान् ॥ २३ ॥
व्यभ्रे नभसि देवेन्द्रे वितथात्मवचस्यथ । निष्क्रम्य गोकुलं हृष्टं स्वस्थानं पुनरागमत् ॥ २४ ॥
मुमोच कृष्णोऽपि तदा गोवर्धनमहाचलम् । स्वस्थाने विस्मितमुखैर्दृष्टस्तैस्तु व्रजौकसैः ॥ २५ ॥

इति श्रीविष्णुपुराणे पंचमांश एकादशोऽध्यायः ॥ ११ ॥

---

क्रोडेनेति ॥ क्रोडः—कुक्षिः ॥ ११—१७ ॥

सुनिवातेष्विति ॥ निर्भयैः प्रविश्यतां गिरिपातान्न भेतव्यमित्यन्वयः ॥ १८, १९ ॥

कृष्ण इति ॥ व्रजौकेत्यदन्तत्वमार्षम् । व्रजैकवासिभिरिति वा पाठः ॥ २०—२२ ॥

तत इति ॥ मिथ्याप्रतिज्ञः—व्यर्थप्रतिज्ञः ॥ २३, २४ ॥

मुमोचेति ॥ व्रजौकसैरित्यदन्तत्वमार्षम् ॥ २५ ॥

इति श्रीविष्णुपुराणव्याख्याने विष्णुचित्तीये पंचमांश एकादशोऽध्यायः ॥ ११ ॥

## अथ द्वादशोऽध्यायः

श्रीपराशरः—

धृते गोवर्धने शैले परित्राते च गोकुले । रोचयामास कृष्णस्य दर्शनं पाकशासनः ॥ १ ॥
सोऽधिरुह्य महानागमैरावतममित्रजित् । गोवर्धनगिरौ कृष्णं ददर्श त्रिदशेश्वरः ॥ २ ॥
चारयन्तं महावीर्यं गास्तु गोपवपुर्धरम् । कृत्स्नस्य जगतो गोपं वृतं गोपकुमारकैः ॥ ३ ॥
गरुडं च ददर्शोच्चैरन्तर्द्धानगतं द्विज । कृतच्छायं हरेर्मूर्ध्नि पक्षाभ्यां पक्षिपुङ्गवम् ॥ ४ ॥
अवरुह्य स नागेन्द्रादेकान्ते मधुसूदनम् । शक्रस्सस्मितमाहेदं प्रीतिविस्तारितेक्षणः ॥ ५ ॥

इन्द्र उवाच—

कृष्णकृष्ण शृणुष्वेदं यदर्थं महमागतः । त्वत्समीपं महाबाहो नैतच्चिन्त्यं त्वयाऽन्यथा ॥ ६ ॥
भारावतारणार्थाय पृथिव्याः पृथिवीतले । अवतीर्णोऽखिलाधार त्वमेव परमेश्वर ॥ ७ ॥
मखभङ्गविरोधेन मया गोकुलनाशकाः । समादिष्टा महामेघास्तैश्चेदं कदनं कृतम् ॥ ८ ॥
त्रातास्ताश्च त्वया गावस्समुत्पाट्य महीधरम् । तेनाहं तोषितो वीर कर्मणाऽत्यद्भुतेन ते ॥ ९ ॥
साधितं कृष्ण देवानामहं मन्ये प्रयोजनम् । त्वयाऽयमद्रिप्रवरः करेणैकेन यद्धृतः ॥ १० ॥
गोभिश्च चोदितः कृष्ण त्वत्सकाशमिहागतः । त्वया त्राताभिरत्यर्थं युष्मत्सत्कारकारणात् ॥ ११ ॥
स त्वां कृष्णाभिषेक्ष्यामि गवां वाक्यप्रचोदितः । उपेन्द्रत्वे गवामिन्द्रो गोविन्दस्त्वं भविष्यसि ॥१२॥

श्रीपराशरः—

अथोपवाह्यादादाय घण्टामैरावताद्गजात् । अभिषेकं तया चक्रे पवित्रजलपूर्णया ॥ १३ ॥
क्रियमाणेऽभिषेके तु गावः कृष्णस्य तत्क्षणात् । प्रस्नवोद्भूतदुग्धार्द्रां सद्यश्चक्रुर्वसुन्धराम् ॥ १४ ॥
अभिषिच्य गवां वाक्यादुपेन्द्रं वै जनार्दनम् । प्रीत्या सप्रश्रयं वाक्यं पुनराह शचीपतिः ॥ १५ ॥
गवामेतत्कृतं वाक्यं तथाऽन्यदपि मे शृणु । यद्ब्रवीमि महाभाग भारावतरणेच्छया ॥ १६ ॥
ममांशः पुरुषव्याघ्र पृथिव्यां पृथिवीधर । अवतीर्णोऽर्जुनो नाम संरक्ष्यो भवता सदा ॥ १७ ॥
भारावतरणे साह्यं स ते वीरः करिष्यति । संरक्षणीयो भवता यथाऽऽत्मा मधुसूदन ॥ १८ ॥

श्रीभगवानुवाच—

जानामि भारते वंशे जातं पार्थं तवांशतः । तमहं पालयिष्यामि यावत्स्थास्यामि भूतले ॥ १९ ॥
यावन्महीतले शक्र स्थास्याम्यहमरिंदम । न तावदर्जुनं कश्चिद्देवेन्द्र युधि जेष्यति ॥ २० ॥

---

### अथ द्वादशोऽध्यायः

॥ १—५ ॥ कृष्णकृष्णेति ॥ नैतदिति । एतत्—आगमनम् । अन्यथा—विरोधधिया ॥ ६, ७ ॥

मखभङ्गेति ॥ कदनं—संकुलवधः ॥ ८—१० ॥

गोभिश्चेति ॥ गोभिः गोलोकस्थाभिः । इह त्राताभिर्गोभिरेककुलत्वात् त्राताभिरित्युक्तम् ॥ ११ ॥

कंसो नाम महाबाहुर्दैत्योऽरिष्टस्तथाऽसुरः । केशी कुवलयापीडो नरकाद्यास्तथा परे ॥ २१ ॥
हतेषु तेषु देवेन्द्र भविष्यति महाहवः । तत्र विद्धि सहस्राक्ष भारावतरणं कृतम् ॥ २२ ॥
स त्वं गच्छ न संतापं पुत्रार्थे कर्तुमर्हसि । नार्जुनस्य रिपुः कश्चिन्ममाग्रे प्रभविष्यति ॥ २३ ॥
अर्जुनार्थे त्वहं सर्वान्युधिष्ठिरपुरोगमान् । निवृत्ते भारते युद्धे कुन्त्यै दास्याम्यविक्षतान् ॥ २४ ॥

श्रीपराशरः—

इत्युक्तः संपरिष्वज्य देवराजो जनार्दनम् । आरुह्यैरावतं नागं पुनरेव दिवं ययौ ॥ २५ ॥
कृष्णो हि सहितो गोभिर्गोपालैश्च पुनर्व्रजम् । आजगामाथ गोपीनां दृष्टिपूतेन वर्त्मना ॥ २६ ॥

इति श्रीविष्णुपुराणे पञ्चमेंशे द्वादशोऽध्यायः ॥ १२ ॥

---

## अथ त्रयोदशोऽध्यायः



श्रीपराशरः—

गते शक्रे तु गोपालाः कृष्णमक्लिष्टकारिणम् । ऊचुः प्रीत्या धृतं दृष्ट्वा तेन गोवर्धनाचलम् ॥ १ ॥
वयमस्मान्महाभाग भगवन्महतो भयात् । गावश्च भवता त्राता गिरिधारणकर्मणा ॥ २ ॥
बालक्रीडेयमतुला गोपालत्वं जुगुप्सितम् । दिव्यं च भवतः कर्म किमेतत्तात कथ्यताम् ॥ ३ ॥
कालीयो दमितस्तोये धेनुको विनिपातितः । धृतो गोवर्धनश्चायं शङ्कितानि मनांसि नः ॥ ४ ॥
सत्यं सत्यं हरेः पादौ शपामोऽमितविक्रम । यथावद्वीर्यमालोक्य न त्वां मन्यामहे नरम् ॥ ५ ॥
प्रीतिस्सस्त्रीकुमारस्य व्रजस्य त्वयि केशव । कर्म चेदमशक्यं यत्समस्तैस्त्रिदशैरपि ॥ ६ ॥
बालत्वं चातिवीर्यत्वं जन्म चास्मास्वशोभनम् । चिन्त्यमानममेयात्मञ्छङ्कां कृष्ण प्रयच्छति ॥७॥

---

स त्वामिति ॥ सोऽहं त्वामुपेन्द्रत्वे । उप—उपरि सत्यलोकोपरिभागस्थगोलोकेश्वरत्वे अभिषेक्ष्यामि । यथोक्तं हरिवंशे * ममोपरि यथेन्द्रस्त्वं स्थापितो गोभिरीश्वरः । उपेन्द्र इति लोके त्वां गास्यन्ति दिवि देवताः ॥ इति । अतो गवामिन्द्रो गोविन्दो भविष्यसि ॥ १२—२६ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पञ्चमेंशे द्वादशोऽध्यायः ॥ १२ ॥

---

## अथ त्रयोदशोऽध्यायः



॥ १, २ ॥ बालक्रीडेति ॥ बालक्रीडा—पूतनावधादि । कर्म—अद्रिधारणादि ॥ ३, ४ ॥

सत्यंसत्यमिति ॥ पादौ—पादाभ्याम् ॥ ५ ॥

प्रीतिरिति ॥ एकस्मिन् सर्वेषां प्रीतिश्चामानुषत्वशङ्काहेतुः ॥ ६ ॥

बालत्वमिति ॥ अतिवीर्यत्वमिति बालत्वविशेषणम् । अशोभनमिति जन्मविशेषणम् ॥ ७ ॥

देवो वा दानवो वा त्वं यक्षो गन्धर्व एव वा । किमस्माकं विचारेण बान्धवोऽसि नमोस्तु ते ॥

श्रीपराशरः—

क्षणं भूत्वा त्वसौ तूष्णीं किंचित्प्रणयकोपवान् । इत्येवमुक्तस्तैर्गोपैः कृष्णोऽप्याह महामतिः॥९॥

श्रीभगवानुवाच :—

मत्संबन्धेन वो गोपा यदि लज्जा न जायते । श्लाघ्यो वाऽहं ततः किं वो विचारेण प्रयोजनम् ॥
यदि वोऽस्ति मयि प्रीतिः श्लाघ्योऽहं भवतां यदि । तदात्मबन्धुसदृशी बुद्धिर्वः क्रियतां मयि ॥
नाहं देवो न गन्धर्वो न यक्षो न च दानवः । अहं वो बान्धवो जातो नैतच्चिन्त्यमितोऽन्यथा ॥

श्रीपराशरः—

इति श्रुत्वा हरेर्वाक्यं बद्धमौनास्ततो वनम् । ययुर्गोपा महाभाग तस्मिन्प्रणयकोपिनि ॥ १३ ॥
कृष्णस्तु विमलं व्योम शरच्चन्द्रस्य चन्द्रिकाम् । तदा कुमुदिनीं फुल्लामामोदितदिगन्तराम्॥१४॥
वनराजिं तथा कूजद्भृंगमालामनोहराम् । विलोक्य सह गोपीभिर्मनश्चक्रे रतिं प्रति ॥ १५ ॥
विना रामेण मधुरमतीव वनिताप्रियम् । जगौ कलपदं शौरिस्तारमन्द्रकृतक्रमम् ॥ १६ ॥
रम्यं गीतध्वनिं श्रुत्वा संत्यज्यावसथांस्तदा । आजग्मुस्त्वरिता गोप्यो यत्रास्ते मधुसूदनः ॥१७॥
शनैश्शनैर्जगौ गोपी काचित्तस्य लयानुगम् । दत्तावधाना काचिच्च तमेव मनसाऽस्मरत् ॥ १८ ॥
काचित्कृष्णेति कृष्णेति प्रोक्त्वा लज्जामुपाययौ । ययौ च काचित्प्रेमान्धा तत्पार्श्वमविलंबितम् ॥
काचिच्चावसथस्यान्ते स्थित्वा दृष्ट्वा बहिर्गुरुम् । तन्मयत्वेन गोविन्दं दध्यौ मीलितलोचना ॥
तच्चित्तविमलाह्लादक्षीणपुण्यचया तथा । तदप्राप्तिमहादुःखविलीनाशेषपातका ॥ २१ ॥

---

देवो वेति ॥ सर्वथा देवादिष्वन्यतम एवास्माकं बान्धवोऽसि, न गोपालमात्रम् । किं विचारेण? नात्र संशयः ॥ ८–११ ॥

नाहमिति ॥ अहं वो बान्धवः—केवल गोपः ॥ १२–१५ ॥

विनेति ॥ कलपदम्—अव्यक्तमधुराक्षरं गेयम् । तारमन्द्रकृतक्रमम् । तारमन्द्रौ उच्चोपांशुध्वनिधर्मौ । नानामात्रकृतक्रममिति पाठे द्रुतमध्यविलंबिताख्यत्रिमात्रलयकृतस्वरक्रमम् । नानातन्त्रीकृतक्रममिति पाठे वीणाङ्गध्वनिवन्नियतनिबद्धस्वरक्रमम् ॥ १६, १७ ॥

शनैश्शनैरिति ॥ तस्य लयानुगं—द्रुतमध्यविलंबिताख्यत्रिलयात्मकतालविश्रान्तिकालानुगुणम् । * तालान्तरालवर्ती यः कालोऽसौ लयनालयः * इति वचनात् । दत्तावधाना—कृतावधाना ॥ १८, १९ ॥

काचिदिति ॥ काचिदावसथस्येत्यनेन गोप्याः कामद्वारा भगवति लय उच्यते । तन्मयत्वेन—आत्मनस्तत्तादात्म्येन ॥ २० ॥

तच्चिन्तेति ॥ तच्चित्तेन—तद्गतेन चित्तेन जातविमलाह्लादेन क्षीणपुण्यचया । वैमल्यं दुःखासंभेदः । अनेन पूर्वसंचितप्रारब्धनिश्शेषकर्मक्षयो भोगादुक्तः ॥ २१ ॥

तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम् । निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका ॥ २२ ॥
ोपरिवृतो रात्रिं शरच्चन्द्रमनोरमाम् । मानयामास गोविन्दो रासारम्भरसोत्सुकः ॥ २३ ॥
्यश्च बृन्दशः कृष्णचेष्टास्वायत्तमूर्तयः । अन्यदेशं गते कृष्णे चेरुर्वृन्दावनान्तरम् ॥ २४ ॥
कृष्णे निबद्धहृदया इदमूचुः परस्परम् ॥ २५ ॥
णोऽहमेष ललितं व्रजाम्यालोक्यतां गतिः । अन्या ब्रवीति कृष्णस्य मम गीतिर्निशम्यताम् ॥२६॥
! कालिय तिष्ठात्र कृष्णोऽहमिति चापरा । बाहुमास्फोट्य कृष्णस्य लीलया सर्वमाददे ॥ २७ ॥
न्या ब्रवीति भो गोपा निश्शङ्कैः स्थीयतामिति । अलं वृष्टिभयेनात्र धृतो गोवर्धनो मया ॥२८॥
नुकोऽयं मयाऽऽक्षिप्तो विचरन्तु यथेच्छया । गावो ब्रवीति चैवान्या कृष्णलीलानुसारिणी ॥२९॥
ं नानाप्रकारासु कृष्णचेष्टासु तास्तदा । गोप्यो व्यग्राः समं चेरू रम्यं बृन्दावनान्तरम् ॥ ३० ॥
लोक्यैका भुवं प्राह गोपी गोपवराङ्गना । पुलकाञ्चितसर्वाङ्गी विकासिनयनोत्पला ॥ ३१ ॥
्वजवज्राङ्कुशाब्जाङ्करेखावन्त्यालि पश्यत । पदान्येतानि कृष्णस्य लीलाललितगामिनः ॥ ३२ ॥
ाऽपि तेन समायाता कृतपुण्या मदालसा । पदानि तस्याश्चैतानि घनान्यल्पतनूनि च ॥ ३३ ॥
ुष्पापचयमत्रोच्चैश्चक्रे दामोदरो ध्रुवम् । येनाग्राक्रान्तमात्राणि पदान्यत्र महात्मनः ॥ ३४ ॥
पविश्य(सा) वै तेन काचित्पुष्पैरलंकृता । अन्यजन्मनि सर्वात्मा विष्णुरभ्यर्चि(तो यया)तस्तया ॥

चिंतयन्तीति ॥ परब्रह्मस्वरूपिणि—स्वरूपि परब्रह्मणि । परब्रह्मस्वरूपिणमिति पाठे परब्रह्मभूतमिति । छ्वासतया—प्रियानुभवरूपध्यानादन्तर्मग्ने मनसि तदविनाभूतप्राणादेरप्यन्तर्गतत्वान्निरुच्छ्वासत्वम् । दशम्यावस्थायाम् प्रियमिति कामशास्त्रे वल्लभसायुज्यमुक्तम् । द्वेषाच्चैद्यादेरिव कामाद्गोपीनां सायुज्यमुपपन्नम् ॥ २२ ॥

गोपीपरिवृत इति ॥ रासारंभेति । रासो नाम अन्योन्यव्यतिषक्तहस्तं गायतां स्त्रीपुंसां मण्डलीभूय ानृत्तं रासः । उक्तं च—* अनेकनर्तकीयोज्यं चित्रताललयान्वितम् । आचतुष्षष्टियुगलाद्रासकं मसृणोद्धतम् ॥ ॥ २३ ॥

गोप्यश्चेति । अन्यदेशं गत इति विप्रलंभशृंगारोक्तिः संभोगपोषार्था । कृष्णचेष्टास्वायत्तमूर्तयः इति ोक्तिः । यदाह भरतः—* प्रियानुकरणं लीला मधुराङ्गविचेष्टितैः * इति ॥ २४, २५ ॥

कृष्णोऽहमिति ॥ ललितं व्रजामीति । * सुकुमारोऽङ्गविन्यासो मसृणो ललितं भवेत् * इति ॥२६-२९॥

एवमिति ॥ व्यग्राः—उत्सुकाः ॥ ३०, ३१ ॥

ध्वजवज्रेति ॥ ध्वजवज्राङ्कुशाब्जरूपरेखावन्ति । आलि—हे सख्यः । आर्षो वचनव्यत्ययः ॥ ३२ ॥

कापीति ॥ घनानि—मदमंथरत्वादल्पान्तराणि, अल्पतनूनि—स्त्रीत्वात् ह्रस्वान्यपृथूनि च ॥ ३३ ॥

पुष्पापचयमिति ॥ अग्राक्रान्तमात्राणि—प्रपदमात्राक्रान्तानि ॥ ३४ ॥

अत्रेति ॥ मृदितस्थलनिपतितपुष्पादिलिङ्गदर्शनेन अनुमानम् ॥ ३५ ॥

पुष्पबन्धनसंमानकृतमानामपास्य ताम् । नन्दगोपसुतो यातो मार्गेणानेन पश्यत ॥ ३६ ॥
अनुयातैनमत्रान्या नितंबभरमंथरा । या गन्तव्ये द्रुतं याति निम्नपादाग्रसंस्थितिः ॥ ३७ ॥
हस्तन्यस्ताग्रहस्तेयं तेन याति तथा सखी । अनायत्तपदन्यासा लक्ष्यते पदपद्धतिः ॥ ३८ ॥
हस्तसंस्पर्शमात्रेण धूर्तेनैषा विमानिता । नैराश्यान्मन्दगामिन्या निवृत्तं लक्ष्यते पदम् ॥ ३९ ॥
नूनमुक्ता त्वरामीति पुनरेष्यामि तेऽन्तिकम् । तेन कृष्णेन येनैषा त्वरिता पदपद्धतिः ॥ ४० ॥
प्रविष्टो गहनं कृष्णः पदमत्र न लक्ष्यते । निवर्तध्वं शशाङ्कस्य नैतद्दीधितिगोचरे ॥ ४१ ॥
निवृत्तास्तास्तदा गोप्यो निराशाः कृष्णदर्शने । यमुनातीरमागम्य जगुस्तच्चरितं तथा ॥ ४२ ॥
ततो ददृशुरायान्तं विकासिमुखपङ्कजम् । गोप्यस्त्रैलोक्यगोप्तारं कृष्णमक्लिष्टचेष्टितम् ॥ ४३ ॥
काचिदालोक्य गोविन्दमायान्तमतिहर्षिता । कृष्णकृष्णेति कृष्णेति प्राह नान्यदुदीरयत् ॥ ४४ ॥
काचिद्भ्रूभङ्गुरं कृत्वा ललाटफलकं हरिम् । विलोक्य नेत्रभृङ्गाभ्यां पपौ तन्मुखपङ्कजम् ॥ ४५ ॥
काचिदालोक्य गोविन्दं निमीलितविलोचना । तस्यैव रूपं ध्यायन्ती योगारूढेव सा बभौ ॥ ४६ ॥
ततः कांचित्प्रियालापैः कांचिद्भ्रूभङ्गवीक्षितैः । निन्येऽनुनयमन्यां च करस्पर्शेन माधवः ॥ ४७ ॥
ताभिः प्रसन्नचित्ताभिर्गोपीभिस्सह सादरम् । ररास रासगोष्ठीभिरुदारचरितो हरिः ॥ ४८ ॥
रासमण्डलबन्धोऽपि कृष्णपार्श्वमनुज्झता । गोपीजनेन नैवाभूदेकस्थानस्थिरात्मना ॥ ४९ ॥
हस्तेन गृह्य चैकैकां गोपीनां रासमण्डले । चकार तत्करस्पर्शनिमीलितदृशं हरिः ॥ ५० ॥

---

पुष्पबन्धनेति ॥ मानो गर्वः ॥ ३६ ॥

अनुयातेति ॥ पुरतो याति—गच्छति कृष्णे, तं प्राप्तुं द्रुतं गन्तव्ये सति निम्नपादाग्रसंस्थितिर्या अनुयाता इयमन्येत्यन्वयः ॥ ३७, ३८ ॥

हस्तसंस्पर्शेति ॥ एषा—अन्या, हस्तसंस्पर्शमात्रेण—सत्कारान्तररहितेन विमानिता । अत्र हेतुः नैराश्यादित्यादि ॥ ३९ ॥

नूनमिति ॥ त्वरामि—रतोचितं स्थानमन्वेष्टुं त्वरे, अन्विष्य पुनस्तेऽन्तिकमेष्यामीति नूनं कृष्णेन काचिदुक्ता । अत्र लिङ्गं—येनेत्यादि ॥ ४०, ४१ ॥

निवृत्ता इति ॥ जगुः । तद्गानं हि तदपरोक्षदं सर्वेषाम् ॥ ४२—४८ ॥

रासेति ॥ एकस्थानस्थिरात्मना—कृष्णपार्श्वे एकैकस्मिन् स्थाने स्थिरचित्तेन, अत एव कृष्णपार्श्वमनुज्झता गोपीजनेन रासार्थमण्डलीभावेन बन्धोऽपि नाभूत् । रासमण्डलबद्धोऽपि कृष्ण इति पाठे स्वयमभितो मण्डलीभूय स्थितेन गोपीजनेन कृष्णो नैकस्थानोऽभूत् । गोपीमण्डलान्तः शीघ्रसंचारात्तत्तत्पार्श्वस्थ इवाभवदित्यर्थः ॥ ४९ ॥

हस्तेनेति ॥ हरिरेकां हस्तेन गृह्णाति, सा तस्य करस्पर्शसुखनिमीलिताक्षी भवति । तामन्यस्याः स्वकरस्पर्शपरवशायाः हस्तेन हस्तं योजयति । एवं चापरस्याः तादृश्या हस्तेनेति । हरिहस्तस्पर्शसुखवशात्कृष्णेन गृहीतहस्ताऽहमेवेति सर्वासां बुद्धिमुत्पादयन्ननेकमूर्तिरिव हरिरगृहीतहस्त एव रासमण्डले चकार । हरिरेवमेताभिः रासमण्डलं बबन्धेति रासवित्संप्रदायः । अन्ये तु द्वयोर्द्वयोर्मध्ये हरिरेकैकमूर्तिरातस्थावित्याहुः ॥ ५० ॥

ततः प्रववृते रासश्चलद्वलयनिस्वनः । अनुयातशरत्काव्यगेयगीतिरनुक्रमात् ॥ ५१ ॥
कृष्णश्शरच्चन्द्रमसं कौमुदीं कुमुदाकरम् । जगौ गोपीजनस्त्वेकं कृष्णनाम पुनःपुनः ॥ ५२ ॥
परिवृत्तिश्रमेणैका चलद्वलयलापिनीम् । ददौ बाहुलतां स्कन्धे गोपी मधुनिघातिनः ॥ ५३ ॥
काचित्प्रविलसद्बाहुं परिरभ्य चुचुम्ब तम् । गोपी गीतस्तुतिव्याजान्निपुणा मधुसूदनम् ॥ ५४ ॥
गोपीकपोलसंश्लेषमभिगम्य हरेर्भुजौ । पुलकोद्गमसस्याय स्वेदाम्बुघनतां गतौ ॥ ५५ ॥
रासगेयं जगौ कृष्णो यावत्तारतरध्वनिः । साधु कृष्णेति कृष्णेति तावत्ता द्विगुणं जगुः ॥ ५६ ॥
गतेऽनुगमनं चक्रुर्वलने संमुखं ययुः । प्रतिलोमानुलोमाभ्यां भेजुर्गोपाङ्गना हरिम् ॥ ५७ ॥
स तथा सह गोपीभी रराम मधुसूदनः । यथाऽब्दकोटिप्रतिमः क्षणस्तेन विनाऽभवत् ॥ ५८ ॥
ता वार्यमाणाः पतिभिः पितृभिर्भ्रातृभिस्तथा । कृष्णं गोपाङ्गना रात्रौ रमयन्ति रतिप्रियाः ॥५९॥
सोऽपि कैशोरकवयो मानयन्मधुसूदनः । रेमे ताभिरमेयात्मा क्षपासु क्षपिताहितः ॥ ६० ॥
तद्भर्तृषु तथा तासु सर्वभूतेषु चेश्वरः । आत्मस्वरूपरूपोऽसौ व्यापी वायुरिव स्थितः ॥ ६१ ॥
यथा समस्तभूतेषु नभोऽग्निः पृथिवी जलम् । वायुश्चात्मा तथैवासौ व्याप्य सर्वमवस्थितः ॥ ६२ ॥

इति श्रीविष्णुपुराणे पञ्चमेंशे त्रयोदशोऽध्यायः ॥ १३ ॥

---

तत इति ॥ अनुयातेति । शरद्वर्णनादिरूपं कविकृतं गेयं यत् तस्य या गीतिः सा अनुयाता येन रासेन ॥ ५१—५४ ॥

गोपीति ॥ गोपीकपोलपुलकोद्गमसस्याय स्वेदाम्बुमद्धरिभुजद्वयं घनतां ययौ । अनेनेतरेतरानुराग उक्तः ॥ ५५, ५६ ॥

गत इति ॥ वलने—आवृत्तौ । प्रतिलोमानुलोमाभ्यां—गतिप्रवृत्तिनिवृत्तिभ्याम् ॥ ५७—५९ ॥

स इति ॥ कैशोरकं—कौमारकम् । मानयन्—संभावयन् ॥ ६० ॥

अथ कृष्णस्य सर्वव्यापनादीश्वरत्वेनापहतपाप्मत्वात् गोपीसंभोगेऽपि जीववन्न लेप इत्याह—तद्भर्तृष्विति द्वयेन । आत्मस्वरूपरूपः—जीवस्वरूपशरीरः । अत्र पूर्वश्लोकेनास्य सर्वचेतनशरीरत्वमुक्तम् । उत्तरेण सर्वाचेतनशरीरत्वम् ॥ ६१—६२ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमेंशे त्रयोदशोऽध्यायः ॥ १३ ॥

## अथ चतुर्दशोऽध्यायः

श्रीपराशरः—

प्रदोषार्धे कदाचित्तु रासासक्ते जनार्दने । त्रासयन्समदो गोष्ठमरिष्टस्समुपागमत् ॥ १ ॥
सतोयतोयदच्छायस्तीक्ष्णशृङ्गोऽर्कलोचनः । खुराग्रपातैरत्यर्थं दारयन्धरणीतलम् ॥ २ ॥
लेलिहानस्सनिष्पेषं जिह्वयोष्ठौ पुनःपुनः । संरंभाविद्धलांगूलः कठिनस्कन्धबन्धनः ॥ ३ ॥
उदग्रककुदाभोगप्रमाणदुरतिक्रमः । विण्मूत्रलिप्तपृष्ठाङ्गो गवामुद्वेगकारकः ॥ ४ ॥
प्रलम्बकण्ठोऽतिमुखस्तरुखाताङ्किताननः । पातयन्स गवां गर्भान्दैत्यो वृषभरूपधृत् ॥ ५ ॥
सूदयंस्तापसानुग्रो वनान्यटति यस्सदा ॥ ६ ॥
ततस्तमतिघोराक्षमवेक्ष्यातिभयातुराः । गोपा गोपस्त्रियश्चैव कृष्णकृष्णेति चुक्रुशुः ॥ ७ ॥
सिंहनादं ततश्चक्रे तलशब्दं च केशवः । तच्छब्दश्रवणाचासौ दामोदरमुपाययौ ॥ ८ ॥
अग्रन्यस्तविषाणाग्रः कृष्णकुक्षिकृतेक्षणः । अभ्यधावत दुष्टात्मा कृष्णं वृषभदानवः ॥ ९ ॥
आयान्तं दैत्यवृषभं दृष्ट्वा कृष्णो महाबलः । न चचाल तदा स्थानादवज्ञास्मितलीलया ॥ १० ॥
आसन्नं चैव जग्राह ग्राहवन्मधुसूदनः । जघान जानुना कुक्षौ विषाणग्रहणाचलम् ॥ ११ ॥
तस्य दर्पबलं भङ्क्त्वा गृहीतस्य विषाणयोः । अपीडयदरिष्टस्य कण्ठं क्लिन्नमिवाम्बरम् ॥ १२ ॥
उत्पाट्य शृङ्गमेकं तु तेनैवाताडयत्ततः । ममार स महादैत्यो मुखाच्छोणितमुद्वमन् ॥ १३ ॥
तुष्टुवुर्निहते तस्मिन्दैत्ये गोपा जनार्दनम् । जम्भे हते सहस्राक्षं पुरा देवगणा यथा ॥ १४ ॥

इति श्रीविष्णुपुराणे पंचमेंशे चतुर्थोऽध्यायः ॥ १४ ॥

## अथ पञ्चदशोऽध्यायः

श्रीपराशरः—

ककुद्मति हतेऽरिष्टे धेनुके विनिपातिते । प्रलम्बे निधनं नीते धृते गोवर्धनाचले ॥ १ ॥
दमिते कालिये नागे भग्ने तुङ्गद्रुमद्वये । हतायां पूतनायां च शकटे परिवर्तिते ॥ २ ॥

---

### अथ चतुर्दशोऽध्यायः

॥ १, २ ॥ लेलिहान इति ॥ सनिष्पेषं—सशब्दम् । आविद्धं—वक्रितम् ॥ ३ ॥

उदग्रेति ॥ उदग्रः—अतिशायितः, ककुदाभोगः—प्रमाणं च यस्य । उदग्रककुदाभोगः प्रमाणादिति च पाठः ॥ ४—१० ॥ आसन्नमिति ॥ ग्राहवत्—ग्राह इव ॥ ११—१४ ॥

इति श्रीविष्णुमहापुराणव्याख्याने विष्णुचित्तीये पंचमेंशे चतुर्दशोऽध्यायः ॥ १४ ॥

### अथ पञ्चदशोऽध्यायः

ककुद्मतीति ॥ ककुद्मति—वृषभे ॥ १, २ ॥

कंसाय नारदः प्राह यथावृत्तमनुक्रमात् । यशोदादेवकीगर्भपरिवर्ताद्यशेषतः ॥ ३ ॥
श्रुत्वा तत्सकलं कंसो नारदाद्देवदर्शनात् । वसुदेवं प्रति तदा कोपं चक्रे सुदुर्मतिः ॥ ४ ॥
सोऽतिकोपादुपालभ्य सर्वयादवसंसदि । जगर्ह यादवांश्चैव कार्यं चैतदचिन्तयत् ॥ ५ ॥
यावन्न बलमारूढौ रामकृष्णौ सुबालकौ । तावदेव मया वध्यावसाध्यौ रूढयौवनौ ॥ ६ ॥
चाणूरोऽत्र महावीर्यो मुष्टिकश्च महाबलः । एताभ्यां मल्लयुद्धेन मारयिष्यामि दुर्मती ॥ ७ ॥
धनुर्महमहायोगव्याजेनानीय तौ व्रजात् । तथा तथा यतिष्यामि यास्येते संक्षयं यथा ॥ ८ ॥
श्वफल्कतनयं शूरमक्रूरं यदुपुङ्गवम् । तयोरानयनार्थाय प्रेषयिष्यामि गोकुलम् ॥ ९ ॥
वृन्दावनचरं घोरमादेक्ष्यामि च केशिनम् । तत्रैवासावतिबलस्तावुभौ घातयिष्यति ॥ १० ॥
गजः कुवलयापीडो मत्सकाशमिहागतौ । घातयिष्यति वा गोपौ वसुदेवसुतावुभौ ॥ ११ ॥

श्रीपराशरः—

इत्यालोच्य स दुष्टात्मा कंसो रामजनार्दनौ । हन्तुं कृतमतिर्वीरावक्रूरं वाक्यमब्रवीत् ॥ १२ ॥

कंस उवाच—

भो भो दानपते वाक्यं क्रियतां प्रीतये मम । इतः स्यन्दनमारुह्य गम्यतां नन्दगोकुलम् ॥ १३ ॥
वसुदेवसुतौ तत्र विष्णोरंशसमुद्भवौ । नाशाय किल संभूतौ मम दुष्टौ प्रवर्धतः ॥ १४ ॥
धनुर्महो ममाप्यत्र चतुर्दश्यां भविष्यति । आनेयौ भवता गत्वा मल्लयुद्धाय तत्र तौ ॥ १५ ॥
चाणूरमुष्टिकौ मल्लौ नियुद्धकुशलौ मम । ताभ्यां सहानयोर्युद्धं सर्वलोकोऽत्र पश्यतु ॥ १६ ॥
गजः कुवलयापीडो महामात्रप्रचोदितः । स वा हनिष्यते पापौ वसुदेवात्मजौ शिशू ॥ १७ ॥
तौ हत्वा वसुदेवं च नन्दगोपं च दुर्मतिम् । हनिष्ये पितरं चैनमुग्रसेनं सुदुर्मतिम् ॥ १८ ॥
ततस्समस्तगोपानां गोधनान्यखिलान्यहम् । वित्तं चापहरिष्यामि दुष्टानां मद्वधैषिणाम् ॥ १९ ॥
त्वामृते यादवाश्चैते द्विषो दानपते मम । एतेषां च वधायाहं यतिष्येऽनुक्रमात्ततः ॥ २० ॥
तदा निष्कण्टकं सर्वं राज्यमेतदयादवम् । प्रशासिष्ये त्वया तस्मान्मत्प्रीत्यै वीर गम्यताम् ॥ २१ ॥
यथा च माहिषं सर्पिर्दधि क्षीरं तथा बहु । गोपास्समानयन्त्याशु तथा वाच्यास्त्वया च ते ॥२२॥

श्रीपराशरः—

इत्याज्ञप्तस्तदाऽक्रूरो महाभागवतो द्विज । प्रीतिमानभवत्कृष्णं श्वो द्रक्ष्यामीति सत्वरः ॥ २३ ॥
तथेत्युक्त्वा च राजानं रथमारुह्य शोभनम् । निश्चक्राम ततः पुर्या मथुराया मधुप्रियः ॥ २४ ॥

इति श्रीविष्णुपुराणे पंचमेंऽशे पञ्चदशोऽध्यायः ॥ १५ ॥

---

कंसायेति ॥ गर्भपरिवर्तः—अपत्यव्यत्ययः ॥ ३ ॥
श्रुत्वेति ॥ देवदर्शनात्—देवानामिव दर्शनं यस्य तस्मात् ॥ ४ ॥
स इति ॥ उपालभ्य—विगर्ह्य ॥ ५–२१ ॥
यथा चेति ॥ उपहार्य—उपायनीकृत्य । समानयन्त्वाशु चोपहार्यं तथातथेति च पाठः ॥ २२-२४ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पचमेंशे पञ्चदशोऽध्यायः ॥ १५ ॥

## अथ षोडशोऽध्यायः

श्रीपराशरः—

केशी चापि बलोदग्रः कंसदूतप्रचोदितः । कृष्णस्य निधनाकाङ्क्षी वृन्दावनमुपागमत् ॥ १ ॥

स खुरक्षतभूपृष्ठस्सटाक्षेपधुताम्बुदः । द्रुतविक्रान्तचन्द्रार्कमार्गो गोपानुपाद्रवत् ॥ २ ॥

तस्य हेषितशब्देन गोपाला दैत्यवाजिनः । गोप्यश्च भयसंविग्ना गोविन्दं शरणं ययुः ॥ ३ ॥

त्राहित्राहीति गोविन्दः श्रुत्वा तेषां ततो वचः । सतोयजलदध्वानगंभीरमिदमुक्तवान् ॥ ४ ॥

अलं त्रासेन गोपालाः केशिनः किं भयातुरैः । भवद्भिर्गोपजातीयैर्वीरवीर्यं विलोप्यते ॥ ५ ॥

किमनेनाल्पसारेण हेषिताटोपकारिणा । दैतेयबलवाह्येन वल्गता दुष्टवाजिना ॥ ६ ॥

एह्येहि दुष्ट कृष्णोऽहं पूष्णस्त्विव पिनाकधृत् । पातयिष्यामि दशनान्वदनादखिलांस्तव ॥ ७ ॥

इत्युक्त्वाऽऽस्फोट्य गोविन्दः केशिनस्संमुखं ययौ । विवृतास्यश्च सोऽप्येनं दैतेयाश्व उपाद्रवत् ॥ ८ ॥

बाहुमाभोगिनं कृत्वा मुखे तस्य जनार्दनः । प्रवेशयामास तदा केशिनो दुष्टवाजिनः ॥ ९ ॥

केशिनो वदनं तेन विशता कृष्णबाहुना । शातिता दशनाः पेतुः सिताभ्रावयवा इव ॥ १० ॥

कृष्णस्य ववृधे बाहुः केशिदेहगतो द्विज । विनाशाय यथा व्याधिरासंभूतेरुपेक्षितः ॥ ११ ॥

विपाटितोष्ठो बहुलं सफेनं रुधिरं वमन् । सोऽक्षिणी विवृते चक्रे विशिष्टे मुक्तबन्धने ॥ १२ ॥

जघान धरणीं पादैश्शकृन्मूत्रं समुत्सृजन् । स्वेदार्द्रगात्रश्शान्तश्च निर्यत्नस्सोऽभवत्तदा ॥ १३ ॥

व्यादितास्यमहारन्ध्रस्सोऽसुरः कृष्णबाहुना । निपातितो द्विधा भूमौ वैद्युतेन यथा द्रुमः ॥ १४ ॥

---

## अथ षोडशोऽध्यायः

केशीति ॥ वृन्दावनम्—कृष्णासन्नभागम् ॥ १ ॥

स इति ॥ द्रुतैः—उत्प्लुतिभिर्विक्रान्तौ—आक्रान्तौ चंद्रार्कमार्गौ येन ॥ २ ॥

तस्येति ॥ भयसंविग्नाः—भयेन चलिताः ॥ ३, ४ ॥

अलमिति ॥ केशिनस्त्रासेनालम् । गोपजातीयैर्भवद्भिर्वीराणां वीर्यं किं विलोप्यते? गोपजातीयत्वविशेषणमेषां वीर्यहेतुः ॥ ५ ॥

किमनेनेति ॥ आटोपः—संभ्रमः । दैतेयश्चासौ बलवाह्यश्च । बलवाह्यः—बलहीनः । वल्गता—नृत्यता ॥ ६–८ ॥

बाहुमिति ॥ आभोगिनम्—परिणाहिनम् ॥ ९, १० ॥

कृष्णस्येति ॥ आसंभूतेः—आवृद्धेः ॥ ११–१४ ॥

द्विपादे पृष्ठपुच्छार्धे श्रवणैकाक्षिनासिके । केशिनस्ते द्विधाभूते शकले द्वे विरेजतुः ॥ १५ ॥
हत्वा तु केशिनं कृष्णो गोपालैर्मुदितैर्वृतः । अनायस्ततनुस्स्वस्थो हसंस्तत्रैव तस्थिवान् ॥ १६ ॥
ततो गोप्यश्च गोपाश्च हते केशिनि विस्मिताः । तुष्टुवुः पुण्डरीकाक्षमनुरागमनोरमम् ॥ १७ ॥
अथाहान्तर्हितो विप्र नारदो जलदे स्थितः । केशिनं निहतं दृष्ट्वा हर्षनिर्भरमानसः ॥ १८ ॥
साधुसाधु जगन्नाथ लीलयैव यदच्युत । निहतोऽयं त्वया केशी क्लेशदस्त्रिदिवौकसाम् ॥ १९ ॥
युद्धोत्सुकोऽहमत्यर्थं नरवाजिमहाहवम् । अभूतपूर्वमन्यत्र द्रष्टुं स्वर्गादिहागतः ॥ २० ॥
कर्माण्यत्रावतारे ते कृतानि मधुसूदन । यानि तैर्विस्मितं चेतस्तोषमेतेन मे गतम् ॥ २१ ॥
तुरङ्गस्यास्य शक्रोऽपि कृष्ण देवाश्च बिभ्यति । धुतकेसरजालस्य हेषतोऽभ्रावलोकिनः ॥ २२ ॥
यस्मात्त्वयैव दुष्टात्मा हतः केशी जनार्दन । तस्मात्केशवनाम्ना त्वं लोके ख्यातो भविष्यसि ॥ २३ ॥
स्वस्त्यस्तु ते गमिष्यामि कंसयुद्धेऽधुना पुनः । परश्वोऽहं समेष्यामि त्वया केशिनिषूदन ॥ २४ ॥
उग्रसेनसुते कंसे सानुगे विनिपातिते । भारावतारकर्ता त्वं पृथिव्या पृथिवीधर ॥ २५ ॥
तत्रानेकप्रकाराणि युद्धानि पृथिवीक्षिताम् । द्रष्टव्यानि मया युष्मत्प्रणीतानि जनार्दन ॥ २६ ॥
सोऽहं यास्यामि गोविन्द देवकार्यं महत्कृतम् । त्वयैव विदितं सर्वं स्वस्ति तेऽस्तु व्रजाम्यहम् ॥२७॥
नारदे तु गते कृष्णस्सह गोपैस्समाजितः । विवेश गोकुलं गोपीनेत्रपानैकभाजनम् ॥ २८ ॥

इति श्रीविष्णुपुराणे पंचमेंशे षोडशोऽध्यायः ॥ १६ ॥

---

द्विपादे इति ॥ द्वौ पादौ ययोः अर्धरूपे पृष्ठे पुच्छे च ययोस्ते । द्विपादपृष्ठपुच्छार्धे इत्येकपदपाठश्च । श्रवणेति । एकशब्दः श्रवणपदात्प्राग्योज्यः । एका श्रवणाक्षिनासिका ययोस्ते—श्रवणैकाक्षिनासिके ॥ १५,१६ ॥

तत इति ॥ अनुरागेण मनोरमं यथा भवति तथा ॥ १७–१९ ॥

युद्धोत्सुक इति ॥ युद्धोत्सुकः—युद्धदर्शनोत्सुकः ॥ २०–२३ ॥

स्वस्त्यस्त्विति ॥ अधुना गमिष्यामीत्यन्वयः ॥ २४ ॥

उग्रसेनेति ॥ कर्ता—भविष्यसि ॥ २५ ॥

तत्रेति ॥ तत्र—भारावतरणे । आयुष्मत्प्रणीतानीति पदच्छेदः । * यामोषधीमिवायुष्मन्निति वन्मङ्गलाशासनोक्तिः ॥ २६, २७ ॥

नारद इति ॥ नेत्रेति । नेत्रैः पानक्रियाणामेको विषयः ॥ २८ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे षोडशोऽध्यायः ॥ १६ ॥

## अथ सप्तदशोऽध्यायः

श्रीपराशरः—

अक्रूरोऽपि विनिष्क्रम्य स्यन्दनेनाशुगामिना । कृष्णसंदर्शनाकांक्षी प्रययौ नन्दगोकुलम् ॥ १ ॥
चिन्तयामास चाक्रूरो नास्ति धन्यतरो मया । योऽहमंशावतीर्णस्य मुखं द्रक्ष्यामि चक्रिणः ॥ २ ॥
अद्य मे सफलं जन्म सुप्रभाताऽभवन्निशा । यदुन्निद्राब्जपत्राक्षं विष्णोर्द्रक्ष्याम्यहं मुखम् ॥ ३ ॥
पापं हरति यत्पुंसां स्मृतं संकल्पनामयम् । तत्पुण्डरीकनयनं विष्णोर्द्रक्ष्याम्यहं मुखम् ॥ ४ ॥
विनिर्जग्मुर्यतो वेदा वेदाङ्गान्यखिलानि च । द्रक्ष्यामि तत्परं धाम धाम्नां भगवतो मुखम् ॥ ५ ॥
यज्ञेषु यज्ञपुरुषः पुरुषैः पुरुषोत्तमः । इज्यते योऽखिलाधारस्तं द्रक्ष्यामि जगत्पतिम् ॥ ६ ॥
इष्ट्वा यमिन्द्रो यज्ञानां शतेनामरराजताम् । अवाप तमनन्तादिमहं द्रक्ष्यामि केशवम् ॥ ७ ॥
न ब्रह्मा नेन्द्ररुद्राश्विवस्वादित्यमरुद्गणाः । यस्य स्वरूपं जानन्ति प्रत्यक्षं याति मे हरिः ॥ ८ ॥
सर्वात्मा सर्ववित्सर्वस्सर्वभूतेष्ववस्थितः । यो ह्यचिन्त्योऽव्ययो व्यापी स वक्ष्यति मया सह ॥ ९ ॥
मत्स्यकूर्मवराहाश्वसिंहरूपादिभिः स्थितिम् । चकार जगतो योऽजः सोऽद्य मामालपिष्यति ॥ १० ॥
सांप्रतं च जगत्स्वामी कार्यमात्महृदि स्थितम् । कर्तुं मनुष्यतां प्राप्तस्स्वेच्छादेहधृदव्ययः ॥ ११ ॥
योऽनन्तः पृथिवीं धत्ते शेखरस्थितिसंस्थिताम् । सोऽवतीर्णो जगत्यर्थे मामक्रूरेति वक्ष्यति ॥ १२ ॥
पितृपुत्रसुहृद्भ्रातृमातृबन्धुमयीमिमाम् । यन्मायां नालमुत्तर्तुं जगत्तस्मै नमोनमः ॥ १३ ॥

---

अथ सप्तदशोऽध्यायः

॥ १ ॥ चिन्तयामासेति ॥ मया—मत्तः ॥ २, ३ ॥

पापमिति ॥ संकल्पनामयम्—अदितिदेवक्याद्याराधनसंकल्पानुरूपं हि भगवतो देवमनुष्यादिसजातीयम् इदं रूपम् । इदं विभवार्चावतारसाधारणम् । यथाह * ये यथा मां प्रपद्यन्ते * इति । हृदयोपासनेऽपि उपासकसंकल्पाधीनाङ्गप्रत्यङ्गरूपादिमत्त्वमुक्तं * हृदि संकल्प्य यद्रूपमित्यादिना । अथवा संकल्पनामयमिति—स्वसंकल्पकृतमिति; इच्छागृहीतेत्यादि । यथोक्तम् हृद्योगे * बहिराराधनार्थं तु या मूर्तिरवतिष्ठते । तदाकारं विचिन्त्याथ यजेत्सर्वेश्वरं हरिम् ॥ इति ॥ ४ ॥

विनिर्जग्मुरिति ॥ धाम—धाम्नां तेजसां स्थानं, तेजो वा ॥ ५—६ ॥

इष्ट्वेति ॥ अनन्तादिम्—आद्यन्तरहितम् ॥ ७, ८ ॥

सर्वात्मेति ॥ सर्वस्यात्मा सर्वभूतेष्ववस्थितः—व्योमवद्वितत्य व्यापी, नाग्निवाय्वादिवद्विच्छिद्यते ॥ ९—११ ॥ योऽनन्त इति ॥ शेखरेति—शेखरसंनिवेशेन स्थिताम् । सः—रामः ॥ १२ ॥

पितृपुत्रेति ॥ अत्र पित्रादिरूपेण परिणता गुणमयी विचित्रकार्यकरत्वेन मायेत्युच्यते ॥ १३ ॥

तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते । योगमायाममेयाय तस्मै विद्यात्मने नमः ॥ १४ ॥
यज्वभिर्यज्ञपुरुषो वासुदेवश्च सात्त्वतैः । वेदान्तवेदिभिर्विष्णुः प्रोच्यते यो नतोऽस्मि तम् ॥ १५ ॥
यथा यत्र जगद्धाम्नि धातर्येतत्प्रतिष्ठितम् । सदसत्तेन सत्येन मय्यसौ यातु सौम्यताम् ॥ १६ ॥
स्मृते सकलकल्याणभाजनं यत्र जायते । पुरुषस्तमजं नित्यं व्रजामि शरणं हरिम् ॥ १७ ॥

श्रीपराशरः—

इत्थं संचिन्तयन्विष्णुं भक्तिनम्रात्ममानसः । अक्रूरो गोकुलं प्राप्तः किंचित्सूर्ये विराजति ॥ १८ ॥
स ददर्श तदा कृष्णमादावादोहने गवाम् । वत्समध्यगतं फुल्लनीलोत्पलदलच्छविम् ॥ १९ ॥
प्रफुल्लपद्मपत्राक्षं श्रीवत्साङ्कितवक्षसम् । प्रलम्बबाहुमायामतुङ्गोरस्स्थलमुन्नसम् ॥ २० ॥
सविलासस्मिताधारं बिभ्राणं मुखपङ्कजम् । तुङ्गरक्तनखं पद्भ्यां धरण्यां सुप्रतिष्ठितम् ॥ २१ ॥
बिभ्राणं वाससी पीते वन्यपुष्पविभूषितम् । सेन्दुनीलाचलाभं तं सिताम्भोजावतंसकम् ॥ २२ ॥
हंसकुन्देन्दुधवलं नीलाम्बरधरं द्विज । तस्यानु बलभद्रं च ददर्श यदुनन्दनम् ॥ २३ ॥
प्रांशुमुत्तुङ्गबाह्वंसं विकासिमुखपंकजम् । मेघमालापरिवृतं कैलासाद्रिमिवापरम् ॥ २४ ॥
तौ दृष्ट्वा विकसद्वक्त्रसरोजस्स महामतिः । पुलकाञ्चितसर्वाङ्गस्तदाऽक्रूरोऽभवन्मुने ॥ २५ ॥
तदेतत्परमं धाम तदेतत्परमं पदम् । भगवद्वासुदेवांशो द्विधा योऽयं व्यवस्थितः ॥ २६ ॥

साफल्यमक्ष्णोर्युगमेतदत्र दृष्टे जगद्धातरि यातमुच्चैः ।
अप्यङ्गमेतद्भगवत्प्रसादात्तदङ्गसङ्गे फलवन्मम स्यात् ॥ २७ ॥
अप्येष पृष्ठे मम हस्तपद्मं करिष्यति श्रीमदनन्तमूर्तिः ।
यस्याङ्गुलिस्पर्शहताखिलाघैरवाप्यते सिद्धिर(नाश)पास्तदोषा ॥ २८ ॥

---

तरतीति ॥ सैव भगवत्स्वरूपतिरोधायकत्वादन्यथाज्ञानजनकत्वाच्चाविद्येत्युच्यते ॥ १४ ॥

यज्वभिरिति ॥ सात्वतैः—भगवच्छास्त्रनिष्ठैः ॥ १५—१७ ॥

इत्थमिति ॥ भक्तिनम्रात्ममानसः—भक्तिप्रह्वशरीरान्तःकरणः । किंचित्सूर्ये विराजति—अस्तासन्ने ॥ १८ ॥

स इति ॥ आदोहने—दोहस्थाने ॥ १९ ॥

प्रफुल्लेति ॥ आयामतुङ्गोरस्स्थलं—विशालपीनोरस्कमित्यर्थः ॥ २०, २१ ॥

बिभ्राणमिति ॥ सेन्दुनीलाचलाभं—सिताम्भोजावतंसवत्वात् ॥ २२, २३ ॥

प्रांशुमिति ॥ उत्तुङ्गबाह्वंसं—पीनबाह्वंसम् ॥ २४, २५ ॥

तदेतदिति ॥ धाम—तेजः । परमं पदं—परमं प्राप्यम् । पद्यते इति पदं, भगवद्वासुदेवांशत्वात् ॥ २६ ॥

साफल्यमिति ॥ अङ्गं फलवदपि स्यादित्याशंसा ॥ २७ ॥

भगवत्पाणिपद्मस्य शुद्धिशौर्यौदार्याण्याह—अप्येष इत्यादिश्लोकत्रयेण ॥ अप्येष इति ॥ श्रीमदिति हस्तपद्मविशेषणम् । यस्येति च तस्यैव निर्देशः । अनाशदोषा—नाशदोषाभ्यां हीना । अपास्तदोषेति च पाठः ॥ २८ ॥

येनाग्निविद्युद्रविरश्मिमालाकरालमत्युग्रमपेतचक्रम् ।
चक्रं घ्नता दैत्यपतेर्हृतानि दैत्याङ्गनानां नयनाञ्जनानि ॥ २९ ॥
यत्राम्बु विन्यस्य बलिर्मनोज्ञानवाप भोगान्वसुधातलस्थः ।
तथाऽमरत्वं त्रिदशाधिपत्वं मन्वन्तरं पूर्णमपेतशत्रुः ॥ ३० ॥
अप्येष मां कंसपरिग्रहेण दोषास्पदीभूतमदोषदुष्टम् ।
कर्ताऽवमानोपहतं धिगस्तु तज्जन्म यत्साधुबहिष्कृतस्य ॥ ३१ ॥
ज्ञानात्मकस्यामलसत्त्वराशेरपेतदोषस्य सदा स्फुटस्य ।
किं वा जगत्यत्र समस्तपुंसामज्ञातमस्यास्ति हृदि स्थितस्य ॥ ३२ ॥
तस्मादहं भक्तिविनम्रचेता व्रजामि सर्वेश्वरमीश्वराणाम् ।
अंशावतारं पुरुषोत्तमस्य ह्यनादिमध्यान्तमजस्य विष्णोः ॥ ३३ ॥

इति श्रीविष्णुपुराणे पंचमेंशे सप्तदशोऽध्यायः ॥ १७ ॥

## अथाष्टादशोऽध्यायः



श्रीपराशरः—

चिन्तयन्निति गोविन्दमुपगम्य स यादवः । अक्रूरोऽस्मीति चरणौ ननाम शिरसा हरेः ॥ १ ॥
सोऽप्येनं ध्वजवज्राब्जकृतचिह्नेन पाणिना । संस्पृश्याकृष्य च प्रीत्या सुगाढं परिषस्वजे ॥ २ ॥
कृतसंवन्दनौ तेन यथावद्बलकेशवौ । ततः प्रविष्टौ संहृष्टौ तमादायात्ममन्दिरम् ॥ ३ ॥
सह ताभ्यां तदाऽक्रूरः कृतसं(वा)वन्दनादिकः । भुक्तभोज्यो यथान्याय्यमाचचक्षे ततस्तयोः ॥४॥

---

येनेति ॥ चक्रं—बलम् । अपेतचक्रमिति क्रियाविशेषणम् । अपास्य चक्रमिति च पाठः ॥ २९,३० ॥

अप्येष इति ॥ अदोषदुष्टं मां कंसपरिग्रहेण दोषास्पदीभूतमपि । कर्ता करिष्यतीत्यन्वयः । अवमानेत्यादि वाक्यान्तरम् ॥ ३१ ॥

भगवान् सर्वज्ञत्वान्मां निरागसं ज्ञात्वा स्वीकरिष्यतीत्याह—ज्ञानात्मकस्येति ॥ जीवस्य ज्ञानात्मकत्वेऽपि रजस्तमोमूलरागादिदोषतिरोहितस्वरूपत्वात्, ततो भगवन्तं व्यावर्तयति—अमलसत्त्वेत्यादिना । सदा स्फुटस्य—अतिरोहितस्वरूपस्य ॥ ३२, ३३ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमेंशे सप्तदशोऽध्यायः ॥ १७ ॥

## अथाष्टादशोऽध्यायः



॥ १–३ ॥ सहेति ॥ कृतसंवादनादिकः—(कृतसंवादादिकः) सुसत्कृतः ॥ ४–७ ॥

यथा निर्भर्त्सितस्तेन कंसेनानकदुंदुभिः । यथा च देवकी देवी दानवेन दुरात्मना ॥ ५ ॥
उग्रसेने यथा कंसस्स दुरात्मा च वर्तते । यं चैवार्थं समुद्दिश्य कंसेन तु विसर्जितः ॥ ६ ॥
तत्सर्वं विस्तराच्छ्रुत्वा भगवान्देवकीसुतः । उवाचाखिलमप्येतज्ज्ञातं दानपते मया ॥ ७ ॥
करिष्ये तन्महाभाग यदत्रौपयिकं मतम् । विचिन्त्यं नान्यथैतत्ते विद्धि कंसं हतं मया ॥ ८ ॥
अहं रामश्च मथुरां श्वो यास्यावस्सह त्वया । गोपवृद्धाश्च यास्यन्ति ह्यादायोपायनं बहु ॥ ९ ॥
निशेयं नीयतां वीर न चिन्तां कर्तुमर्हसि । त्रिरात्राभ्यन्तरे कंसं निहनिष्यामि सानुगम् ॥ १० ॥

श्रीपराशरः—

समादिश्य ततो गोपानक्रूरोऽपि च केशवः । सुष्वाप बलभद्रश्च नन्दगोपगृहे ततः ॥ ११ ॥
ततः प्रभाते विमले कृष्णरामौ महाद्युती । अक्रूरेण समं गन्तुमुद्यतौ मथुरां पुरीम् ॥ १२ ॥
दृष्ट्वा गोपीजनस्सास्रः श्लथद्वलयबाहुकः । निशश्वासातिदुःखार्तः प्राह चेदं परस्परम् ॥ १३ ॥
मथुरां प्राप्य गोविन्दः कथं गोकुलमेष्यति । नगरस्त्रीकलालापमधु श्रोत्रेण पास्यति ॥ १४ ॥
विलासवाक्यपानेषु नागरीणां कृतास्पदम् । चित्तमस्य कथं भूयो ग्राम्यगोपीषु यास्यति ॥ १५ ॥
सारं समस्तगोष्ठस्य विधिना हरता हरिम् । प्रहृतं गोपयोषित्सु निर्घृणेन दुरात्मना ॥ १६ ॥
भावगर्भस्मितं वाक्यं विलासललिता गतिः । नागरीणामतीवैतत्कटाक्षेक्षितमेव च ॥ १७ ॥
ग्राम्यो हरिरयं तासां विलासनिगडै(र्य)र्युतः । भवतीनां पुनः पार्श्वं कया युक्त्या समेष्यति ॥ १८ ॥
एषैष रथमारुह्य मथुरां याति केशवः । क्रूरेणाक्रूरकेणात्र निर्घृणेन प्रतारितः ॥ १९ ॥
किं न वेत्ति नृशंसोऽयमनुरागपरं जनम् । येनैवमक्ष्णोराह्लादं नयत्यन्यत्र नो हरिम् ॥ २० ॥
एष रामेण सहितः प्रयात्यत्यन्तनिर्घृणः । रथमारुह्य गोविन्दस्त्वर्यतामस्य वारणे ॥ २१ ॥

---

करिष्य इति ॥ औपयिकं—युक्तम् ॥ ८–१२ ॥

दृष्ट्वेति ॥ श्लथद्वलयत्वं विरहकार्श्यात् ॥ १३, १४ ॥

विलासेति ॥ विलासवाक्यपानेषु ग्राम्यगोपीषु—अविदग्धगोपीषु ॥ १५–१६ ॥

भावगर्भेति ॥ भावगर्भस्मितमिति वाक्यविशेषणम् । नागरीणामेतद्वाक्यादिकम् अतीव—पूजितम् । भूतमस्मदीयं वाक्यादिकम् । अतिक्रान्तमिति वा ॥ १७ ॥

ग्राम्य इति ॥ ग्राम्यः—ग्रामे भवः, यतः—यन्त्रितः । अग्राम्यत्वादपूर्वत्वेन नागरीणां विलासादि भनीयं भवति ॥ १८ ॥

एषैष इति ॥ अक्रूरकेणेति कुत्सायां कप्रत्ययः । अत्र—व्रजे । निराशेन—निरनुरागेण ॥ १९ ॥

किमित्यादि ॥ अयं स्वयं निरनुरागोऽस्तु; अनुरागपरमपि जनं किं न वेत्ति येनानुरक्तानामस्माकम- राह्लादकरं हरिमन्यत्र नयति ॥ २०, २१ ॥

गुरूणामग्रतो वक्तुं किं ब्रवीथ न नः क्षमम् । गुरवः किं करिष्यन्ति दग्धानां विरहाग्निना ॥२२॥
नन्दगोपमुखा गोपा गन्तुमेते समुद्यताः । नोद्यमं कुरुते कश्चिद्गोविन्दविनिवर्तने ॥ २३ ॥
सुप्रभाताऽद्य रजनी मथुरावासयोषिताम् । पास्यन्त्यच्युतवक्त्राब्जं यासां नेत्रालिपंक्तयः ॥ २४॥
धन्यास्ते पथि ये कृष्णमितो यान्त्यनिवारिताः । उद्वहिष्यन्ति पश्यन्तस्स्वदेहं पुलकाञ्चितम् ॥ २५॥
मथुरानगरीपौरनयनानां महोत्सवः । गोविन्दावयवैर्दृष्टैरतीवाद्य भविष्यति ॥ २६ ॥
को नु स्वप्नस्सभाग्याभिर्दृष्टस्ताभिरधोक्षजम् । विस्तारिकान्तिनयना या द्रक्ष्यन्त्यनिवारिताः ॥२७॥
अहो गोपीजनस्यास्य दर्शयित्वा महानिधिम् । उत्कृत्तान्यद्य नेत्राणि विधिनाऽकरुणात्मना ॥२८॥
अनुरागेण शैथिल्यमस्मासु (व्रजता हरेः) व्रजिते हरौ । शैथिल्यमुपयान्त्याशु करेषु वलयान्यपि ॥२९॥
अक्रूरः क्रूरहृदयश्शीघ्रं प्रेरयते हयान् । एवमार्तासु योषित्सु कृपा कस्य न जायते ॥ ३० ॥
एष कृष्णरथस्योच्चैश्चक्ररेणुर्निरीक्ष्यताम् । दूरीभूतो हरिर्येन सोऽपि रेणुर्न लक्ष्यते ॥ ३१ ॥

श्रीपराशरः—

इत्येवमतिहार्देन गोपीजननिरीक्षितः । तत्याज व्रजभूभागं सह रामेण केशवः ॥ ३२ ॥
गच्छन्तो जवनाश्वेन रथेन यमुनातटम् । प्राप्तमध्याह्नसमये रामाक्रूरजनार्दनाः ॥ ३३ ॥
अथाह कृष्णमक्रूरो भवद्भ्यां तावदास्यताम् । यावत्करोमि कालिन्द्या आह्निकार्हणमम्भसि ॥३४॥

श्रीपराशरः—

तथेत्युक्तस्ततस्स्नातस्स्वाचान्तस्स महामतिः । दध्यौ ब्रह्म परं विप्र प्रविष्टो यमुनाजले ॥ ३५ ॥
फणासहस्रमालाढ्यं बलभद्रं ददर्श सः । कुन्दमालाङ्गमुन्निद्रपद्मपत्रायतेक्षणम् ॥ ३६ ॥
वृतं वासुकिरम्भाद्यैर्महद्भिः पवनाशिभिः । संस्तूयमानमुद्गन्धिवनमालाविभूषितम् ॥ ३७ ॥
दधानमसिते वस्त्रे चारुरूपावतंसकम् । चारुकुण्डलिनं भान्तमन्तर्जलतले स्थितम् ॥ ३८ ॥
तस्योत्सङ्गे घनश्याममाताम्रायतलोचनम् । चतुर्बाहुमुदाराङ्गं चक्राद्यायुधभूषणम् ॥ ३९ ॥
पीते वसानं वसने चित्रमाल्योपशोभितम् । शक्रचापतडिन्मालाविचित्रमिव तोयदम् ॥ ४० ॥

---

गुरूणामित्यादि ॥ त्वर्यतामस्य वारणे इति नो गुरूणामग्रतो वक्तुं न क्षममिति किं ब्रवीथ । किं–किमर्थम् । विरहाग्निना दग्धानां गुरवः किं करिष्यन्ति ॥ २२, २३ ॥

सुप्रभातेति ॥ मथुरा आवासो यासां ताः मथुरावासाः ॥ २४ ॥

धन्या इति ॥ ये अनिवारिता इतो यान्ति, या अनिवारिता इतो यान्ति ते धन्याः ताः धन्याः । ते हि पथि कृष्णं पश्यन्तः, ता हि पथि कृष्णं पश्यन्त्यः, पुलकाञ्चितं स्वदेहमुद्वहिष्यन्ति ॥ २५–२८ ॥

अनुरागेणेति ॥ हरौ अस्मासु शैथिल्यं व्रजति सति अस्माकं करेषु वलयान्यपि शैथिल्यमुपयान्ति ॥ २९–३३ ॥ अथेति ॥ आह्निकार्हणं–नित्यं माध्याह्निकाराधनम् ॥ ३४–४६ ॥

श्रीवत्सवक्षसं चारुस्फुरन्मकरकुण्डलम् । ददर्श कृष्णमक्लिष्टं पुण्डरीकावतंसकम् ॥ ४१ ॥

सनन्दनाद्यैर्मुनिभिस्सिद्धयोगैरकल्मषैः । संचिन्त्यमानं तत्रस्थैर्नासाग्रन्यस्तलोचनैः ॥ ४२ ॥

बलकृष्णौ तथाऽक्रूरः प्रत्यभिज्ञाय विस्मितः । अचिन्तयद्रथाच्छीघ्रं कथमत्रागताविति ॥ ४३ ॥

विवक्षोस्स्तंभयामास वाचं तस्य जनार्दनः । ततो निष्क्रम्य सलिलाद्रथमभ्यागतः पुनः ॥ ४४ ॥

ददर्श तत्र चैवोभौ रथस्योपरि निष्ठितौ । रामकृष्णौ यथापूर्वं मनुष्यवपुषाऽन्वितौ ॥ ४५ ॥

निमग्नश्च पुनस्तोये ददर्श च तथैव तौ । संस्तूयमानौ गंधर्वैर्मुनिसिद्धमहोरगैः ॥ ४६ ॥

ततो विज्ञातसद्भावस्स तु दानपतिस्तदा । तुष्टाव सर्वविज्ञानमयमच्युतमीश्वरम् ॥ ४७ ॥

[अ]क्रूरः—

सन्मात्ररूपिणोऽचिन्त्यमहिम्ने परमात्मने । व्यापिने नैकरूपैकस्वरूपाय नमोनमः ॥ ४८ ॥

सर्वरूपाय तेऽचिन्त्यहविर्भूताय ते नमः । नमो विज्ञानपाराय पराय प्रकृतेः प्रभो ॥ ४९ ॥

भूतात्मा चेन्द्रियात्मा च प्रधानात्मा तथा भवान् ।
आत्मा च परमात्मा च त्वमेकः पञ्चधा स्थितः ॥ ५० ॥

प्रसीद सर्व सर्वात्मन् क्षराक्षरमयेश्वर । ब्रह्मविष्णुशिवाख्याभिः कल्पनाभिरुदीरितः ॥ ५१ ॥

अनाख्येयस्वरूपात्मन्ननाख्येयप्रयोजन । अनाख्येयाभिधानं त्वां नतोऽस्मि परमेश्वर ॥ ५२ ॥

---

तत इति ॥ सर्वविज्ञानमयं—सर्वस्य विज्ञानप्रचुरं, सर्वज्ञमित्यर्थः ॥ ४७ ॥

सन्मात्ररूपिण इति ॥ सन्मात्ररूपिणे । मात्रचा सत्ताविरोध्यपक्षयादीनां व्यावृत्तिः, न त्वविरोधिनां [ज्ञ]त्वादीनाम् । नैकरूपैकस्वरूपाय—कार्यावस्थायामनेकरूपाय कारणावस्थायामेकरूपाय ॥ ४८ ॥

सर्वरूपायेति ॥ विज्ञानपाराय—विज्ञानस्य पाराय, विज्ञानपर्यवसानाय । अस्मात्परं ज्ञेयं नास्ती[त्य]र्थः । अविज्ञातपारायेति वा पाठः ॥ ४९ ॥

भूतात्मेति ॥ भूतात्मा—शब्दादिसहितपञ्चभूतशरीरकः । पञ्चभूतानामात्मेति वा । एवमेकादशे[न्द्र]यात्मा । एष्वेव बुद्ध्यहंकारयोरन्तर्भावः । प्रधानात्मा—अव्यक्तात्मा । आत्मा—समष्टिव्यष्टिमुक्तरूपः । परमात्मा—[आ]नन्दमयः । पञ्चधेति । * त्रिविधं ब्रह्ममेतदितिवत् ॥ ५० ॥

प्रसीदेति ॥ उक्तप्रकारेण क्षराक्षरमयब्रह्मेति आद्या—संज्ञा, सैव कल्पना ॥ ५१ ॥

अनाख्येयेति ॥ अनाख्येयस्वरूपात्मन्—अनन्ततया सामस्त्येनाभिधातुमशक्यं स्वरूपं निरूपकगुण[गण]ो यस्यात्मनः सोऽनाख्येयस्वरूपात्मा, तत्संबुद्धिः । अनाख्येयप्रयोजन—उभयविभूत्यानन्दात्मकं प्रयोजनमान[न्त्य]ादाख्यातुमशक्यं यस्य सः, तथाभूत । अनाख्येयाभिधानम्—अनन्तनामधेयत्वात्परमकारणत्वाच्च ॥ ५२ ॥

न यत्र नाथ विद्यन्ते नामजात्यादिकल्पनाः । तद्ब्रह्म परमं नित्यमविकारि भवानज(ः) ॥ ५३ ॥

न कल्पनामृतेऽर्थस्य सर्वस्याधिगमो यतः । ततः कृष्णाच्युतानन्तविष्णुसंज्ञाभिरीड्यते ॥ ५४ ॥

सर्वार्थास्त्वमज विकल्पनाभिरेतैर्देवाद्यैर्भवति हि यैरनन्तविश्वम् ।
विश्वात्मा त्वमिति विकारहीनमेतत्सर्वस्मिन्न हि भवतोऽस्ति किंचिदन्यत् ॥ ५५ ॥

त्वं ब्रह्मा पशुपतिरर्यमा विधाता धाता त्वं त्रिदशपतिस्समीरणोऽग्निः ।
तोयेशो धनपतिरन्तकस्त्वमेको भिन्नार्थैर्जगदभिपासि शक्तिभेदैः ॥ ५६ ॥

विश्वं भवान्सृजति सूर्यगभस्तिरूपो विश्वेश ते गुणमयोऽयमतः प्रपञ्चः ।
रूपं परं सदिति वाचकमक्षरं यज्ज्ञानात्मने सदसते प्रणतोऽस्मि तस्मै ॥ ५७ ॥

ॐ नमो वासुदेवाय नमस्संकर्षणाय च । प्रद्युम्नाय नमस्तुभ्यमनिरुद्धाय ते नमः ॥ ५८ ॥

इति श्रीविष्णुपुराणे पंचमेंऽशेऽष्टादशोऽध्यायः ॥ १८ ॥

---

कर्मोपाधिकनामरूपव्याकरणाविषयत्वेन जीवदेवासुरपशुमनुजादिकल्पना नेत्याह—न यत्रेति ॥ शब्द-जातिगुणक्रियाद्रव्यैर्वस्तुनो विशेषणं कल्पना । * आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म * इति श्रुतिः । ते—नामरूपे । अन्तरा—नामरूपास्पृष्टं यत् तद्ब्रह्मेति ॥ ५३ ॥

तथापि जगदुपकारायोपासकानुग्रहाय च स्वेच्छागृहीतदेवादिविविधरूपनामा ब्रह्मादिभिस्तत्तन्नामभिः स्तूयस इत्याह—न कल्पनामिति ॥ कृष्णादिनामग्रहणं भगवदवतारादिष्वन्येषामपि नाम्नामुपलक्षणम् । मोक्षधर्मे चतुर्मुखस्यानिरुद्धोपासनमुक्तम् * यस्यावताररूपाणि समर्चन्ति दिवौकसः * इति चास्मिन् पुराणे ॥ ५४ ॥

सर्वार्था इति ॥ यैरेतैर्देवाद्यैर्विकल्पनाभूतैरर्थैर्विश्वं भवति ते सर्वार्थास्त्वं विकारहीनमेतदात्मवस्तु च त्वम् । अतो विश्वात्मा त्वमिति सर्वस्मिन् भवतोऽन्यन्न किंचिदस्तीति योजना ॥ ५५ ॥

त्वं ब्रह्मेति ॥ भिन्नार्थैः—भिन्नकार्यैः । शक्तिभेदैः—ब्रह्मादिरूपभेदैः ॥ ५६ ॥

विश्वमिति ॥ सूर्यगभस्तिरूपो भूत्वा वृष्टिद्वारा विश्वं सृजति । प्रपञ्चश्च ते शेषभूतः । सदिति पदं यस्य वाचकं तत्सदिति वाचकम् । अक्षरं यत्परं रूपम्—* ॐ तत्सदिति हि गीतम् । ज्ञानात्मने—ज्ञानस्वरूपाय । सदसते—चिदचिदधिष्ठात्रे । तस्मै रूपाय नम इत्यन्वयः ॥ ५७ ॥

ओमिति ॥ ॐ नमो वासुदेवायेत्यादिः चतुर्व्यूहमन्त्रः ॥ ५८ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशेऽष्टादशोऽध्यायः ॥ १८ ॥

## अथैकोनविंशोऽध्यायः

श्रीपराशरः—

एवमन्तर्जले विष्णुमभिष्टूय स यादवः । अर्चयामास सर्वेशं धूपपुष्पैर्मनोमयैः ॥ १ ॥
परित्यक्तान्यविषयो मनस्तत्र निवेश्य सः । ब्रह्मभूते चिरं स्थित्वा विरराम समाधितः ॥ २ ॥
कृतकृत्यमिवात्मानं मन्यमानो महामतिः । आजगाम रथं भूयो निर्गम्य यमुनाम्भसः ॥ ३ ॥
ददर्श रामकृष्णौ च यथापूर्वमवस्थितौ । विस्मिताक्षस्तदाऽक्रूरस्तं च कृष्णोऽभ्यभाषत ॥ ४ ॥

श्रीकृष्णः—

नूनं ते दृष्टमाश्चर्यमक्रूर यमुनाजले । विस्मयोत्फुल्लनयनो भवान्संलक्ष्यते यतः ॥ ५ ॥

अक्रूरः—

अन्तर्जले यदाश्चर्यं दृष्टं तत्र मयाऽच्युत । तदत्रापि हि पश्यामि मूर्तिमत्पुरतः स्थितम् ॥ ६ ॥
जगदेतन्महाश्चर्यरूपं यस्य महात्मनः । तेनाश्चर्यवरेणाहं भवता कृष्ण संगतः ॥ ७ ॥
तत्किमेतेन मथुरां यास्यामो मधुसूदन । बिभेमि कंसाद्धिग्जन्म परपिण्डोपजीविनाम् ॥ ८ ॥
इत्युक्त्वा चोदयामास स हयान् वातरंहसः । संप्राप्तश्चापि सायाह्ने सोऽक्रूरो मथुरां पुरीम् ॥ ९ ॥
विलोक्य मथुरां कृष्णं रामं चाह स यादवः । पद्भ्यां यातं महावीरौ रथेनैको विशाम्यहम् ॥१०॥
गन्तव्यं वसुदेवस्य नो भवद्भ्यां तथा गृहम् । युवयोर्हि कृते वृद्धस्स कंसेन निरस्यते ॥ ११ ॥

श्रीपराशरः—

इत्युक्त्वा प्रविवेशाथ सोऽक्रूरो मथुरां पुरीम् । प्रविष्टौ रामकृष्णौ च राजमार्गमुपागतौ ॥ १२ ॥
स्त्रीभिर्नरैश्च सानन्दं लोचनैरभिवीक्षितौ । जग्मतुर्लीलया वीरौ मत्तौ बालगजाविव ॥ १३ ॥
भ्रममाणौ ततो दृष्ट्वा रजकं रङ्गकारकम् । अयाचेतां सुरूपाणि वासांसि रुचिराणि तौ ॥ १४ ॥
कंसस्य रजकस्सोऽथ प्रसादारूढविस्मयः । बहून्याक्षेपवाक्यानि प्राहोच्चै रामकेशवौ ॥ १५ ॥
ततस्तलप्रहारेण कृष्णस्तस्य दुरात्मनः । पातयामास रोषेण रजकस्य शिरो भुवि ॥ १६ ॥
हत्वाऽऽदाय च वस्त्राणि पीतनीलाम्बरौ ततः । कृष्णरामौ मुदा युक्तौ मालाकारगृहं गतौ ॥१७॥
विकासिनेत्रयुगलो मालाकारोऽतिविस्मितः । एतौ कस्य सुतौ यातौ मैत्रेयाचिन्तयत्तदा ॥ १८ ॥

---

## अथैकोनविंशोऽध्यायः

॥ १–७ ॥ तत्किमिति ॥ तत्किमेतेन—अस्थाने तत्त्ववादेन किम्? मे—परसेवकस्य । बिभेमि—विलम्बे कंसः कुप्येदिति । परपिण्डोपजीविनां जन्म धिक् यत्साक्षात्कृतेऽपि भगवति न संभाषितुं लभ्यते ॥ ८–१३ ॥

भ्रममाणाविति ॥ रङ्गकारकम् । कुसुंभादिना वस्त्राणां रञ्जनं रङ्गः । राग इति केनचिदनवहितेन व्याख्यातम् । रञ्जेरुपधालोपस्मरणात् । तस्मादार्षत्वात्साधुत्वमिति ॥ १४ ॥

कंसस्येति ॥ विस्मयः—विशिष्टः स्मयः दर्पः ॥ १५–२१ ॥

पीतनीलाम्बरधरौ तौ दृष्ट्वाऽतिमनोहरौ । स तर्कयामास तदा भुवं देवावुपागतौ ॥ १९ ॥
विकासिमुखपद्माभ्यां ताभ्यां पुष्पाणि याचितः । भुवं विष्टभ्य हस्ताभ्यां पस्पर्श शिरसा महीम् ॥२०॥
प्रसादपरमौ नाथौ मम गेहमुपागतौ । धन्योऽहमर्चयिष्यामीत्याह (माल्योऽप) तौ माल्यजीवनः ॥२१॥
ततः प्रहृष्टवदनस्तयोः पुष्पाणि कामतः । चारूण्येतान्यथैतानि प्रददौ स प्रलोभयन् ॥ २२ ॥
पुनःपुनः प्रणम्योभौ मालाकारो नरोत्तमौ । ददौ पुष्पाणि चारूणि गन्धवन्त्यमलानि च ॥२३॥
मालाकाराय कृष्णोऽपि प्रसन्नः प्रददौ वरान् । श्रीस्त्वां मत्संश्रया भद्र न कदाचित्त्यजिष्यति ॥२४॥
बलहानिर्न ते सौम्य धनहानिरथापि वा । यावद्दिनानि तावच्च न नशिष्यति संततिः ॥ २५ ॥
भुक्त्वा च विपुलान्भोगांस्त्वमन्ते मत्प्रसादतः । ममानुस्मरणं प्राप्य दिव्यं लोकमवाप्स्यसि ॥ २६ ॥
धर्मे मनश्च ते भद्र सार्वकालं भविष्यति । युष्मत्सन्ततिजातानां दीर्घमायुर्भविष्यति ॥ २७ ॥
नोपसर्गादिकं दोषं युष्मत्सन्ततिसंभवः । अवाप्स्यति महाभाग यावत्सूर्यो भविष्यति ॥ २८ ॥

श्रीपराशरः—

इत्युक्त्वा तद्गृहात्कृष्णो बलदेवसहायवान् । निर्जगाम मुनिश्रेष्ठ मालाकारेण पूजितः ॥ २९ ॥

इति श्रीविष्णुपुराणे पंचमेंशे एकोनविंशोऽध्यायः ॥ १९ ॥

---

## अथ विंशोऽध्यायः

श्रीपराशरः—

राजमार्गे ततः कृष्णस्सानुलेपनभाजनाम् । ददर्श कुब्जामायान्तीं नवयौवनगोचराम् ॥ १ ॥
तामाह ललितं कृष्णः कस्येदमनुलेपनम् । भवत्या नीयते सत्यं वदेन्दीवरलोचने ॥ २ ॥
सकामेनेव सा प्रोक्ता सानुरागा हरिं प्रति । प्राह सा ललितं कुब्जा तद्दर्शनबलात्कृता ॥ ३ ॥

---

तत इति ॥ एतानि चारूणीति कतिचित्पूर्वं दत्त्वा पुनरेतान्यतिचारूणीति विलोभयन् ददौ ॥२२-२३॥
मालाकारायेति ॥ श्रीः मत्संश्रयेति स्वस्य लक्ष्मीपतित्वं भक्तस्य प्रकटयति ॥ २४ ॥
बलहानिरिति ॥ यावद्दिनानि—यावत्सूर्यः ॥ २५,२६ ॥
धर्म इति ॥ सार्वकालं—सर्वकालसंबंधि । युष्मदिति बहुत्वं तद्बन्धुबहुत्वविवक्षया ॥ २७-२९ ॥
इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे एकोनविंशोऽध्यायः ॥ १९ ॥

---

## अथ विंशोऽध्यायः

॥ १ ॥ तामिति ॥ ललितं—सविलासम् ॥ २ ॥ बलात्कृता—वशीकृता ॥ ३ ॥

कान्त कस्मान्न जानासि कंसेन विनियोजिताम् । नैकवक्रेति विख्यातामनुलेपनकर्मणि ॥ ४ ॥
नान्यपिष्टं हि कंसस्य प्रीतये ह्यनुलेपनम् । भवाम्यहमतीवास्य प्रसादधनभाजनम् ॥ ५ ॥

श्रीकृष्ण उवाच :—

सुगन्धमेतद्राजार्हं रुचिरं रुचिरानने । आवयोर्गात्रसदृशं दीयतामनुलेपनम् ॥ ६ ॥

श्रीपराशरः—

श्रुत्वैतदाह सा कुब्जा गृह्यतामिति सादरम् । अनुलेपनं च प्रददौ गात्रयोग्यमथोभयोः ॥ ७ ॥
भक्तिच्छेदानुलिप्ताङ्गौ ततस्तौ पुरुषर्षभौ । सेन्द्रचापौ व्यराजेतां सितकृष्णाविवाम्बुदौ ॥ ८ ॥
ततस्तां चुबुके शौरिरुल्लाघनविधानवित् । उत्पाट्य तोलयामास द्व्यङ्गुलेनाग्रपाणिना ॥ ९ ॥
चकर्ष पद्भ्यां च तदा ऋजुत्वं केशवोऽनयत् । ततस्सा ऋजुतां प्राप्ता योषितामभवद्वरा ॥ १० ॥
विलासललितं प्राह प्रेमगर्भभरालसम् । वस्त्रे प्रगृह्य गोविन्दं मम गेहं व्रजेति वै ॥ ११ ॥
एवमुक्तस्तया शौरी रामस्यालोक्य चाननम् । प्रहस्य कुब्जां तामाह नैकवक्रामनिन्दिताम् ॥ १२ ॥
आयास्ये भवतीगेहमिति तां प्रहसन्हरिः । विससर्ज जहासोच्चै रामस्यालोक्य चाननम् ॥ १३ ॥
भक्तिभेदानुलिप्ताङ्गौ नीलपीताम्बरौ तु तौ । धनुश्शालां ततो यातौ चित्रमाल्योपशोभितौ ॥ १४ ॥
आयागं तद्धनूरत्नं ताभ्यां पृष्टैस्तु रक्षिभिः । आख्याते सहसा कृष्णो गृहीत्वाऽपूरयद्धनुः ॥ १५ ॥
ततः पूरयता तेन भज्यमानं बलाद्धनुः । चकार सुमहच्छब्दं मथुरा येन पूरिता ॥ १६ ॥
अनुयुक्तौ ततस्तौ तु भग्ने धनुषि रक्षिभिः । रक्षिसैन्यं निहत्योभौ निष्क्रान्तौ कार्मुकालयात् ॥ १७ ॥
अक्रूरागमवृत्तान्तमुपलभ्य महद्धनुः । भग्नं श्रुत्वा च कंसोऽपि प्राह चाणूरमुष्टिकौ ॥ १८ ॥

कंसः—

गोपालदारकौ प्राप्तौ भवद्भ्यां तौ ममाग्रतः । मल्लयुद्धेन हन्तव्यौ मम प्राणहरौ हि तौ ॥ १९ ॥

---

कान्तेति ॥ अनुलेपनकर्मणि—गन्धवस्तुसाधने, नियुक्ताम् ॥ ४–७ ॥

भक्तिच्छेदेति ॥ भक्तिच्छेदेन—पत्रभंगिरचनया ॥ ८ ॥

तत इति ॥ उल्लाघनम्—ऋजूकरणम् । उत्पाट्य—उन्नमय्य, ग्रंथिभेदं कृत्वा, तोलयामास । तोलनं—कंपनम् ॥ ९ ॥ चकर्षेति ॥ पद्भ्यां चकर्ष—पादयोः पद्भ्यामाक्रान्तवान् ॥ १० ॥

विलासेति ॥ प्रेमगर्भभरालसम्—अन्तर्गर्भितप्रेमातिशयमंथरम् ॥ ११, १२ ॥

आयास्य इति ॥ प्रहसन्—प्रसादेन हासं कुर्वन् । अस्मदनुग्रहमनुरागं मत्वा इयं मुह्यतीति रामं प्रत्युच्चैर्जहास ॥ १३, १४ ॥

आयागमिति ॥ आयागम्—आभिमुख्येन यागोद्देश्यम् ॥ १५, १६ ॥

अनुयुक्ताविति ॥ अनुयुक्तौ—अभियुक्तौ ॥ १७–१९ ॥

नियुद्धे तद्विनाशेन भवद्भ्यां तोषितो ह्यहम् । दास्याम्यभिमतान्कामान्नान्यथैतौ महाबलौ ॥ २० ॥

न्यायतोऽन्यायतो वाऽपि भवद्भ्यां तौ ममाहितौ ।
हन्तव्यौ तद्वधाद्राज्यं सामान्यं वां भविष्यति ॥ २१ ॥

इत्यादिश्य स तौ मल्लौ ततश्चाहूय हस्तिपम् । प्रोवाचोच्चैस्त्वया मल्लसमाजद्वारि कुञ्जरः ॥ २२ ॥
स्थाप्यः कुवलयापीडस्तेन तौ गोपदारकौ । घातनीयौ नियुद्धाय रङ्गद्वारमुपागतौ ॥ २३ ॥
तमप्याज्ञाप्य दृष्ट्वा च सर्वान्मञ्चानुपाकृतान् । आसन्नमरणः कंसः सूर्योदयमुदैक्षत ॥ २४ ॥

ततः समस्तमञ्चेषु नागरस्स तदा जनः । राजमञ्चेषु चारूढास्सह भृत्यैर्नराधिपाः ॥ २५ ॥
मल्लप्राश्निकवर्गश्च रङ्गमध्यसमीपगः । कृतः कंसेन कंसोऽपि तुङ्गमञ्चे व्यवस्थितः ॥ २६ ॥
अन्तःपुराणां मञ्चाश्च तथाऽन्ये परिकल्पिताः । अन्ये च वारमुख्यानामन्ये नागरयोषिताम् ॥२७॥
नन्दगोपादयो गोपा मञ्चेष्वन्येष्ववस्थिताः । अक्रूरवसुदेवौ च मञ्चप्रान्ते व्यवस्थितौ ॥ २८ ॥
नागरीयोषितां मध्ये देवकी पुत्रगर्द्धिनी । अन्तकालेऽपि पुत्रस्य द्रक्ष्यामीति मुखं स्थिता ॥ २९ ॥
वाद्यमानेषु तूर्येषु चाणूरे चातिवल्गति । हाहाकारपरे लोके ह्यास्फोटयति मुष्टिके ॥ ३० ॥
ईषद्धसन्तौ तौ वीरौ बलभद्रजनार्दनौ । गोपवेषधरौ बालौ रङ्गद्वारमुपागतौ ॥ ३१ ॥
ततः कुवलयापीडो महामात्रप्रचोदितः । अभ्यधावत्सुवेगेन हन्तुं गोपकुमारकौ ॥ ३२ ॥
हाहाकारो महाञ्जज्ञे रङ्गमध्ये द्विजोत्तम । बलदेवोऽनुजं दृष्ट्वा वचनं चेदमब्रवीत् ॥ ३३ ॥

हन्तव्यो हि महाभाग नागोऽयं शत्रुचोदितः ॥ ३४ ॥

इत्युक्तस्सोऽग्रजेनाथ बलदेवेन वै द्विज । सिंहनादं ततश्चक्रे माधवः परवीरहा ॥ ३५ ॥
करेण करमाकृष्य तस्य केशिनिषूदनः । भ्रामयामास तं शौरिरैरावतसमं बले ॥ ३६ ॥
ईशोऽपि सर्वजगतां बाललीलानुसारतः । क्रीडित्वा सुचिरं कृष्णः करिदन्तपदान्तरे ॥ ३७ ॥
उत्पाट्य वामदन्तं तु दक्षिणेनैव पाणिना । ताडयामास यन्तारं तस्यासीच्छतधा शिरः ॥ ३८ ॥
दक्षिणं दन्तमुत्पाट्य बलभद्रोऽपि तत्क्षणात् । सरोषस्तेन पार्श्वस्थान् गजपालानपोथयत् ॥ ३९ ॥
ततस्तूत्प्लुत्य वेगेन रौहिणेयो महाबलः । जघान वामपादेन मस्तके हस्तिनं रुषा ॥ ४० ॥
स पपात हतस्तेन बलभद्रेण लीलया । सहस्राक्षेण वज्रेण ताडितः पर्वतो यथा ॥ ४१ ॥
हत्वा कुवलयापीडं हस्त्यारोहप्रचोदितम् । मदासृगलिप्तांगौ हस्तिदन्तवरायुधौ ॥ ४२ ॥
मृगमध्ये यथा सिंहौ गर्वलीलावलोकिनौ । प्रविष्टौ सुमहारङ्गं बलभद्रजनार्दनौ ॥ ४३ ॥
हाहाकारो महाञ्जज्ञे महारङ्गे त्वनन्तरम् । कृष्णोऽयं बलभद्रोऽयमिति लोकस्य विस्मयः ॥ ४४ ॥

---

नियुद्ध इति ॥ नान्यथा—अन्यथा तु न दास्यामि ॥ २०—२३ ॥

तमिति ॥ उपाकृतान्—कल्पितान् ॥ २४,२५ ॥

मल्लप्राश्निकेति ॥ प्राश्निकाः—परीक्षकाः ॥ २६, २७ ॥

नन्दगोपेति ॥ राजमञ्चप्रान्ते व्यवस्थितौ—रहसि वैराज्यपार्श्वम ॥ २८ ॥

नागरीयोषितामिति ॥ पुत्रगर्धिनी—गृधु अभिकांक्षायामित्यस्माद्धातोर्णिनिः, पुत्रवत्सला ॥ २९—४९॥

सोऽयं येन हता घोरा पूतना बालघातिनी । क्षिप्तं तु शकटं येन भग्नौ तु यमलार्जुनौ ॥ ४५ ॥
सोऽयं यः कालियं नागं ममर्दारुह्य बालकः । धृतो गोवर्धनो येन सप्तरात्रं महागिरिः ॥ ४६ ॥
अरिष्टो धेनुकः केशी लीलयैव महात्मना । निहता येन दुर्वृत्ता दृश्यतामेष सोऽच्युतः ॥ ४७ ॥
अयं चास्य महाबाहुर्बलभद्रोऽग्रतोऽग्रजः । प्रयाति लीलया योषिन्मनोनयननन्दनः ॥ ४८ ॥
अयं स कथ्यते प्राज्ञैः पुराणार्थविशारदैः । गोपालो [illegible] वंशं मग्नमभ्युद्धरिष्यति ॥ ४९ ॥
अयं हि सर्वलोकस्य विष्णोरखिलजन्मनः । अवतीर्णो महीमंशो नूनं भारहरो भुवः ॥ ५० ॥
इत्येवं वर्णिते पौरै रामे कृष्णे च तत्क्षणात् । उरस्तताप देवक्याः स्नेहस्नुतपयोधरम् ॥ ५१ ॥
महोत्सवमिवासाद्य पुत्राननविलोकनात् । युवेव वसुदेवोऽभूद्विहायाभ्यागतां जराम् ॥ ५२ ॥
विस्तारिताक्षियुगलो राजान्तःपुरयोषिताम् । नागरस्त्रीसमूहश्च द्रष्टुं न विरराम तम् ॥ ५३ ॥
सख्यः पश्यत कृष्णस्य मुखमत्यरुणेक्षणम् । गजयुद्धकृतायासस्वेदाम्बुकणिकाचितम् ॥ ५४ ॥
विकासिशरदम्भोजमवश्यायजलोक्षितम् । परिभूय स्थितं जन्म सफलं क्रियतां दृशः ॥ ५५ ॥
श्रीवत्साङ्कं महद्धाम बालस्यैतद्विलोक्यताम् । विपक्षक्षपणं वक्षो भुजयुग्मं च भामिनि ॥ ५६ ॥
किं न पश्यसि दुग्धेन्दुमृणालधवलाकृतिम् । बलभद्रमिमं नीलपरिधानमुपागतम् ॥ ५७ ॥
वल्गता मुष्टिकेनैव चाणूरेण तथा सखि । क्रीडतो बलभद्रस्य हरेर्हास्यं विलोक्यताम् ॥ ५८ ॥
सख्यः पश्यत चाणूरं नियुद्धार्थमयं हरिः । समुपैति न सन्त्यत्र किं वृद्धा युक्तकारिणः ॥ ५९ ॥
क्व यौवनोन्मुखीभूतसुकुमारतनुर्हरिः । क्व वज्रकठिनाभोगशरीरोऽयं महासुरः ॥ ६० ॥
इमौ सुललितैरङ्गैर्वर्तेते नवयौवनौ । दैतेयमल्लाश्चाणूरप्रमुखास्त्वतिदारुणाः ॥ ६१ ॥
नियुद्धप्राश्निकानां तु महानेष व्यतिक्रमः । यद्बालबलिनोर्युद्धं मध्यस्थैस्समुपेक्ष्यते ॥ ६२ ॥

श्रीपराशरः—

इत्थं पुरस्त्रीलोकस्य वदतश्चालयन्भुवम् । ववल्ग बद्धकक्ष्योऽन्तर्जनस्य भगवान्हरिः ॥ ६३ ॥
बलभद्रोऽपि चास्फोट्य ववल्ग ललितं तथा । पदेपदे तथा भूमिर्यन्न शीर्णा तदद्भुतम् ॥ ६४ ॥
चाणूरेण ततः कृष्णो युयुधेऽमितविक्रमः । नियुद्धकुशलो दैत्यो बलभद्रेण मुष्टिकः ॥ ६५ ॥
सन्निपातावधूतैस्तु चाणूरेण समं हरिः । प्रक्षेपणैर्मुष्टिभिश्च कीलवज्रनिपातनैः ॥ ६६ ॥

---

अयं हीति ॥ अखिलजन्मनः—अखिलस्य जन्म यस्मिन्निति विग्रहः ॥ ५० ॥ इतीति ॥ तताप—तप्तम् ॥ ५१, ५२ ॥ विस्तारितेति ॥ राजान्तःपुरयोषितां समूह इति शेषः ॥ ५३—५५ ॥

श्रीवत्साङ्कमिति ॥ महद्धाम—महतो लक्ष्म्यादेर्धाम ॥ ५६, ५७ ॥

वल्गतेति ॥ वल्गतेत्यादि हेतौ तृतीया । हास्यमनादरकृतम् ॥ ५८—६२ ॥

इत्थमिति ॥ बद्धकक्ष्यः—दृढीकृतपरिकरः ॥ ६३—६५ ॥

सन्निपातेति ॥ सन्निपातैः—आदावन्योन्यं हस्तसंघट्टैः । अवधूतैः—अपहस्ताख्येन बहिर्हस्तेन श्लिष्टाङ्गमोचनैः । प्रक्षेपणैः—आकृष्य निरसनैः । कीलपातः—कूर्परेण घातः । वज्रपातः—अरत्निद्वयस्वस्तिकान्तरेतान्यगात्रघातः, मध्यमानामिकान्तर्गताङ्गुष्ठमुष्टिविशेषघातो वा ॥ ६६ ॥

पादोद्धूतैः प्रमृष्टैश्च तयोर्युद्धमभून्महत् ॥ ६७ ॥
अशस्त्रमतिघोरं तत्तयोर्युद्धं सुदारुणम् । बलप्राणविनिष्पाद्यं समाजोत्सवसन्निधौ ॥ ६८ ॥
यावद्यावच्च चाणूरो युयुधे हरिणा सह । प्राणहानिमवापाग्र्यां तावत्तावल्लवाल्लवम् ॥ ६९ ॥
कृष्णोऽपि युयुधे तेन लीलयैव जगन्मयः । खेदाच्चालयता कोपान्निजकेसरशेखरम् ॥ ७० ॥
बलक्षयं विवृद्धिं च दृष्ट्वा चाणूरकृष्णयोः । वारयामास तूर्याणि कंसः कोपपरायणः ॥ ७१ ॥
मृदङ्गादिषु तूर्येषु प्रतिषिद्धेषु तत्क्षणात् । खे सङ्गतान्यवाद्यन्त देवतूर्याण्यनेकशः ॥ ७२ ॥
जय गोविन्द चाणूरं जहि केशव दानवम् । अन्तर्धानगता देवास्तमूचुरतिहर्षिताः ॥ ७३ ॥
चाणूरेण चिरं कालं क्रीडित्वा मधुसूदनः । उत्पाट्य भ्रामयामास तद्वधाय कृतोद्यमः ॥ ७४ ॥
भ्रामयित्वा शतगुणं दैत्यमल्लममित्रजित् । भूमावास्फोटयामास गगने गतजीवितम् ॥ ७५ ॥
भूमावास्फोटितस्तेन चाणूरश्शतधाऽभवत् । रक्तस्रावमहापङ्कां चकार च तदा भुवम् ॥ ७६ ॥
बलदेवोऽपि तत्कालं मुष्टिकेन महाबलः । युयुधे दैत्यमल्लेन चाणूरेण यथा हरिः ॥ ७७ ॥
सोऽप्येनं मुष्टिना मूर्ध्नि वक्षस्याहत्य जानुना । पातयित्वा धरापृष्ठे निष्पिपेष गतायुषम् ॥ ७८ ॥
कृष्णस्तोसलकं भूयो मल्लराजं महाबलम् । वाममुष्टिप्रहारेण पातयामास भूतले ॥ ७९ ॥
चाणूरे निहते मल्ले मुष्टिके विनिपातिते । नीते क्षयं तोसलके सर्वे मल्लाः प्रदुद्रुवुः ॥ ८० ॥
ववल्गतुस्ततो रङ्गे कृष्णसंकर्षणावुभौ । समानवयसो गोपान्बलादाकृष्य हर्षितौ ॥ ८१ ॥
कंसोऽपि कोपरक्ताक्षः प्राहोच्चैर्व्यायतान्नरान् । गोपावेतौ समाजौघान्निष्क्राम्येतां बलादितः ॥८२॥
नन्दोऽपि गृह्यतां पापो निगलैरायसैरिह । अवृद्धार्हेण दण्डेन वसुदेवोऽपि वध्यताम् ॥ ८३ ॥
वल्गन्ति गोपाः कृष्णेन ये चेमे सहिताः पुरः । गावो निगृह्यतामेषां यच्चास्ति वसु किंचन ॥८४॥
एवमाज्ञापयानं तु प्रहस्य मधुसूदनः । उत्प्लुत्यारुह्य तं मञ्चं कंसं जग्राह वेगतः ॥ ८५ ॥
केशेष्वाकृष्य विगलत्किरीटमवनीतले । स कंसं पातयामास तस्योपरि पपात च ॥ ८६ ॥
अशेषजगदाधारगुरुणा पततोपरि । कृष्णेन त्याजितः प्राणानुग्रसेनात्मजो नृपः ॥ ८७ ॥
मृतस्य केशेषु तदा गृहीत्वा मधुसूदनः । चकर्ष देहं कंसस्य रङ्गमध्ये महाबलः ॥ ८८ ॥

---

पादोद्धूतैरिति ॥ पादेन परस्योद्धूतैः । प्रमृष्टैः—सर्वाङ्गग्रहणान्निपात्य निष्पेषणैः । प्रसृष्टैरिति पाठे उत्पाट्य निरसनैः ॥ ६७ ॥

अशस्त्रमिति ॥ बलप्राणौ—मनस्तनुशक्ती । समाजोत्सवसन्निधौ—सोत्सवसमाजसन्निधौ ॥६८–७२॥

जयेति ॥ जय, न तावतालम् जहि च ॥ ७३, ७४ ॥

भ्रामयित्वेति ॥ शतगुणं—शतकृत्वः ॥ ७५–८१ ॥

कंस इति ॥ व्यायतान्—कृतश्रमान् ॥ ८२, ८३ ॥

वल्गन्तीति ॥ गावः यत्किंचन अस्ति वसु तत्सर्वं निगृह्यताम् ॥ ८४–८८ ॥

गौरवेणातिपतता परिघा तेन कृष्यता । कृता कंसस्य देहेन वेगेनेव महाम्भसः ॥ ८९ ॥
कंसे गृहीते कृष्णेन तद्भ्राताऽभ्यागतो रुषा । सुनामा बलभद्रेण लीलयैव निपातितः ॥ ९० ॥
ततो हाहाकृतं सर्वमासीत्तद्रङ्गमण्डलम् । अवज्ञया हतं दृष्ट्वा कृष्णेन मथुरेश्वरम् ॥ ९१ ॥
कृष्णोऽपि वसुदेवस्य पादौ जग्राह सत्वरः । देवक्याश्च महाबाहुर्बलदेवसहायवान् ॥ ९२ ॥
उत्थाप्य वसुदेवस्तं देवकी च जनार्दनम् । स्मृतजन्मोक्तवचनौ तावेव प्रणतौ स्थितौ ॥ ९३ ॥

श्रीवसुदेव उवाच :—

प्रसीद सीदतां दत्तो देवानां यो वरः प्रभो । तथाऽऽवयोः प्रसादेन कृतोद्धारस्स केशव ॥ ९४ ॥
आराधितो यद्भगवानवतीर्णो गृहे मम । दुर्वृत्तनिधनार्थाय तेन नः पावितं कुलम् ॥ ९५ ॥
त्वमन्तस्सर्वभूतानां सर्वभूतमयस्स्थितः । प्रवर्तेते समस्तात्मंस्त्वत्तो भूतभविष्यती ॥ ९६ ॥
यज्ञैस्त्वमिज्यसेऽचिन्त्य सर्वदेवमयाच्युत । त्वमेव यज्ञो यष्टा च यज्वनां परमेश्वरः ॥ ९७ ॥
समुद्भवस्समस्तस्य जगतस्त्वं जनार्दन ॥ ९८ ॥
सापह्नवं मम मनो यदेतत्त्वयि जायते । देवक्याश्चात्मजप्रीत्या तदत्यन्तविडम्बना ॥ ९९ ॥
त्वं कर्ता सर्वभूतानामनादिनिधनो भवान् । त्वां मनुष्यस्य कस्यैषा जिह्वा पुत्रेति वक्ष्यति ॥१००॥
जगदेतज्जगन्नाथ संभूतमखिलं यतः । कया युक्त्या विना मायां सोऽस्मत्तस्संभविष्यति ॥ १०१ ॥
यस्मिन्प्रतिष्ठितं सर्वं जगत्स्थावरजङ्गमम् । स कोष्ठोत्सङ्गशयनो मानुषो जायते कथम् ॥ १०२ ॥
स त्वं प्रसीद परमेश्वर पाहि विश्वमंशावतारकरणैर्न ममासि पुत्रः ।
आब्रह्मपादपमिदं जगदेतदीश त्वत्तो विमोहयसि किं पुरुषोत्तमास्मान् ॥ १०३ ॥
मायाविमोहितदृशा तनयो ममेति कंसाद्भयं कृतमपास्तभयोऽतितीव्रम् ।
नीतोऽसि गोकुलमरातिभयाकुलेन वृद्धिं गतोऽसि मम नास्ति ममत्वमीश ॥ १०४ ॥

---

गौरवेणेति ॥ कृष्यमाणेन देहेन परिघा कृता ॥ ८९–९३ ॥

प्रसीदेत्यादि ॥ सीदतां देवानां यो वरो दत्तः सः आवयोः प्रसादेन जननरूपेण कृतोद्धारः—निर्व्यूढः ॥ ९४, ९५ ॥ त्वमिति ॥ अन्तः—अवसानं प्रवर्तेते । अत्र लडिवक्षितः ॥ ९६–९८ ॥

सापह्नवमिति ॥ त्वयि—ईश्वरे पुत्रप्रीत्या सापह्नवं—सस्नेहं मनो जायते इति यत् मम तत् अत्यन्तविडम्बना—अत्यन्तहास्यत्वावहम् ॥ ९९ ॥

त्वमिति ॥ त्वां क मानुषकस्येति पाठे, मानुषकस्य कुत्सायां कः, पुत्रेति वक्ष्यती—वदन्ती जिह्वा क—कुत्र ॥ १०० ॥ जगदिति ॥ माया—मोहिनी भगवच्छक्तिः ॥ १०१ ॥

यस्मिन्निति ॥ कोष्ठोत्सङ्गशयनः—गर्भावस्थायां कोष्ठे शेते, बाल्ये तत्सङ्गे ॥ १०२–१०४ ॥

कर्माणि रुद्रमरुदश्विशतक्रतूनां साध्यानि यस्य न भवन्ति निरीक्षितानि ।
त्वं विष्णुरीश जगतामुपकारहेतोः प्राप्तोऽसि नः परिगतो विगतो हि मोहः ॥ १०५ ॥

इति श्रीविष्णुपुराणे पंचमेंऽशे विंशोऽध्यायः ॥ २० ॥

## अथैकविंशोऽध्यायः

श्रीपराशरः—

तौ समुत्पन्नविज्ञानौ भगवत्कर्मदर्शनात् । देवकीवसुदेवौ तु दृष्ट्वा मायां पुनर्हरिः ।
मोहाय यदुचक्रस्य वितताना स वैष्णवीम् ॥ १ ॥
उवाच चाम्ब हे तात चिरादुत्कण्ठितेन मे । भवन्तौ कंसभीतेन दृष्टौ संकर्षणेन च ॥ २ ॥
कुर्वतां याति यः कालो मातापित्रोरपूजनम् । तत्खण्डमायुषो व्यर्थमसाधूनां हि जायते ॥ ३ ॥
गुरुदेवद्विजातीनां मातापित्रोश्च पूजनम् । कुर्वतां सफलः कालो देहिनां तात जायते ॥ ४ ॥
तत्क्षन्तव्यमिदं सर्वमतिक्रमकृतं पितः । कंसवीर्यप्रतापाभ्यामावयोः परवश्ययोः ॥ ५ ॥

श्रीपराशरः—

इत्युक्त्वाऽथ प्रणम्योभौ यदुवृद्धाननुक्रमात् । यथावदभिपूज्याथ चक्रतुः पौरमाननम् ॥ ६ ॥
कंसपत्न्यस्ततः कंसं परिवार्य हतं भुवि । विलेपुर्मातरश्चास्य दुःखशोकपरिप्लुताः ॥ ७ ॥
बहुप्रकारमस्वस्थाः पश्चात्तापातुरो हरिः । तास्समाश्वासयामास स्वयमस्राविलेक्षणः ॥ ८ ॥
उग्रसेनं ततो बन्धान्मुमोच मधुसूदनः । अभ्यषिञ्चत्तदैवैनं निजराज्ये हतात्मजम् ॥ ९ ॥
राज्येऽभिषिक्तः कृष्णेन यदुसिंहस्सुतस्य सः । चकार प्रेतकार्याणि ये चान्ये तत्र घातिताः ॥ १० ॥
कृतौर्ध्वदैहिकं चैनं सिंहासनगतं हरिः । उवाचाज्ञापय विभो यत्कार्यमविशङ्कितः ॥ ११ ॥
ययातिशापाद्वंशोऽयमराज्यार्होऽपि सांप्रतम् । मयि भृत्ये स्थिते देवानाज्ञापयतु किं नृपैः ॥ १२ ॥

---

कर्माणीति ॥ यस्य कर्माणि रुद्रादीनामप्यसाध्यानि प्रत्यक्षितानि, स त्वं जगदर्थं पुत्रतयाऽस्मान् प्राप्तोऽसीति इदं परिगतं—ज्ञानम् । हि हेतौ । हि—यस्मान्मोहो विगतः । यानीति पाठे तानीति च तस्मादित्यध्याहृत्य योज्यम् ॥ १०५ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पञ्चमांशे विंशोऽध्यायः ॥ २० ॥

## अथैकविंशोऽध्यायः

ताविति ॥ मायां—योगमायाम् ॥ १ ॥ उवाचेति ॥ मे—मया ॥ २–४ ॥

तदिति ॥ अतिक्रमकृतमिदं सर्वं क्षन्तव्यम् । अतिक्रमकारणमाह—कंसवीर्येति ॥ ५–११ ॥

ययातीति ॥ किं नृपैराज्ञप्तैः ॥ १२ ॥

श्रीपराशरः—

इत्युक्त्वा सोऽमरद्वायुमाजगाम च तत्क्षणात् । उवाच चैनं भगवान्केशवः कार्यमानुषः ॥ १३ ॥

गच्छेन्द्रं ब्रूहि वायो त्वमलं गर्वेण वासव । दीयतामुग्रसेनाय सुधर्मा भवता सभा ॥ १४ ॥

कृष्णो ब्रवीति राजार्हमेतद्रत्नमनुत्तमम् । सुधर्माख्यसभा युक्तमस्यां यदुभिरासितुम् ॥ १५ ॥

श्रीपराशरः—

इत्युक्तः पवनो गत्वा सर्वमाह शचीपतिम् । ददौ सोऽपि सुधर्माख्यां सभां वायोः पुरंदरः ॥ १६ ॥

वायुना चाहृतां दिव्यां सभां ते यदुपुंगवाः । बुभुजुस्सर्वरत्नाढ्यां गोविन्दभुजसंश्रयाः ॥ १७ ॥

विदिताखिलविज्ञानौ सर्वज्ञानमयावपि । शिष्याचार्यक्रमं वीरौ ख्यापयन्तौ यदूत्तमौ ॥ १८ ॥

ततस्सांदीपनिं काश्यमवन्तीपुरवासिनम् । विद्यार्थं जग्मतुर्बालौ कृतोपनयनक्रमौ ॥ १९ ॥

वेदाभ्यासकृतप्रीती संकर्षणजनार्दनौ । तस्य शिष्यत्वमभ्येत्य गुरुवृत्तिपरौ हि तौ ॥
दर्शयांचक्रतुर्वीरावाचारमखिले जने ॥ २० ॥

सरहस्यं धनुर्वेदं ससंग्रहमधीयताम् । अहोरात्रचतुष्षष्ट्या तदद्भुतमभूद्द्विज ॥ २१ ॥

सांदीपनिरसंभाव्यं तयोः कर्मातिमानुषम् । विचिन्त्य तौ तदा मेने प्राप्तौ चन्द्रदिवाकरौ ॥ २२ ॥

साङ्गांश्च चतुरो वेदान्सर्वशास्त्राणि चैव हि । अस्त्रग्राममशेषं च प्रोक्तमात्रमवाप्य तौ ॥ २३ ॥
ऊचतुर्व्रियतां या ते दातव्या गुरुदक्षिणा ॥ २४ ॥

सोऽप्यतीन्द्रियमालोक्य तयोः कर्म महामतिः । अयाचत मृतं पुत्रं प्रभासे लवणार्णवे ॥ २५ ॥

गृहीतास्त्रौ ततस्तौ तु सार्घ्यहस्तो महोदधिः । उवाच न मया पुत्रो हृतस्सांदीपनेरिति ॥ २६ ॥

दैत्यः पञ्चजनो नाम शंखरूपस्स बालकम् । जग्राह योऽस्ति सलिले ममैवासुरसूदन ॥ २७ ॥

श्रीपराशरः—

इत्युक्तोऽन्तर्जलं गत्वा हत्वा पञ्चजनं च तम् । कृष्णो जग्राह तस्यास्थिप्रभवं शंखमुत्तमम् ॥ २८ ॥

यस्य नादेन दैत्यानां बलहानिरजायत । देवानां ववृधे तेजो यात्यधर्मश्च संक्षयम् ॥ २९ ॥

तं पाञ्चजन्यमापूर्य गत्वा यमपुरं हरिः । बलदेवश्च बलवाञ्जित्वा वैवस्वतं यमम् ॥ ३० ॥

---

इतीति ॥ कार्यमानुषः—धर्मसंस्थापनादिकार्येण मानुषः ॥ १३–१७ ॥

विदितेति ॥ * मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः * इत्यमरः । क्रमः—पारंपर्यम् ॥ १८ ॥

तत इति ॥ काश्यं—वाराणसीजातम् ॥ १९, २० ॥

सरहस्यमिति ॥ रहस्यम्—अस्त्रमन्त्रोपनिषत् । संग्रहः—अस्त्रप्रयोगसंस्थानाद्युपदेशः । अधीयताम्—अधीतवन्तौ । आर्षत्वात्साधुः ॥ २१ ॥

सांदीपनिरिति ॥ असंभाव्यम् अन्येषु । कर्म—शस्त्रास्त्राणां शीघ्रधारणशीघ्रप्रयोगादिकम् ॥ २२–२४ ॥

स इति ॥ अतीन्द्रियं—दिव्यम् ॥ २५–३० ॥

तं बालं यातनासंस्थं यथापूर्वशरीरिणम् । पित्रे प्रदत्तवान्कृष्णो बलश्च बलिनां वरः ॥ ३१ ॥
मथुरां च पुनः प्राप्तावुग्रसेनेन पालिताम् । प्रहृष्टपुरुषस्त्रीकामुभौ रामजनार्दनौ ॥ ३२ ॥

इति श्रीविष्णुपुराणे पञ्चमांशे एकविंशोऽध्यायः ॥ २१ ॥

---

## अथ द्वाविंशोऽध्यायः

श्रीपराशरः—

जरासंधसुते कंस उपयेमे महाबलः । अस्तिं (प्रास्तिं) प्राप्तिं च मैत्रेय तयोर्भर्तृहणं हरिम् ॥ १ ॥
महाबलपरीवारो मगधाधिपतिर्बली । हन्तुमभ्याययौ कोपाज्जरासंधस्सयादवम् ॥ २ ॥
उपेत्य मथुरां सोऽथ रुरोध मगधेश्वरः । अक्षौहिणीभिस्सैन्यस्य त्रयोविंशतिभिर्वृतः ॥ ३ ॥
निष्क्रम्याल्पपरीवारावुभौ रामजनार्दनौ । युयुधाते समं तस्य बलिनौ बलिसैनिकैः ॥ ४ ॥
ततो रामश्च कृष्णश्च मतिं चक्रतुरञ्जसा । आयुधानां पुराणानामादाने मुनिसत्तम ॥ ५ ॥
अनन्तरं हरेश्शार्ङ्गं तूणी चाक्षयसायकौ । आकाशादागतौ विप्र तथा कौमोदकी गदा ॥ ६ ॥
हलं च बलभद्रस्य गगनादागतं महत् । मनसोऽभिमतं विप्र सानन्दं मुसलं तथा ॥ ७ ॥
ततो युद्धे पराजित्य ससैन्यं मगधाधिपम् । पुरीं विविशतुर्वीरावुभौ रामजनार्दनौ ॥ ८ ॥
जिते तस्मिन्सुदुर्वृत्ते जरासंधे महामुने । जीवमाने गते कृष्णस्तेनामन्यत नाजितम् ॥ ९ ॥
पुनरप्याजगामाथ जरासंधो बलान्वितः । जितश्च रामकृष्णाभ्यामपक्रान्तो द्विजोत्तम ॥ १० ॥
दश चाष्टौ च संग्रामानेवमत्यन्तदुर्मदः । यदुभिर्मागधो राजा चक्रे कृष्णपुरोगमैः ॥ ११ ॥
सर्वेष्वेतेषु युद्धेषु यादवैस्स पराजितः । अपक्रान्तो जरासंधस्स्वल्पसैन्यैर्बलाधिकः ॥ १२ ॥
न तद्बलं यादवानां विजितं यदनेकशः । तत्तु सन्निधिमाहात्म्यं विष्णोरंशस्य चक्रिणः ॥ १३ ॥
मनुष्यधर्मशीलस्य लीला सा जगतीपतेः । अस्त्राण्यनेकरूपाणि यदरातिषु मुञ्चति ॥ १४ ॥
मनसैव जगत्सृष्टिं संहारं च करोति यः । तस्यारिपक्षक्षपणे कियानुद्यमविस्तरः ॥ १५ ॥
तथाऽपि यो मनुष्याणां धर्मस्तमनुवर्तते । कुर्वन्बलवता सन्धिं हीनैर्युद्धं करोत्यसौ ॥ १६ ॥

---

तमिति ॥ यथापूर्वशरीरिणं कृत्वेति शेषः ॥ ३१-३२ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमेंशे एकविंशोऽध्यायः ॥ २१ ॥

---

## अथ द्वाविंशोऽध्यायः

॥ १, २ ॥ उपेत्येति ॥ त्रयोविंशतिभिः—त्रयोविंशत्या ॥ ३, ४ ॥
तत इति ॥ अञ्जसा—शीघ्रम ॥ ५—८ ॥
जित इति ॥ तेन—जरासंधेन आत्मानःपराजितं न मेने—जितमित्येव मेने ॥ ९—१२ ॥
न तदित्यादि ॥ जरासंधेन न जितानि यत् तद्यादवानां न सामर्थ्यं ॥ १३—१६ ॥

साम चोपप्रदानं च तथा भेदं च दर्शयन् । करोति दण्डपातं च क्वचिदेव पलायनम् ॥ १७ ॥
मनुष्यदेहिनां चेष्टामित्येवमनुवर्तते । लीला जगत्पतेस्तस्य च्छन्दतः परिवर्तते ॥ १८ ॥

इति श्रीविष्णुपुराणे पंचमेंशे द्वाविंशोऽध्यायः ॥ २२ ॥

## अथ त्रयोविंशोऽध्यायः

श्रीपराशरः—

गार्ग्यं गोष्ठ्यां द्विजं श्यालष्षण्ड इत्युक्तवान्द्विज । यदूनां सन्निधौ सर्वे जहसुर्यादवास्तदा ॥ १ ॥
ततः कोपपरीतात्मा दक्षिणापथमेत्य सः । सुतमिच्छंस्तपस्तेपे यदुचक्रभयावहम् ॥ २ ॥
आराधयन्महादेवं लोहचूर्णमभक्षयत् । ददौ वरं च तुष्टोऽस्मै वर्षे तु द्वादशे हरः ॥ ३ ॥
संतोषयामास च तं यवनेशो ह्यनात्मजः । तद्योषित्सङ्गमाच्चास्य पुत्रोऽभूदलिसन्निभः ॥ ४ ॥
तं कालयवनं नाम राज्ये स्वे यवनेश्वरः । अभिषिच्य वनं यातो वज्राग्रकठिनोरसम् ॥ ५ ॥
स तु वीर्यमदोन्मत्तः पृथिव्यां बलिनो नृपान् । अपृच्छन्नारदस्तस्मै कथयामास यादवान् ॥ ६ ॥
म्लेच्छकोटिसहस्राणां सहस्रैस्सोऽभिसंवृतः । गजाश्वरथसंपन्नैश्चकार परमोद्यमम् ॥ ७ ॥
प्रययौ स व्यवच्छिन्नं छिन्नयानो दिनेदिने । यादवान्प्रति सामर्षो मैत्रेय मथुरां पुरीम् ॥ ८ ॥
कृष्णोऽपि चिन्तयामास क्षपितं यादवं बलम् । यवनेन रणे गम्यं मागधस्य भविष्यति ॥ ९ ॥
मागधस्य बलं क्षीणं स कालयवनो बली । हन्तैतदेवमायातं यदूनां व्यसनं द्विधा ॥ १० ॥
तस्माद्दुर्गं करिष्यामि यदूनामरिदुर्जयम् । स्त्रियोऽपि यत्र युध्येयुः किं पुनर्वृष्णिपुङ्गवाः ॥ ११ ॥

---

साम चेति ॥ क्वचित्—यवनादौ ॥ १७, १८ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे द्वाविंशोऽध्यायः ॥ २२ ॥

## अथ त्रयोविंशोऽध्यायः

गार्ग्यमिति ॥ षण्ड इत्यपहासोऽनपत्यत्वात् ॥ १ ॥

तत इति ॥ दक्षिणापथं— विन्ध्याद्दक्षिणदेशम् ॥ २–७ ॥

प्रययाविति ॥ छिन्नयानः—त्यक्तयानः । दिनेदिने श्रान्तं श्रान्तं यानं त्यक्त्वा अन्येनाश्रान्तेन प्रययावित्यर्थः ॥ ८ ॥

कृष्णोऽपीत्यादि ॥ प्रागेव क्षीणं मागधस्य बलं स कालयवनो बलित्वाद्धन्ता । अतोऽस्य बलं यादवैर्दुर्धर्षम् । यादवबलं चानेन क्षपितं चेत् मागधस्य गम्यं साध्यं भविष्यति । अतो द्विधा व्यसनमायातमिति चिन्तयामासेत्यन्वयः । अथवा यवनेन क्षपितं यादवबलं मागधस्य गम्यं च भविष्यति । यद्यपि मागधस्य बलं प्रागेव क्षीणम्, तथापि तत्सहायो यवनो बली हन्तैतदिति । एतत्—एतस्मात् कारणात् द्विविधं व्यसनमायातमेति चिन्तयामासेति । हन्तेति विषादे ॥ ९–११ ॥

मयि मत्ते प्रमत्ते वा सुप्ते प्रवसितेऽपि वा । यादवानभिभवं दुष्टा मा कुर्वन्त्वरयोऽधिकाः ॥ १२ ॥
इति संचिन्त्य गोविन्दो योजनानां महोदधिम् । ययाचे द्वादश पुरीं द्वारकां तत्र निर्ममे ॥ १३ ॥
महोद्यानां महावप्रां तटाकशतशोभिताम् । प्रासादगृहसंबाधामिन्द्रस्येवामरावतीम् ॥ १४ ॥
मथुरावासिनं लोकं तत्रानीय जनार्दनः । आसन्ने कालयवने मथुरां च स्वयं ययौ ॥ १५ ॥
बहिरावासिते सैन्ये मथुराया निरायुधः । निर्जगाम च गोविन्दो ददर्श यवनश्च तम् ॥ १६ ॥
स ज्ञात्वा वासुदेवं तं बाहुप्रहरणं नृपः । अनुयातो महायोगिचेतोभिः प्राप्यते न यः ॥ १७ ॥
तेनानुयातः कृष्णोऽपि प्रविवेश महागुहाम् । यत्र शेते महावीर्यो मुचुकुन्दो नरेश्वरः ॥ १८ ॥
सोऽपि प्रविष्टो यवनो दृष्ट्वा शय्यागतं नृपम् । पादेन ताडयामास मत्वा कृष्णं सुदुर्मतिः ॥ १९ ॥
उत्थाय मुचुकुन्दोऽपि ददर्श यवनं नृपः ॥ २० ॥
दृष्टमात्रश्च तेनासौ जज्वाल यवनोऽग्निना । तत्क्रोधजेन मैत्रेय भस्मीभूतश्च तत्क्षणात् ॥ २१ ॥
स हि देवासुरे युद्धे गतो हत्वा महासुरान् । निद्रार्तस्सुमहाकालं निद्रां वव्रे वरं सुरान् ॥ २२ ॥
प्रोक्तश्च देवैस्संसुप्तं यस्त्वामुत्थापयिष्यति । देहजेनाग्निना सद्यस्स तु भस्मीभविष्यति ॥ २३ ॥
एवं दग्ध्वा स तं पापं दृष्ट्वा च मधुसूदनम् । कस्त्वमित्याह सोऽप्याह जातोऽहं शशिनः कुले ॥
वसुदेवस्य तनयो यदोर्वंशसमुद्भवः ॥ २४ ॥
मुचुकुन्दोऽपि तत्रासौ वृद्धगार्ग्यवचोऽस्मरत् ॥ २५ ॥
संस्मृत्य प्रणिपत्यैनं सर्वं सर्वेश्वरं हरिम् । प्राह ज्ञातो भवान्विष्णोरंशस्त्वं परमेश्वर ॥ २६ ॥
पुरा गार्ग्येण कथितमष्टाविंशतिमे युगे । द्वापरान्ते हरेर्जन्म यदुवंशे भविष्यति ॥ २७ ॥
स त्वं प्राप्तो न संदेहो मर्त्यानामुपकारकृत् ॥ २८ ॥
तथाहि सुमहत्तेजो नालं सोढुमहं तव । तथाहि सजलाम्भोदनादधीरतरं तव ॥
वाक्यं नमति चैवोर्वी युष्मत्पादप्रपीडिता ॥ २९ ॥
देवासुरमहायुद्धे दैत्यसैन्यमहाभटाः । न सेहुर्मम तेजस्ते त्वत्तेजो न सहाम्यहम् ॥ ३० ॥
संसारपतितस्यैको जन्तोस्त्वं शरणं परम् । प्रसीद त्वं प्रपन्नार्तिहर नाशय मेऽशुभम् ॥ ३१ ॥
त्वं पयोनिधयश्शैलसरितस्त्वं वनानि च । मेदिनी गगनं वायुरापोऽग्निस्त्वं तथा मनः ॥ ३२ ॥

---

मयीति ॥ प्रमत्ते—अनवहिते । प्रवसिते—प्रोषिते ॥ १२, १३ ॥

महोद्यानामिति ॥ वप्रः—प्राकारमूलधिष्ण्यम् ॥ १४, १५ ॥

बहिरिति ॥ बहिरावासिते सैन्ये । कालयवनेनेति शेषः ॥ १६ ॥

स इति ॥ सः ज्ञात्वा—नारदोक्तलक्षणैः ॥ १७–२४ ॥

मुचुकुंद इति ॥ वृद्धगार्ग्यवचः * वनार्थं द्वापरस्यान्ते समुत्पत्स्यति केशवः * इत्यादि ॥ २५-३२ ॥

बुद्धिरव्याकृतप्राणाः प्राणेशस्त्वं तथा पुमान् । पुंसः परतरं यच्च व्याप्यजन्मविकारवत् ॥ ३३ ॥
शब्दादिहीनमजरममेयं क्षयवर्जितम् । अवृद्धिनाशं तद्ब्रह्म त्वमाद्यन्तविवर्जितम् ॥ ३४ ॥
त्वत्तोऽमरास्सपितरो यक्षगंधर्वकिन्नराः । सिद्धाश्चाप्सरसस्त्वत्तो मनुष्याः पशवः खगाः ॥ ३५ ॥
सरीसृपा मृगास्सर्वे त्वत्तस्सर्वे महीरुहाः । यच्च भूतं भविष्यं च किंचिदत्र चराचरम् ॥ ३६ ॥
मूर्तामूर्तं तथा चापि स्थूलं सूक्ष्मतरं तथा । तत्सर्वं त्वं जगत्कर्ता नास्ति किंचित्त्वया विना ॥३७॥
मया संसारचक्रेऽस्मिन्भ्रमता भगवंस्तदा । तापत्रयाभिभूतेन न प्राप्ता निर्वृतिः क्वचित् ॥ ३८ ॥
दुःखान्येव सुखानीति मृगतृष्णाजलाशयाः । मया नाथ गृहीतानि तानि तापाय मेऽभवन् ॥३९॥
राज्यमुर्वी बलं कोशो मित्रपक्षस्तथात्मजाः । भार्या भृत्यजनो ये च शब्दाद्या विषयाः प्रभो ॥४०॥
सुखबुद्ध्या मया सर्वं गृहीतमिदमव्ययम् । परिणामे तदेवेश तापात्मकमभून्मम ॥ ४१ ॥
देवलोकगतिं प्राप्तो नाथ देवगणोऽपि हि । मत्तस्साहाय्यकामोऽभूच्छाश्वती कुत्र निर्वृतिः ॥४२॥
त्वामनाराध्य जगतां सर्वेषां प्रभवास्पदम् । शाश्वती प्राप्यते केन परमेश्वर निर्वृतिः ॥ ४३ ॥
त्वन्मायामूढमनसो जन्ममृत्युजरादिकान् । अवाप्य तापान्पश्यन्ति प्रेतराजमनन्तरम् ॥ ४४ ॥
ततो निजक्रियासूतिनरकेष्वतिदारुणम् । प्राप्नुवन्ति नरा दुःखमस्वरूपविदस्तव ॥ ४५ ॥
अहमत्यन्तविषयी मोहितस्तव मायया । ममत्वगर्वगर्तान्तर्भ्रमामि परमेश्वर ॥ ४६ ॥

सोऽहं त्वां शरणमपारमप्रमेयं संप्राप्तः परमपदं यतो न किंचित् ।
संसारश्रमपरितापतप्तचेता निर्वाणे परिणतधाम्नि साभिलाषः ॥ ४७ ॥

इति श्रीविष्णुपुराणे पंचमेंशे त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## अथ चतुर्विंशोऽध्यायः

श्रीपराशरः—इत्थं स्तुतस्तदा तेन मुचुकुन्देन धीमता । प्राहेशः सर्वभूतानामनादिनिधनो हरिः ॥१॥

श्रीभगवान्—

यथाभिवाञ्छितान्दिव्यान्गच्छ लोकान्नराधिप । अव्याहतपरैश्वर्यो मत्प्रसादोपबृंहितः ॥ २ ॥
भुक्त्वा दिव्यान्महाभोगान्भविष्यसि महाकुले । जातिस्मरो मत्प्रसादात्ततो मोक्षमवाप्स्यसि ॥ ३ ॥

श्रीपराशरः—इत्युक्तः प्रणिपत्येशं जगतामच्युतं नृपः । गुहामुखाद्विनिष्क्रान्तस्स ददर्शाल्पकान्नरान् ॥४॥
ततः कलियुगं मत्वा प्राप्तं तप्तुं नृपस्तपः । नरनारायणस्थानं प्रययौ गंधमादनम् ॥ ५ ॥

---

बुद्धिरिति ॥ प्राणेशः—व्यष्टिवर्गः । पुमान्—समष्टिपुरुषः । पुंसः परतरमिति परस्वरूपमाह ॥ ३३–४४ ॥ तत इति ॥ निजक्रियासूति—स्वकर्मजम् ॥ ४५, ४६ ॥

सोऽहमिति ॥ परमपदं—परमप्राप्यम् । यतः परमपदं न किंचित्, तं त्वामित्यन्वयः । परिणतधाम्नि—निरतिशयतेजसि ॥ ४७ ॥

इति विष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमेंशे त्रयोविंशोऽध्यायः ॥ २३ ॥

कृष्णोऽपि घातयित्वाऽरिमुपायेन हि तद्बलम् । जग्राह मथुरामेत्यहस्त्यश्वस्यन्दनोज्ज्वलम् ॥ ६ ॥
आनीय चोग्रसेनाय द्वारवत्यां न्यवेदयत् । पराभिभवनिश्शङ्कं बभूव च यदोः कुलम् ॥ ७ ॥
बलदेवोऽपि मैत्रेय प्रशान्ताखिलविग्रहः । ज्ञातिदर्शनसोत्कण्ठः प्रययौ नन्दगोकुलम् ॥ ८ ॥
ततो गोपाश्च गोप्यश्च यथापूर्वममित्रजित् । तथैवाभ्यवदत्प्रेम्णा बहुमानपुरस्सरम् ॥ ९ ॥
स कैश्चित्संपरिष्वक्तः कांश्चिच्च परिषस्वजे । हास्यं चक्रे समं कैश्चिद्गोपैर्गोपीजनैस्तथा ॥ १० ॥
प्रियाण्यनेकान्यवदन् गोपास्तत्र हलायुधम् । गोप्यश्च प्रेमकुपिताः प्रोचुस्सेर्ष्यमथापराः ॥ ११ ॥
गोप्यः पप्रच्छुरपरा नागरीजनवल्लभम् । कच्चिदास्ते सुखं कृष्णश्चलप्रेमलवात्मकः ॥ १२ ॥
अस्मच्चेष्टामपहसन्न कच्चित्पुरयोषिताम् । सौभाग्यमानमधिकं करोति क्षणसौहृदः ॥ १३ ॥
कच्चित्स्मरति नः कृष्णो गीतानुगमनं कलम् । अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति ॥ १४ ॥
अथवा किं तदालापैः क्रियन्तामपराः कथाः । यस्यास्माभिर्विना तेन विनाऽस्माकं भविष्यति ॥ १५ ॥
पिता माता तथा भ्राता भर्ता बंधुजनश्च किम् । संत्यक्तस्तत्कृतेऽस्माभिरकृतज्ञध्वजो हि सः ॥ १६ ॥
तथापि कच्चिदालापमिहागमनसंश्रयम् । करोति कृष्णो वक्तव्यं भवता राम नानृतम् ॥ १७ ॥
दामोदरोऽसौ गोविन्दः पुरस्त्रीसक्तमानसः । अपेतप्रीतिरस्मासु दुर्दर्शः प्रतिभाति नः ॥ १८ ॥
आमन्त्रितश्च कृष्णेति पुनर्दामोदरेति च । जहसुस्सस्वरं गोप्यो हरिणा हृतचेतसः ॥ १९ ॥
संदेशैस्साममधुरैः प्रेमगर्भैरगर्वितैः । रामेणाश्वासिता गोप्यः कृष्णस्यातिमनोहरैः ॥ २० ॥
गोपैश्च पूर्ववद्रामः परिहासमनोहराः । कथाश्चकार रेमे च सह तैर्व्रजभूमिषु ॥ २१ ॥

इति श्रीविष्णुपुराणे पंचमेंशे चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## अथ चतुर्विंशोऽध्यायः

॥ १–४ ॥ तत इति ॥ प्राप्तम्—आसन्नम् ॥ ५–९ ॥ स इति ॥ कैश्चित्—वृद्धैः, कांश्चित्—यवीयसः, कैश्चित्—समैः ॥ १० ॥ प्रियाणीति ॥ गोप्यश्च मध्यस्थाः । अपरा रामकान्ताः ॥ ११ ॥

गोप्य इति ॥ अपराः—कृष्णकान्ता गोप्यः पप्रच्छुः ॥ १२ ॥ अस्मदिति ॥ सौभाग्यमेव मानम् । अस्मच्चेष्टामपहसन्निति नागरीगर्वहेतुः । चेष्टापहसनमिति पाठेऽप्यपहसनं गर्वहेतुः ॥ १३ ॥

कच्चिदिति ॥ गीतानुगमनं—गीतस्यानुगमनम् । अप्यसावित्युत्कण्ठा, चकारोऽध्याहार्यः ॥ १४ ॥

अथवेति ॥ अथवेति निर्वेदः । भविष्यति—जीवनं कालयात्रा वा । इदं चित्तसमाधानम् । विनेति स्नेहानुतापौ ॥ १५ ॥ पितेति ॥ किं—किमर्थं संत्यक्तः ? अकृतज्ञानां ध्वजः—प्रधानः ॥ १६ ॥

तथापीति ॥ तथापीति प्रत्याशा ॥ १७ ॥ दामोदर इति ॥ दुर्दर्श इति नैराश्योक्तिः ॥ १८ ॥

आमन्त्रितश्चेति ॥ अत्र भावसंकरस्य बीजं हरिणा हृतचेतस्त्वम् । अत्र कृष्णरतिरूपस्थायीभावः । तत्संचारीभावस्तु निर्वेदादिः ॥ १९–२१ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पञ्चमेंशे चतुर्विंशोऽध्यायः ॥ २४ ॥

## अथ पञ्चविंशोऽध्यायः

श्रीपराशरः—

वने विचरतस्तस्य सह गोपैर्महात्मनः । मानुषच्छद्मरूपस्य शेषस्य धरणीधृतः ॥ १ ॥
निष्पादितोरुकार्यस्य कार्येणोर्वीप्रचारिणः । उपभोगार्थमत्यर्थं वरुणः प्राह वारुणीम् ॥ २ ॥
अभीष्टा सर्वदा यस्य मदिरे त्वं महौजसः । अनन्तस्योपभोगाय तस्य गच्छ मुदे शुभे ॥ ३ ॥
इत्युक्ता वारुणी तेन सन्निधानमथाकरोत् । वृन्दावनसमुत्पन्नकदम्बतरुकोटरे ॥ ४ ॥
विचरन् बलदेवोऽपि मदिरागन्धमुत्तमम् । आघ्राय मदिरातर्षमवापाथ वराननः ॥ ५ ॥
ततः कदम्बात्सहसा मद्यधारां स लाङ्गली । पतन्तीं वीक्ष्य मैत्रेय प्रययौ परमां मुदम् ॥ ६ ॥
पपौ च गोपगोपीभिस्समुपेतो मुदाऽन्वितः । प्रगीयमानो ललितं गीतवाद्यविशारदैः ॥ ७ ॥
मत्तोऽत्यन्तघर्माम्भःकणिकामौक्तिकोज्ज्वलः । आगच्छ यमुने स्नातुमिच्छामीत्याह विह्वलः ॥ ८ ॥
तस्य वाचं नदी सा तु मत्तोक्तामवमत्य वै । नाजगाम ततः क्रुद्धो हलं जग्राह लाङ्गली ॥ ९ ॥
गृहीत्वा तां हलान्तेन चकर्ष मदविह्वलः । पापे नायासि नायासि गम्यतामिच्छयाऽन्यतः ॥ १० ॥
सा कृष्टा सहसा तेन मार्गं संत्यज्य निम्नगा । यत्रास्ते बलभद्रोऽसौ प्लावयामास तद्वनम् ॥ ११ ॥
शरीरिणी तदाऽभ्येत्य त्रासविह्वललोचना । प्रसीदेत्यब्रवीद्रामं मुञ्च मां मुसलायुध ॥ १२ ॥
ततस्तस्यास्सुवचनमाकर्ण्य स हलायुधः । सोऽब्रवीदवजानासि मम शौर्यबले नदि ॥
सोऽहं त्वां हलपातेन नयिष्यामि सहस्रधा ॥ १३ ॥

श्रीपराशरः—

इत्युक्तयाऽतिसंत्रासात्तया नद्या प्रसादितः । भूभागे प्लाविते तस्मिन्मुमोच यमुनां बलः ॥ १४ ॥
ततस्स्नातस्य वै कान्तिरजायत महात्मनः ॥ १५ ॥
अवतंसोत्पलं चारु गृहीत्वैकं च कुण्डलम् । वरुणप्रहितां चास्मै मालामम्लानपङ्कजाम् ॥
समुद्राभे तथा वस्त्रे नीले लक्ष्मीरयच्छत ॥ १६ ॥
कृतावतंसस्स तदा चारुकुण्डलभूषितः । नीलाम्बरधरस्स्रग्वी शुशुभे कान्तिसंयुतः ॥ १७ ॥
इत्थं विभूषितो रेमे तत्र रामस्तथा व्रजे । मासद्वयेन यातश्च स पुनर्द्वारकां पुरीम् ॥ १८ ॥

---

## अथ पञ्चविंशोऽध्यायः

॥ १ ॥ निष्पादितेति ॥ कार्येण—देवानाम् ॥ २—४ ॥ विचरन्निति ॥ तर्षं—तृष्णाम् ॥ ५—९ ॥ गृहीत्वेति ॥ नायासि नायासीति कोपाद्वीप्सा । गम्यतां शक्तिरस्ति चेत् ॥ १०—१५ ॥ अवतंसेति ॥ अवतंसेत्यादि अयच्छतेत्यन्तमेकं वाक्यम् ॥ उत्पलं—महोत्पलम् । यथा हरिवंशे श्रीवचनम् * जातरूपमयं चैकं कुण्डलं वज्रभूषणम् । आदिपद्मं च पद्माक्ष दिव्यं श्रवणभूषणम् ॥ वेदीमां

रेवतीं नाम तनयां रैवतस्य महीपतेः । उपयेमे बलस्तस्यां जज्ञाते निशितोल्मुकौ ॥ १९ ॥

इति श्रीविष्णुपुराणे पञ्चमेंशे पञ्चविंशोऽध्यायः ॥ २५ ॥

## अथ षड्विंशोऽध्यायः

श्रीपराशरः—

भीष्मकः कुण्डिने राजा विदर्भविषयेऽभवत् । रुक्मी तस्याभवत्पुत्रो रुक्मिणी च वरानना ॥ १ ॥
रुक्मिणीं चकमे कृष्णस्सा च तं चारुहासिनी । न ददौ याचते चैनां रुक्मिद्वेषेण चक्रिणे ॥ २ ॥
ददौ च शिशुपालाय जरासंधप्रचोदितः । भीष्मको रुक्मिणा सार्धं रुक्मिणीमुरुविक्रमः ॥ ३ ॥
विवाहार्थं ततस्सर्वे जरासंधमुखा नृपाः । भीष्मकस्य पुरं जग्मुश्शिशुपालप्रियैषिणः ॥ ४ ॥
कृष्णोऽपि बलभद्राद्यैर्यदुभिः परिवारितः । प्रययौ कुण्डिनं द्रष्टुं विवाहं चैद्यभूभृतः ॥ ५ ॥
श्वोभाविनि विवाहे तु तां कन्यां हृतवान्हरिः । विपक्षभारमासज्य रामादिष्वथ बंधुषु ॥ ६ ॥
ततश्च पौण्ड्रकश्श्रीमान्दन्तवक्रो विदूरथः । शिशुपालजरासंधसाल्वाधाश्च महीभृतः ॥ ७ ॥
कुपितास्ते हरिं हन्तुं चक्रुरुद्योगमुत्तमम् । निर्जिताश्च समागम्य रामाद्यैर्यदुपुङ्गवैः ॥ ८ ॥
कुण्डिनं न प्रवेक्ष्यामि ह्यहत्वा युधि केशवम् । कृत्वा प्रतिज्ञां रुक्मी च हन्तुं कृष्णमनुद्रुतः ॥ ९ ॥
हत्वा बलं सनागाश्वं पत्तिस्यन्दनसंकुलम् । निर्जितः पातितश्चोर्व्यां लीलयैव स चक्रिणा ॥ १० ॥
निर्जित्य रुक्मिणं सम्यगुपयेमे च रुक्मिणीम् । राक्षसेन विवाहेन संप्राप्तां मधुसूदनः ॥ ११ ॥
तस्यां जज्ञे च प्रद्युम्नो मदनांशस्स वीर्यवान् । जहार शंबरो यं वै यो जघान च शंबरम् ॥ १२ ॥

इति श्रीविष्णुपुराणे पंचमेंशे षड्विंशोऽध्यायः ॥ २६ ॥

---

प्रतिगृह्णीष्व पौराणीं भूषणक्रियाम् । संगृह्य तमलङ्कारं ताश्च तिस्रः श्रियो बभौ ॥ इति । तदेवमत्र वारुणी-कान्तिलक्ष्म्यस्तिस्रश्शक्तयो रामस्य देव्य इत्युक्तम् ॥ १६–१९ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पञ्चमेंशे पञ्चविंशोऽध्यायः ॥ २५ ॥

## अथ षड्विंशोऽध्यायः

॥ १, २ ॥ ददौ चेति ॥ जरासंधप्रचोदित इति ॥ शिशुपालो हि जरासन्धस्य दत्तपुत्रः, कृष्णस्तु द्वेष्यः ; अतस्तत्प्रीत्यै शिशुपालाय ददौ—वाचा ददौ ॥ ३–५ ॥

श्व इति ॥ विपक्षभारं—विपक्षयुद्धकृत्यम् ॥ ६–१२ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पञ्चमेंशे षड्विंशोऽध्यायः ॥ २६ ॥

## अथ सप्तत्रिंशोऽध्यायः

श्रीमैत्रेयः

शंबरेण हृतो वीरः प्रद्युम्नः स कथं मुने । शंबरः स महावीर्यः प्रद्युम्नेन कथं हतः ॥ १ ॥

यस्तेनापहृतः पूर्वं स कथं विजघान तम् । एतद्विस्तरतः श्रोतुमिच्छामि सकलं गुरो ॥ २ ॥

श्रीपराशरः—

षष्ठेऽह्नि जातमात्रं तु प्रद्युम्नं सूतिकागृहात् । ममैष हन्तेति मुने हृतवान्कालशंबरः ॥ ३ ॥

हृत्वा चिक्षेप चैवैनं ग्राहोग्रे लवणार्णवे । कल्लोलजनितावर्ते सुघोरे मकरालये ॥ ४ ॥

पातितं तत्र चैवैको मत्स्यो जग्राह बालकम् । न ममार च तस्यापि जठराग्निप्रदीपितः ॥ ५ ॥

मत्स्यबन्धैश्च मत्स्योऽसौ मत्स्यैरन्यैस्सह द्विज । घातितोऽसुरवर्याय शंबराय निवेदितः ॥ ६ ॥

तस्य मायावती नाम पत्नी सर्वगृहेश्वरी । कारयामास सूदानामाधिपत्यमनिंदिता ॥ ७ ॥

दारिते मत्स्यजठरे सा ददर्शातिशोभनम् । कुमारं मन्मथतरोर्दग्धस्य प्रथमाङ्कुरम् ॥ ८ ॥

कोऽयं कथमयं मत्स्यजठरे प्रविवेशितः । इत्येवं कौतुकाविष्टां तन्वीं प्राहाथ नारदः ॥ ९ ॥

अयं समस्तजगतः स्थितिसंहारकारिणः । शंबरेण हृतो विष्णोस्तनयः सूतिकागृहात् ॥ १० ॥

क्षिप्तस्समुद्रे मत्स्येन निगीर्णस्ते गृहं गतः । नररत्नमिदं सुभ्रु विस्रब्धा परिपालय ॥ ११ ॥

श्रीपराशरः—

नारदेनैवमुक्ता सा पालयामास तं शिशुम् । बाल्यादेवातिरागेण रूपातिशयमोहिता ॥ १२ ॥

स यदा यौवनाभोगभूषितोऽभून्महामते । साभिलाषा तदा साऽपि बभूव गजगामिनी ॥ १३ ॥

मायावती ददौ तस्मै मायास्सर्वा महामुने । प्रद्युम्नायानुरागान्धा तन्न्यस्तहृदयेक्षणा ॥ १४ ॥

प्रसजन्तीं तु तां प्राह स कार्ष्णिः कमलेक्षणाम् । मातृत्वमपहायाद्य किमेवं वर्तसेऽन्यथा ॥ १५ ॥

सा तस्मै कथयामास न पुत्रस्त्वं ममेति वै । तनयं त्वामयं विष्णोर्हृतवान्कालशंबरः ॥ १६ ॥

क्षिप्तः समुद्रे मत्स्यस्य संप्राप्तो जठरान्मया । सा हि रोदिति ते माता कान्ताद्याप्यतिवत्सला ॥ १७ ॥

श्रीपराशरः—

इत्युक्तश्शंबरं युद्धे प्रद्युम्नः स समाह्वयत् । क्रोधाकुलीकृतमना युयुधे च महाबलः ॥ १८ ॥

---

### अथ सप्तत्रिंशोऽध्यायः



॥ १, २ ॥ षष्ठेऽह्नीति ॥ कालशंबरः—कालः कृष्णः, कालश्चासौ शंबरश्च ॥ ३–१३ ॥

मायावतीति ॥ मायाः — मोहनविद्याः ॥ १४ ॥

प्रसजन्तीमिति ॥ प्रसजन्तीं—प्रकर्षेणानुरजन्तीम् ॥ १५–१८ ॥

हत्वा सैन्यमशेषं तु तस्य दैत्यस्य यादवः । सप्त माया व्यतिक्रम्य मायां प्रयुयुजेऽष्टमीम् ॥ १९ ॥
तया जघान तं दैत्यं मायया कालशंबरम् । उत्पत्य च तया सार्धमाजगाम पितुः पुरम् ॥ २० ॥
अन्तःपुरे निपतितं मायावत्या समन्वितम् । तं दृष्ट्वा कृष्णसंकल्पा बभूवुः कृष्णयोषितः ॥ २१ ॥
रुक्मिणी साऽभवत्प्रेम्णा सास्रदृष्टिरनिन्दिता । धन्यायाः खल्वयं पुत्रो वर्तते नवयौवने ॥ २२ ॥
अस्मिन्वयसि पुत्रो मे प्रद्युम्नो यदि जीवति । सभाग्या जननी वत्स सा त्वया का विभूषिता ॥ २३ ॥
अथवा यादृशः स्नेहो मम यादृग्वपुस्तव । हरेरपत्यं सुव्यक्तं भवान्वत्स भविष्यति ॥ २४ ॥

श्रीपराशरः—

एतस्मिन्नन्तरे प्राप्तस्सह कृष्णेन नारदः । अन्तःपुरचरां देवीं रुक्मिणीं प्राह हर्षयन् ॥ २५ ॥
एष ते तनयः सुभ्रु हत्वा शंबरमागतः । हृतो येनाभवद्बालो भवत्यास्सूतिकागृहात् ॥ २६ ॥
इयं मायावती भार्या तनयस्यास्य ते सती । शंबरस्य न भार्येयं श्रूयतामत्र कारणम् ॥ २७ ॥
मन्मथे तु गते नाशं तदुद्भवपरायणा । शंबरं मोहयामास मायारूपेण रूपिणी ॥ २८ ॥
विहाराद्युपभोगेषु रूपं मायामयं शुभम् । दर्शयामास दैत्यस्य तस्येयं मदिरेक्षणा ॥ २९ ॥
कामोऽवतीर्णः पुत्रस्ते तस्येयं दयिता रतिः । विशंका नात्र कर्तव्या स्नुषेयं तव शोभने ॥ ३० ॥
ततो हर्षसमाविष्टौ रुक्मिणीकेशवौ तदा । नगरी च समस्ता सा साधुसाध्वित्यभाषत ॥ ३१ ॥
चिरं नष्टेन पुत्रेण संगतां प्रेक्ष्य रुक्मिणीम् । अवाप विस्मयं सर्वो द्वारवत्यां तदा जनः ॥ ३२ ॥

इति श्रीविष्णुपुराणे पञ्चमेंशे सप्तविंशोऽध्यायः ॥ २७ ॥

---

## अथाष्टाविंशोऽध्यायः

श्रीपराशरः—

चारुदेष्णं सुदेष्णं च चारुदेहं च वीर्यवान् । सुषेणं चारुगुप्तं च भद्रचारुं तथा परम् ॥ १ ॥
चारुविन्दं सुचारुं च चारुं च बलिनां वरम् । रुक्मिण्यजनयत्पुत्रान्कन्यां चारुमतीं तथा ॥ २ ॥
अन्याश्च भार्याः कृष्णस्य बभूवुस्सप्त शोभनाः । कालिन्दी मित्रविन्दा च सत्या नाग्नजिती तथा ॥ ३ ॥
देवी जाम्बवती चापि रोहिणी कामरूपिणी । मद्रराजसुता चान्या सुशीला शीलमण्डना ॥ ४ ॥
सत्राजिती सत्यभामा लक्ष्मणा चारुहासिनी । षोडशासन् सहस्राणि स्त्रीणामन्यानि चक्रिणः ॥ ५ ॥
प्रद्युम्नोऽपि महावीर्यो रुक्मिणस्तनयां शुभाम् । स्वयंवरे तां जग्राह सा च तं तनयं हरेः ॥ ६ ॥

---

हत्वेति ॥ सप्त मायाः व्यतिक्रम्य—शंबरप्रयुक्ताः व्यतिक्रम्य । प्रयुयुजे—प्रयुक्तवान् ॥ १९–२० ॥

अन्तःपुर इति ॥ कृष्णसंकल्पाः—कृष्णोऽयमिति भ्रान्ताः ॥ २१, २२ ॥

अस्मिन्निति ॥ प्रद्युम्नः—प्रद्युम्न इति चिकीर्षितसंज्ञः, अस्मिन् वयसि वर्तेतेति शेषः ॥ २३–३२ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पञ्चमेंशे सप्तविंशोऽध्यायः ॥ २७ ॥

तस्यामस्याभवत्पुत्रो महाबलपराक्रमः । अनिरुद्धो रणेऽरुद्धवीर्योदधिररिंदमः ॥ ७ ॥
तस्यापि रुक्मिणः पौत्रीं वरयामास केशवः । दौहित्राय ददौ रुक्मी तां स्पर्द्धन्नपि चक्रिणा ॥८॥
तस्या विवाहे रामाद्या यादवा हरिणा सह । कल्याणार्थं ततस्सर्वे ये चान्ये भूभृतस्तथा ॥
रुक्मिणो नगरं जग्मुर्नाम्ना भोजकटं द्विज ॥ ९ ॥
विवाहे तत्र निर्वृत्ते प्रद्युम्नस्य महात्मनः । कलिंगराजप्रमुखा रुक्मिणं वाक्यमब्रुवन् ॥ १० ॥
अनक्षज्ञो हली द्यूते तथाऽस्य व्यसनं महत् । तज्जयामो बलं कस्माद्द्यूते नैनं महाबलम् ॥ ११ ॥

श्रीपराशरः—

तथेति तानाह नृपान्रुक्मी बलमदान्वितः । सभायां सह रामेण चक्रे द्यूतं च वै तदा ॥ १२ ॥
सहस्रमेकं निष्काणां रुक्मिणा विजितो बलः । द्वितीयेऽपि पणे चान्यत्सहस्रं रुक्मिणा जितः ॥१३॥
ततो दशसहस्राणि निष्काणां पणमाददे । बलभद्रोऽजयत्तानि रुक्मी द्यूतविदां वरः ॥ १४ ॥
ततो जहास स्वनवत्कलिंगाधिपतिर्द्विज । दन्तान्विदर्शयन्मूढो रुक्मी चाह मदोद्धतः ॥ १५ ॥
अविद्योऽयं मया द्यूते बलभद्रः पराजितः । मुधैवाक्षावलेपान्धो योऽवमेनेऽक्षकोविदान् ॥ १६ ॥
दृष्ट्वा कलिंगराजानं प्रकाशदशनाननम् । रुक्मिणं चापि दुर्वाक्यं कोपं चक्रे हलायुधः ॥ १७ ॥
ततः कोपपरीतात्मा निष्ककोटिं समाददे । ग्लहं जग्राह रुक्मी च तदर्थेऽक्षानपातयत् ॥ १८ ॥
अजयद्बलदेवस्तं प्राहोच्चैर्विजितं मया । ममेति रुक्मी प्राहोच्चैरलीकोक्तेरलं बल ॥ १९ ॥
त्वयोक्तोऽयं ग्लहस्सत्यं न ममैषोऽनुमोदितः । एवं त्वया चेद्विजितं विजितं न मया कथम् ॥ २० ॥

श्रीपराशरः—

अथान्तरिक्षे वागुच्चैः प्राह गंभीरनादिनी । बलदेवस्य तं कोपं वर्धयन्ती महात्मनः ॥ २१ ॥
जितं बलेन धर्मेण रुक्मिणा भाषितं मृषा । अनुक्त्वाऽपि वचः किंचित्कृतं भवति कर्मणा ॥२२॥

---

अथाष्टाविंशोऽध्यायः

॥ १,२ ॥ अन्या इति ॥ मित्रविन्दा-सत्या-जांबवती-रोहिणी-सुशीला-सत्यभामा-लक्ष्मणाख्यास्सप्त प्रधानाः । आसां कालिन्द्यादीनि क्रमाद्विशेषणानि । इयं लक्ष्मणा चतुर्थेंशे चारुहासिनीत्युक्ता ॥ ३–१० ॥

अनक्षज्ञ इति ॥ तथा—तथाऽपि । व्यसनम्—आसङ्गः ॥ ११–१७ ॥

तत इति ॥ ग्लहं—पणम् । तदर्थे—कोटिग्लहार्थे तथेत्यनुक्त्वाऽक्षानपातयत् ॥ १८, १९ ॥

त्वयेति ॥ त्वयोक्तस्य पणबन्धस्योभयानुमत्या भाव्यतया तया विनाऽप्यन्यतरजयश्चेदितरस्यापि स एव जयः किं न स्यादिति भावः ॥ २०, २१ ॥

जितमिति ॥ अनुक्त्वा—ग्लहानुज्ञावचनमकृत्वाऽप्यक्षपातनादिना कर्मणा तद्वचनं कृतं भवति । अनुमतिमूलक्रियानुष्ठानदर्शनात् अनुमतिस्सिद्धैवेति भावः ॥ २२ ॥

ततो बलस्समुत्थाय कोपसंरक्तलोचनः । जघानाष्टापदेनैव रुक्मिणं स महाबलः ॥ २३ ॥
कलिंगराजं चादाय विस्फुरन्तं बलाद्बलः । बभञ्ज दन्तान्कुपितो यैः प्रकाशैर्जहास सः ॥ २४ ॥
आकृष्य च महास्तम्भं जातरूपमयं बलः । जघान तान्ये तत्पक्षे भूभृतः कुपितो भृशम् ॥ २५ ॥
ततो हाहाकृतं सर्वं पलायनपरं द्विज । तद्राजमण्डलं भीतं बभूव कुपिते बले ॥ २६ ॥
बलेन निहतं दृष्ट्वा रुक्मिणं मधुसूदनः । नोवाच किंचिन्मैत्रेय रुक्मिणीबलयोर्भयात् ॥ २७ ॥
ततोऽनिरुद्धमादाय कृतदारं द्विजोत्तम । द्वारकामाजगामाथ यदुचक्रं च केशवः ॥ २८ ॥

इति श्रीविष्णुपुराणे पञ्चमेंशेऽष्टाविंशोऽध्यायः ॥ २८ ॥

## अथैकोनत्रिंशोऽध्यायः



श्रीपराशरः—

द्वारवत्यां स्थिते कृष्णे शक्रस्त्रिभुवनेश्वरः । आजगामाथ मैत्रेय मत्तैरावतपृष्ठगः ॥ १ ॥
प्रविश्य द्वारकां सोऽथ समेत्य हरिणा ततः । कथयामास दैत्यस्य नरकस्य विचेष्टितम् ॥ २ ॥
त्वया नाथेन देवानां मनुष्यत्वेऽपि तिष्ठता । प्रशमं सर्वदुःखानि नीतानि मधुसूदन ॥ ३ ॥
तपस्विव्यसनार्थाय सोऽरिष्टो धेनुकस्तथा । प्रवृत्तो यस्तथा केशी ते सर्वे निहतास्त्वया ॥ ४ ॥
कंसः कुवलयापीडः पूतना बालघातिनी । नाशं नीतास्त्वया सर्वे येऽन्ये जगदुपद्रवाः ॥ ५ ॥
युष्मद्दोर्दण्डसंभूतिपरित्राते जगत्त्रये । यज्वयज्ञांशसंप्राप्त्या तृप्तिं यान्ति दिवौकसः ॥ ६ ॥
सोऽहं सांप्रतमायातो यन्निमित्तं जनार्दन । तच्छ्रुत्वा तत्प्रतीकारप्रयत्नं कर्तुमर्हसि ॥ ७ ॥
भौमोऽयं नरको नाम प्राग्ज्योतिषपुरेश्वरः । करोति सर्वभूतानामुपघातमरिंदम ॥ ८ ॥
देवसिद्धसुरादीनां नृपाणां च जनार्दन । हृत्वा तु सोऽसुरः कन्या रुरुधे निजमन्दिरे ॥ ९ ॥
छत्रं यत्सलिलस्रावि तज्जहार प्रचेतसः । मन्दरस्य तथा शृङ्गं हृतवान्मणिपर्वतम् ॥ १० ॥
अमृतस्राविणी दिव्ये मन्मातुः कृष्ण कुण्डले । जहार सोऽसुरोऽदित्या वाञ्छत्यैरावतं गजम् ॥११॥
दुर्नीतमेतद्गोविन्द मया तस्य निवेदितम् । यदत्र प्रतिकर्तव्यं तत्स्वयं परिमृश्यताम् ॥ १२ ॥

श्रीपराशरः—

इति श्रुत्वा स्मितं कृत्वा भगवान्देवकीसुतः । गृहीत्वा वासवं हस्ते समुत्तस्थौ वरासनात् ॥ १३ ॥

---

तत इति ॥ अष्टापदेन—द्यूतफलकेन ॥ २३, २४ ॥

आकृष्येति ॥ पञ्चरूपं—पञ्चवर्णम् । त्रिचित्रनिर्मितं च पाठः ॥ २५–२८ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पञ्चमेंशेऽष्टाविंशोऽध्यायः ॥ २८ ॥

## अथैकोनत्रिंशोऽध्यायः



इदानीं भौमवधप्रसंगेन हरेः सत्यभामया सह स्वर्गगमनपारिजातहरणादिकमाह—द्वारवत्यामिति ॥ १–५ ॥

युष्मदिति ॥ संभूतिः—सत्ता ॥ ६–१२ ॥

संचिन्त्यागतमारुह्य गरुडं गगनेचरम् । सत्यभामां समारोप्य ययौ प्राग्ज्योतिषं पुरम् ॥ १४ ॥
आरुह्यैरावतं नागं शक्रोऽपि त्रिदिवं ययौ । ततो जगाम कृष्णश्च पश्यतां द्वारकौकसाम् ॥ १५ ॥
प्राग्ज्योतिषपुरस्यापि समन्ताच्छतयोजनम् । आचिता मौरवैः पाशैः क्षुरान्तैर्भूर्द्विजोत्तम ॥ १६ ॥
तांश्चिच्छेद हरिः पाशान्क्षिप्त्वा चक्रं सुदर्शनम् । ततो मुरस्समुत्तस्थौ तं जघान च केशवः ॥१७॥
मुरस्य तनयान्सप्त सहस्रांस्तांस्ततो हरिः । चक्रधाराग्निनिर्दग्धांश्चकार शलभानिव ॥ १८ ॥
हत्वा मुरं हयग्रीवं तथा पञ्चजनं द्विज । प्राग्ज्योतिषपुरं धीमांस्त्वरावान्समुपाद्रवत् ॥ १९ ॥
नरकेनास्य तत्राभून्महासैन्येन संयुगम् । कृष्णस्य यत्र गोविन्दो जघ्ने दैत्यान्सहस्रशः ॥ २० ॥
शस्त्रास्त्रवर्षं मुञ्चन्तं तं भौमं नरकं बली । क्षिप्त्वा चक्रं द्विधा चक्रे चक्री दैतेयचक्रहा ॥ २१ ॥
हते तु नरके भूमिर्गृहीत्वाऽदितिकुण्डले । उपतस्थे जगन्नाथं वाक्यं चेदमथाब्रवीत् ॥ २२ ॥

पृथ्व्युवाच :—

यदाऽहमुद्धृता नाथ त्वया सूकरमूर्तिना । त्वत्स्पर्शसंभवः पुत्रस्तदाऽयं मय्यजायत ॥ २३ ॥
सोऽयं त्वयैव दत्तो मे त्वयैव विनिपातितः । गृहाण कुण्डले चेमे पालयास्य च संततिम् ॥ २४ ॥
भारावतरणार्थाय ममैव भगवानिमम् । अंशेन लोकमायातः प्रसादसुमुखः प्रभो ॥ २५ ॥
त्वं कर्ता च विकर्ता च संहर्ता प्रभवोऽप्ययः । जगतां त्वं जगद्रूपस्स्तूयतेऽच्युत किं तव ॥२६॥
व्यापी व्याप्यं क्रियाकर्ता कार्यं च भगवान्यथा । सर्वभूतात्मभूतस्य स्तूयते तव किं तथा ॥ २७ ॥
परमात्मा च भूतात्मा त्वमात्मा चाव्ययो भवान् । यथातथा स्तुतिर्नाथ किमर्थं ते प्रवर्तते ॥२८॥
प्रसीद सर्वभूतात्मन्नरकेण तु यत्कृतम् । तत्क्षम्यतामदोषाय त्वत्सुतस्त्वन्निपातितः ॥ २९ ॥

श्रीपराशर:—

तथेति चोक्त्वा धरणीं भगवान्भूतभावनः । रत्नानि नरकावासाज्जग्राह मुनिसत्तम ॥ ३० ॥
कन्यापुरे स कन्यानां षोडशातुलविक्रमः । शताधिकानि ददृशे सहस्राणि महामुने ॥ ३१ ॥
चतुर्दंष्ट्रान्गजांश्चाग्र्यान् षट्सहस्रांश्च दृष्टवान् । कांभोजानां तथाऽश्वानां नियुतान्येकविंशतिम् ॥३२॥
ताः कन्यास्तांस्तथा नागांस्तानश्वान् द्वारकां पुरीम् । प्रापयामास गोविन्दस्सद्यो नरककिंकरैः ॥३३॥

---

संचिन्त्येति ॥ सत्यभामासमारोपणं तस्याः भूम्यंशत्वात् त्वत्पुत्रं त्वदनुज्ञया हनिष्यामीति वरदानात्तदनुज्ञया भौमं हन्तुम्, तथा नारददत्तपारिजातपुष्पप्रीतरुक्मिणीर्ष्यया क्रुद्धसत्यभामासांत्वने तुभ्यं तं तरुमेव दास्यामीति हरिवंशोक्तां प्रतिज्ञां च कर्तुम् ॥ १४, १५ ॥

प्राग्ज्योतिषपुरस्येति ॥ मौरवैः—मुरसंज्ञरक्षःकृतैः ॥ १६—२५ ॥

त्वमिति ॥ कर्ता—निमित्तकारणम् । विकर्ता—विशेषेण कर्ता, पोषकः । प्रभवोद्भवः—प्रभवस्य जन्मनः उपादानम् । तव संबंधि किं स्तूयते ॥ २६—२८ ॥

ददृशे वारुणं च्छत्रं तथैव मणिपर्वतम् । आरोपयामास हरिर्गरुडे पतगेश्वरे ॥ ३४ ॥
आरुह्य च स्वयं कृष्णस्सत्यभामासहायवान् । अदित्याः कुण्डले दातुं जगाम त्रिदशालयम् ॥ ३५ ॥

इति श्रीविष्णुपुराणे पञ्चमेंऽशे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## अथ त्रिंशोऽध्यायः

श्रीपराशरः—

गरुडो वारुणं छत्रं तथैव मणिपर्वतम् । सभार्यं च हृषीकेशं लीलयैव वहन्ययौ ॥ १ ॥
ततश्शंखमुपाध्मासीत्स्वर्गद्वारगतो हरिः । उपतस्थुस्तथा देवास्सार्घ्यहस्ता जनार्दनम् ॥ २ ॥
स देवैरर्चितः कृष्णो देवमातुर्निवेशनम् । सिताभ्रशिखराकारं प्रविश्य ददृशेऽदितिम् ॥ ३ ॥
स तां प्रणम्य शक्रेण सह ते कुण्डलोत्तमे । ददौ नरकनाशं च शशंसास्यै जनार्दनः ॥ ४ ॥
ततः प्रीता जगन्माता धातारं जगतां हरिम् । तुष्टावादितिरव्यग्रा कृत्वा तत्प्रवणं मनः ॥ ५ ॥

अदितिः—

नमस्ते पुण्डरीकाक्ष भक्तानामभयंकर । सनातनात्मन् सर्वात्मन् भूतात्मन् भूतभावन ॥ ६ ॥
प्रणेतर्मनसो बुद्धेरिन्द्रियाणां गुणात्मक । त्रिगुणातीत निर्द्वन्द्व शुद्धसत्त्वहृदि स्थित ॥ ७ ॥
सितदीर्घादिनिश्शेषकल्पनापरिवर्जित । जन्मादिभिरसंस्पृष्ट स्वप्नादिपरिवर्जित ॥ ८ ॥
सन्ध्यारात्रिरहो भूमिर्गगनं वायुरम्बु च । हुताशनो मनो बुद्धिर्भूतादिस्त्वं तथाऽच्युत ॥ ९ ॥
सर्गस्थितिविनाशानां कर्ता कर्तृपतिर्भवान् । ब्रह्मविष्णुशिवाख्याभिरात्ममूर्तिभिरीश्वर ॥ १० ॥
देवा दैत्यास्तथा यक्षा राक्षसास्सिद्धपन्नगाः । कूश्माण्डाश्च पिशाचाश्च गंधर्वा मनुजास्तथा ॥ ११ ॥
पशवश्च मृगाश्चैव पतङ्गाश्च सरीसृपाः । वृक्षगुल्मलता बह्व्यस्समस्तास्तृणजातयः ॥ १२ ॥

---

प्रसीदेति ॥ अदोषाय—धर्मस्थापनाय ॥ २९–३५ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पञ्चमेंऽशे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## अथ त्रिंशोऽध्यायः

॥ १–६ ॥ प्रणेतरिति ॥ गुणात्मक—कल्याणगुणात्मक ॥ ७–९ ॥

सर्गेति ॥ कर्तृपतिः—कर्तॄणां ब्रह्मादीनां पतिः ॥ १० ॥

देवा इति ॥ देवा इत्यादिना तृणजातय इत्यन्तेन भगवतो देवतिर्यगादिचतुर्विधचेतनात्मत्वमुच्यते ॥ ११, १२ ॥

स्थूला मध्यास्तथा सूक्ष्मास्सूक्ष्मात् सूक्ष्मतराश्च ये। देहभेदा भवान् सर्वे ये केचित्पुर्गलाश्रयाः॥१३॥
माया तवेयमज्ञातपरमार्थाऽतिमोहिनी। अनात्मन्यात्मविज्ञानं यया मूढो निरुद्ध्यते॥ १४॥
अस्वे स्वमिति भावोऽत्र यत्पुंसामुपजायते। अहं ममेति भावो यत्प्रायेणैवाभिजायते।
संसारमातुर्मायायास्तवैतन्नाथ चेष्टितम्॥ १५॥
यैस्स्वधर्मपरैर्नाथ नरैराराधितो भवान्। ते तरन्त्यखिलामेतां मायामात्मविमुक्तये॥ १६॥
ब्रह्माद्यास्सकला देवा मनुष्याः पशवस्तथा। विष्णुमायामहावर्तमोहान्धतमसाऽऽवृताः॥ १७॥
आराध्य त्वामभीप्सन्ते कामान्नात्मभवक्षयम्। यदेते पुरुषा माया सैवेयं भगवंस्तव॥ १८॥
मया त्वं पुत्रकामिन्या वैरिपक्षजयाय च। आराधितो न मोक्षाय मायाविलसितं हि तत्॥ १९॥
कौपीनाच्छादनप्राया वाञ्छा कल्पद्रुमादपि। जायते यदपुण्यानां सोऽपराधः स्वदोषजः॥ २०॥
तत्प्रसीदाखिलजगन्मायामोहकराव्यय। अज्ञानं ज्ञानसद्भावभूतं भूतेश नाशय॥ २१॥
नमस्ते चक्रहस्ताय शार्ङ्गहस्ताय ते नमः। नन्दहस्ताय ते विष्णो शंखहस्ताय ते नमः॥ २२॥
एतत्पश्यामि ते रूपं स्थूलचिह्नोपलक्षितम्। न जानामि परं यत्ते प्रसीद परमेश्वर॥ २३॥

---

स्थूला इति॥ स्थूला इत्यादिना पुर्गलाश्रया इत्यन्तेन तस्यैव तद्देहात्मकत्वमुच्यते। ये केचित्पुर्गलाश्रयाः देहभेदाः ते सर्वे भवानित्यन्वयः। पुर्गलो जीवः। यथा कौर्मे—* अहंकारोऽभिमानश्च कर्ता मन्ता च स्मृतः। आत्मा च पुर्गलो जीवो यतस्सर्वाः प्रसूतयः॥ इति॥ * पूरणाद्गलनाद्देहे पुर्गलाः परमाणवः * शहिताः॥ १३॥

मायेति॥ अज्ञातपरमार्था—अज्ञातः परमार्थो ब्रह्म यस्या हेतोस्सा अज्ञातपरमार्था। अतिमोहिनी इयं गुणात्मिका माया तव—त्वदीया। मायाकार्यमाह—अनात्मनीति। अस्यार्थस्य पूर्वेणान्वयः॥ १४॥

अस्वे स्वमिति॥ अस्वे स्वमिति भावः—ज्ञानमुपजायत इति यत्, एतत्तव—त्वदीयायाः संसारमायायाः चेष्टितम्॥ १५, १६॥

ब्रह्माद्या इति॥ मायैव महावर्तः, तत्कृतो मोह एवान्धतमसं, तेनावृताः॥ १७॥

आराध्येति॥ कामानभीप्सन्त इति यत, तत्तव मायैव—मायाचेष्टितमित्यर्थः॥ १८, १९॥

कौपीनेति॥ कौपीनाच्छादनप्राया—तद्बहुला, तद्विषयेत्यर्थः। स्वदोषो—दुष्कर्म॥ २०॥

तदिति॥ मायया मोहो—मायामोहः। ज्ञानसद्भावभूत—सम्यग्ज्ञानस्वरूप। ज्ञानसद्भावभूतमिति पाठे ज्ञानमपि विज्ञानतयाऽवभासमानमज्ञानमिति॥ २१–२३॥

श्रीपराशरः—

अदित्यैवं स्तुतो विष्णुः प्रहस्याह सुरारणिम् । माता देवि त्वमस्माकं प्रसीद वरदा भव ॥ २४ ॥

अदितिरुवाच :—

एवमस्तु यथेच्छा ते त्वमशेषैस्सुरासुरैः । अजेयः पुरुषव्याघ्र मर्त्यलोके भविष्यसि ॥ २५ ॥

श्रीपराशरः—

ततः कृष्णस्य पत्नी च शक्रेण सहिताऽदितिम् । सत्यभामा प्रणम्याह प्रसीदेति पुनःपुनः ॥ २६ ॥

अदितिरुवाच :—

मत्प्रसादान्न ते सुभ्रु जरा वैरूप्यमेव वा । भविष्यत्यनवद्याङ्गि सुस्थिरं नवयौवनम् ॥ २७ ॥

श्रीपराशरः—

अदित्या तु कृतानुज्ञो देवराजो जनार्दनम् । यथावत्पूजयामास बहुमानपुरस्सरम् ॥ २८ ॥
शची च सत्यभामायै पारिजातस्य पुष्पकम् । न ददौ मानुषीं मत्वा स्वयं पुष्पैरलंकृता ॥ २९ ॥
ततो ददर्श कृष्णोऽपि सत्यभामासहायवान् । देवोद्यानानि हृद्यानि नन्दनादीनि सत्तम ॥ ३० ॥
ददर्श च सुगन्धाढ्यं मञ्जरीपुञ्जधारिणम् । नित्याह्लादकरं ताम्रबालपल्लवशोभितम् ॥ ३१ ॥
मथ्यमानेऽमृते जातं जातरूपोपमत्वचम् । पारिजातं जगन्नाथः केशवः केशिसूदनः ॥ ३२ ॥
तुतोष परमप्रीत्या तरुराजमनुत्तमम् । तं दृष्ट्वा प्राह गोविन्दं सत्यभामा द्विजोत्तम ।
कस्मान्न द्वारकामेष नीयते कृष्ण पादपः ॥ ३३ ॥
यदि चेत्त्वद्वचः सत्यं त्वमत्यर्थं प्रियेति मे । मद्गेहनिष्कुटार्थाय तदयं नीयतां तरुः ॥ ३४ ॥
न मे जांबवती तादृगभीष्टा न च रुक्मिणी । सत्ये यथा त्वमित्युक्तं त्वया कृष्णासकृत्प्रियम् ॥ ३५ ॥
सत्यं तद्यदि गोविन्द नोपचारकृतं मम । तदस्तु पारिजातोऽयं मम गेहविभूषणम् ॥ ३६ ॥
बिभ्रती पारिजातस्य केशपक्षेण मञ्जरीम् । सपत्नीनामहं मध्ये शोभेयमिति कामये ॥ ३७ ॥

श्रीपराशरः—

इत्युक्तस्स प्रहस्यैनां पारिजातं गरुत्मति । आरोपयामास हरिस्तमूचुर्वनरक्षिणः ॥ ३८ ॥
भो शची देवराजस्य महिषी तत्परिग्रहम् । पारिजातं न गोविन्द हर्तुमर्हसि पादपम् ॥ ३९ ॥
उत्पन्नो देवराजाय दत्तस्सोऽपि ददौ पुनः । महिष्यै सुमहाभाग देव्यै शच्यै कुतूहलात् ॥ ४० ॥
शचीविभूषणार्थाय देवैरमृतमन्थने । उत्पादितोऽयं न क्षेमी गृहीत्वैनं गमिष्यसि ॥ ४१ ॥
देवराजो मुखप्रेक्षी यस्यास्तस्याः परिग्रहम् । मौढ्यात्प्रार्थयसे क्षेमी गृहीत्वैनं हि को व्रजेत् ॥ ४२ ॥

---

अदित्येति ॥ प्रहस्य—हासेन मोहयित्वा, अरणिः—जन्मभूः ॥ २४–२६ ॥

मत्प्रसादादिति ॥ सर्वकालमनवद्याङ्गी भविष्यसि ॥ २७–३३ ॥

यदीति ॥ निष्कुटः—गृहोद्यानम् ॥ ३४-४२ ॥

अवश्यमस्य देवेन्द्रो निष्कृतिं कृष्ण यास्यति । वज्रोद्यतकरं शक्रमनुयास्यन्ति चामराः ॥ ४३ ॥

तदलं सकलैर्देवैर्विग्रहेण तवाच्युत । विपाककटु यत्कर्म तन्न शंसन्ति पण्डिताः ॥ ४४ ॥

श्रीपराशरः—

इत्युक्ते तैरुवाचैतान् सत्यभामाऽतिकोपिनी । का शची पारिजातस्य को वा शक्रस्सुराधिपः ॥४५॥

सामान्यस्सर्वलोकस्य यद्येषोऽमृतमन्थने । समुत्पन्नस्तरुः कस्मादेको गृह्णाति वासवः ॥ ४६ ॥

यथा सुधा यथैवेन्दुर्यथा श्रीर्वनरक्षिणः । सामान्यस्सर्वलोकस्य पारिजातस्तथा द्रुमः ॥ ४७ ॥

भर्तृबाहुमहागर्वाद्रुणद्ध्येनमथो शची । तत्कथ्यतामलं क्षान्त्या सत्या हारयति द्रुमम् ॥ ४८ ॥

कथ्यतां च द्रुतं गत्वा पौलोम्या वचनं मम । सत्यभामा वदत्येतदितिगर्वोद्धताक्षरम् ॥ ४९ ॥

यदि त्वं दयिता भर्तुर्यदि वश्यः पतिस्तव । मद्भर्तुर्हरतो वृक्षं तत्कारय निवारणम् ॥ ५० ॥

जानामि ते पतिं शक्रं जानामि त्रिदशेश्वरम् । पारिजातं तथाऽप्येनं मानुषी हारयामि ते ॥५१॥

श्रीपराशरः—

इत्युक्ता रक्षिणो गत्वा शच्याः प्रोचुर्यथोदितम् । श्रुत्वा चोत्साहयामास शची शक्रं सुराधिपम् ॥५२॥

ततस्समस्तदेवानां सैन्यैः परिवृतो हरिम् । प्रययौ पारिजातार्थमिन्द्रो योद्धुं द्विजोत्तम ॥ ५३ ॥

ततः परिघनिस्त्रिंशगदाशूलवरायुधाः । बभूवुस्त्रिदशास्सज्जाश्शक्रे वज्रकरे स्थिते ॥ ५४ ॥

ततो निरीक्ष्य गोविन्दो नागराजोपरि स्थितम् । शक्रं देवपरीवारं युद्धाय समुपस्थितम् ॥ ५५ ॥

चकार शंखनिर्घोषं दिशश्शब्देन पूरयन् । मुमोच शरसंघातान्सहस्रायुतशश्शितान् ॥ ५६ ॥

ततो दिशो नभश्चैव दृष्ट्वा शरशतैश्चितम् । मुमुचुस्त्रिदशास्सर्वे ह्यस्त्रशस्त्राण्यनेकशः ॥ ५७ ॥

एकैकमस्त्रं शस्त्रं च देवैर्मुक्तं सहस्रशः । चिच्छेद लीलयैवेशो जगतां मधुसूदनः ॥ ५८ ॥

पाशं सलिलराजस्य समाकृष्योरगाशनः । चकार खण्डशश्चञ्च्वा बालपन्नगदेहवत् ॥ ५९ ॥

यमेन प्रहितं दण्डं गदाविक्षेपखण्डितम् । पृथिव्यां पातयामास भगवान् देवकीसुतः ॥ ६० ॥

शिबिकां च धनेशस्य चक्रेण तिलशो विभुः । चकार शौरिरर्कं च दृष्टिदृष्टहतौजसम् ॥ ६१ ॥

नीतोऽग्निश्शीततां बाणैर्द्राविता वसवो दिशः । चक्रविच्छिन्नशूलाग्रा रुद्रा भुवि निपातिताः ॥६२॥

---

अवश्यमिति ॥ यास्यति—करिष्यति ॥ ४३-६० ॥

शिबिकां चेति ॥ दृष्टहतौजसं—दृष्टत्वादेव हतौजसम् ॥ ६१, ६२ ॥

साध्या विश्वेऽथ मरुतो गन्धर्वाश्चैव सायकैः । शार्ङ्गिणा प्रेरितैरस्ता व्योम्नि शाल्मलितूलवत् ॥६३॥
गरुत्मानपि तुण्डेन पक्षाभ्यां च नखाङ्कुरैः । भक्षयंस्ताडयन् देवान् दारयंश्च चचार वै ॥ ६४ ॥
ततश्शतसहस्रेण देवेन्द्रमधुसूदनौ । परस्परं ववर्षाते धाराभिरिव तोयदौ ॥ ६५ ॥
ऐरावतेन गरुडो युयुधे तत्र संकुले । देवैस्समस्तैर्युयुधे शक्रेण च जनार्दनः ॥ ६६ ॥
भिन्नेष्वशेषबाणेषु शस्त्रेष्वस्त्रेषु च त्वरन् । जग्राह वासवो वज्रं कृष्णश्चक्रं सुदर्शनम् ॥ ६७ ॥
ततो हाहाकृतं सर्वं त्रैलोक्यं द्विजसत्तम । वज्रचक्रकरौ दृष्ट्वा देवाराजजनार्दनौ ॥ ६८ ॥
क्षिप्तं वज्रमथेन्द्रेण जग्राह भगवान्हरिः । न मुमोच तदा चक्रं शक्रं तिष्ठेति चाब्रवीत् ॥ ६९ ॥
प्रणष्टवज्रं देवेन्द्रं गरुडक्षतवाहनम् । सत्यभामाऽब्रवीद्वीरं पलायनपरायणम् ॥ ७० ॥
त्रैलोक्येश न ते युक्तं शचीभर्तुः पलायनम् । पारिजातस्रगाभोगा त्वामुपस्थास्यते शची ॥ ७१ ॥
कीदृशं देवराज्यं ते पारिजातस्रगुज्ज्वलाम् । अपश्यतो यथापूर्वं प्रणयाभ्यागतां शचीम् ॥ ७२ ॥
अलं शक्र प्रयासेन न व्रीडां गन्तुमर्हसि । नीयतां पारिजातोऽयं देवास्सन्तु गतव्यथाः ॥ ७३ ॥
पतिगर्वावलेपेन बहुमानपुरस्सरम् । न ददर्श गृहं यातामुपचारेण मां शची ॥ ७४ ॥
स्त्रीत्वादगुरुचित्ताऽहं स्वभर्तृश्लाघनापरा । ततः कृतवती शक्र भवता सह विग्रहम् ॥ ७५ ॥
तदलं पारिजातेन परस्वेन हृतेन मे । रूपेण गर्विता सा तु भर्त्रा का स्त्री न गर्विता ॥ ७६ ॥

श्रीपराशरः—

इत्युक्तो वै निववृते देवराजस्तया द्विज । प्राह चैनामलं चण्डि सख्युः खेदोक्तिविस्तरैः ॥ ७७ ॥
न चापि सर्गसंहारस्थितिकर्ताऽखिलस्य यः । जितस्य तेन मे व्रीडा जायते विश्वरूपिणा ॥ ७८ ॥

यस्माज्जगत्सकलमेतदनादिमध्याद्यस्मिन्यतश्च न भविष्यति सर्वभूतात् ।
तेनोद्भवप्रलयपालनकारणेन व्रीडा कथं भवति देवि निराकृतस्य ॥ ७९ ॥
सकलभुवनसूतिर्मूर्तिरल्पाल्पसूक्ष्मा विदितसकलवेद्यैर्ज्ञायते यस्य नान्यैः ।
तमजमकृतमीशं शाश्वतं स्वेच्छयैनं जगदुपकृतिमर्त्यं को विजेतुं समर्थः ॥ ८० ॥

इति श्रीविष्णुपुराणे पंचमेंऽशे त्रिंशोऽध्यायः ॥ ३० ॥

---

साध्येति ॥ अस्ताः—निरस्ता इत्यर्थः ॥ ६३—७० ॥ त्रैलोक्येति ॥ स्रगाभोगा—आभुज्यत इत्याभोगः स्रक् आभोगो यस्यास्सा स्रगाभोगा॥ ७१—७६ ॥

इतीति ॥ हे चण्डि—उग्रे । खेदोक्तिविस्तरैः—मत्खेदविषयैरुक्तिविस्तरैः, अलम् ॥ ७७, ७८ ॥

यस्मादिति ॥ सकलं जगत् यस्माद्भवति, यस्मिन् भवति, यतो न भविष्यति, इत्यमुद्भवादिकारणेन तेन ॥ ७९ ॥ सकलभुवनेति ॥ मूर्तिः—रूपम् । अल्पाल्पसूक्ष्मा—अतिसूक्ष्मतरा ॥ ८० ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे त्रिंशोऽध्यायः ॥ ३० ॥

## अथैकविंशोऽध्यायः

श्रीपराशरः—

संस्तुतो भगवानित्थं देवराजेन केशवः । प्रहस्य भावगम्भीरमुवाचेन्द्रं द्विजोत्तम ॥ १ ॥

श्रीकृष्ण उवाच—

देवराजो भवानिन्द्रो वयं मर्त्या जगत्पते । क्षन्तव्यं भवतैवेदमपराधकृतं मम ॥ २ ॥

पारिजाततरुश्चायं नीयतामुचितास्पदम् । गृहीतोऽयं मया शक्र सत्यावचनकारणात् ॥ ३ ॥

वज्रं चेदं गृहाण त्वं यदत्र प्रहितं त्वया । तवैवैतत्प्रहरणं शक्र वैरिविदारणम् ॥ ४ ॥

इन्द्र उवाच :—

विमोहयसि मामीश मर्त्योऽहमिति किं वदन् । जानीमस्त्वां भगवतो न तु सूक्ष्मविदो वयम् ॥५॥

योऽसि सोऽसि जगत्त्राणप्रवृत्तौ नाथ संस्थितः । जगतश्शल्यनिष्कर्षं करोष्यसुरसूदन ॥ ६ ॥

नीयतां पारिजातोऽयं कृष्ण द्वारवतीं पुरीम् । मर्त्यलोके त्वया त्यक्ते नायं संस्थास्यते भुवि ॥७॥

देवदेव जगन्नाथ कृष्ण विष्णो महाभुज । शंखचक्रगदापाणे क्षमस्वैतद्व्यतिक्रमम् ॥ ८ ॥

श्रीपराशरः—

तथेत्युक्त्वा च देवेन्द्रमाजगाम भुवं हरिः । प्रसक्तैस्सिद्धगन्धर्वैस्स्तूयमानस्सुरर्षिभिः ॥ ९ ॥

ततश्शंखमुपाध्माय द्वारकोपरि संस्थितः । हर्षमुत्पादयामास द्वारकावासिनां द्विज ॥ १० ॥

अवतीर्याथ गरुडात्सत्यभामासहायवान् । निष्कुटे स्थापयामास पारिजातं महातरुम् ॥ ११ ॥

यमभ्येत्य जनस्सर्वो जातिं स्मरति पौर्विकीम् । वास्यते यस्य पुष्पोत्थगन्धेनोर्वी त्रियोजनम् ॥१२॥

ततस्ते यादवास्सर्वे देहबन्धानमानुषान् । ददृशुः पादपे तस्मिन् कुर्वन्तो मुखदर्शनम् ॥ १३ ॥

किंकरैस्समुपानीतं हस्त्यश्वादि ततो धनम् । विभज्य प्रददौ कृष्णो बांधवानां महामतिः ॥ १४ ॥

---

## अथैकविंशोऽध्यायः

संस्तुत इति ॥ भावगंभीरं—सूचितार्थगहनम् ॥ १ ॥

देवराज इति ॥ अपराधकृतं—कृतापराधमित्यर्थः ॥ २, ३ ॥

वज्रं चेति ॥ तवैव योग्यमिति शेषः ॥ ४ ॥

विमोहयसीति ॥ नैव सूक्ष्मविदः सूक्ष्मरूपं न विद्मः ॥ ५ ॥

य इति ॥ शल्यनिष्कर्षं—कंटकोद्धारम् ॥ ६–८ ॥ तथेति ॥ प्रसक्तैः—अनुबद्धैः ॥ ९–१२ ॥

तत इति ॥ मुखदर्शनम्—अभिमुखदर्शनम् । अमानुषान्—प्राचीनान् । ददृशुः—ज्ञातवन्तः ॥ १३, १४ ॥

कन्याश्च कृष्णो जग्राह नरकस्य परिग्रहान् ॥ १५ ॥
ततः काले शुभे प्राप्ते उपयेमे जनार्दनः । ताः कन्या नरकेणासन्सर्वतो यास्समाहृताः ॥ १६ ॥
एकस्मिन्नेव गोविन्दः काले तासां महामुने । जग्राह विधिवत्पाणीन्पृथग्गेहेषु धर्मतः ॥ १७ ॥
षोडशस्त्रीसहस्राणि शतमेकं ततोऽधिकम् । तावन्ति चक्रे रूपाणि भगवान् मधुसूदनः ॥ १८ ॥
एकैकमेव ताः कन्या मेनिरे मधुसूदनः । ममैव पाणिग्रहणं मैत्रेय कृतवानिति ॥ १९ ॥
निशासु च जगत्स्रष्टा तासां गेहेषु केशवः । उवास विप्र सर्वासां विश्वरूपधरो हरिः ॥ २० ॥

इति श्रीविष्णुपुराणे पञ्चमेंशे एकत्रिंशोऽध्यायः ॥ ३१ ॥

## अथ द्वात्रिंशोऽध्यायः

श्रीपराशरः—

प्रद्युम्नाद्या हरेः पुत्रा रुक्मिण्यां कथितास्तव । भानुभौमेरिकाद्यांश्च सत्यभामा व्यजायत ॥ १ ॥
दीप्तिमत्ताम्रपक्षाद्या रोहिण्यां कथिता हरेः । बभूवुर्जाम्बवत्यां च साम्बाद्या बाहुशालिनः ॥ २ ॥
तनया भद्रविन्दाद्या नाग्नजित्यां महाबलाः । संग्रामजित्प्रधानास्तु शैब्यायां च हरेस्सुताः ॥ ३ ॥
वृकाद्याश्च सुता माद्र्यां गात्रवत्प्रमुखान्सुतान् । अवाप लक्ष्मणा पुत्रान्कालिन्द्याश्च श्रुतादयः ॥४॥
अन्यासां चैव भार्याणां समुत्पन्नानि चक्रिणः । अष्टायुतानि पुत्राणां सहस्राणि शतं तथा ॥ ५ ॥
प्रद्युम्नः प्रथमस्तेषां सर्वेषां रुक्मिणीसुतः । प्रद्युम्नादनिरुद्धोऽभूद्वज्रस्तस्मादजायत ॥ ६ ॥
अनिरुद्धो रणेऽरुद्धो बलेः पौत्रीं महाबलः । उषां बाणस्य तनयामुपयेमे द्विजोत्तम ॥ ७ ॥
यत्र युद्धमभूद्धोरं हरिशंकरयोर्महत् । छिन्नं सहस्रं बाहूनां यत्र बाणस्य चक्रिणा ॥ ८ ॥

मैत्रेय उवाच—

कथं युद्धमभूद्ब्रह्मन्नुषार्थे हरकृष्णयोः । कथं क्षयं च बाणस्य बाहूनां कृतवान्हरिः ॥ ९ ॥
एतत्सर्वं महाभाग ममाख्यातुं त्वमर्हसि । महत्कौतूहलं जातं कथां श्रोतुमिमां हरेः ॥ १० ॥

---

कन्याश्चेति ॥ परिग्रहान्—स्वभूतान् ॥ १५–२० ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमेंशे एकत्रिंशोऽध्यायः ॥ ३१ ॥

## अथ द्वात्रिंशोऽध्यायः

१, २ ॥ तनया इति ॥ अत्राष्टप्रधानमहिषीमध्ये शैब्यानुप्रवेशः प्रख्यातपुत्रवतीप्रस्तावात् ॥ ३, ४ ॥
अन्यासां चेति ॥ अत्र अयुतसहस्रशतशब्दैः प्रत्येकमष्टशब्दः संबध्यते ॥ ५, ६ ॥
अनिरुद्ध इति ॥ रणेरुद्ध इत्यत्र अरुद्ध इति पदच्छेदः ॥ ७–१० ॥

## अथैकविंशोऽध्यायः

श्रीपराशरः—

संस्तुतो भगवानित्थं देवराजेन केशवः । प्रहस्य भावगम्भीरमुवाचेन्द्रं द्विजोत्तम ॥ १ ॥

श्रीकृष्ण उवाच—

देवराजो भवानिन्द्रो वयं मर्त्या जगत्पते । क्षन्तव्यं भवतैवेदमपराधकृतं मम ॥ २ ॥

पारिजाततरुश्चायं नीयतामुचितास्पदम् । गृहीतोऽयं मया शक्र सत्यावचनकारणात् ॥ ३ ॥

वज्रं चेदं गृहाण त्वं यदत्र प्रहितं त्वया । तवैवैतत्प्रहरणं शक्र वैरिविदारणम् ॥ ४ ॥

इन्द्र उवाच :—

विमोहयसि मामीश मर्त्योऽहमिति किं वदन् । जानीमस्त्वां भगवतो न तु सूक्ष्मविदो वयम् ॥५॥

योऽसि सोऽसि जगत्त्राणप्रवृत्तौ नाथ संस्थितः । जगतश्शल्यनिष्कर्षं करोष्यसुरसूदन ॥ ६ ॥

नीयतां पारिजातोऽयं कृष्ण द्वारवतीं पुरीम् । मर्त्यलोके त्वया त्यक्ते नायं संस्थास्यते भुवि ॥७॥

देवदेव जगन्नाथ कृष्ण विष्णो महाभुज । शंखचक्रगदापाणे क्षमस्वैतद्व्यतिक्रमम् ॥ ८ ॥

श्रीपराशरः—

तथेत्युक्त्वा च देवेन्द्रमाजगाम भुवं हरिः । प्रसक्तैस्सिद्धगन्धर्वैस्स्तूयमानस्सुरर्षिभिः ॥ ९ ॥

ततश्शंखमुपाध्माय द्वारकोपरि संस्थितः । हर्षमुत्पादयामास द्वारकावासिनां द्विज ॥ १० ॥

अवतीर्याथ गरुडात्सत्यभामासहायवान् । निष्कुटे स्थापयामास पारिजातं महातरुम् ॥ ११ ॥

यमभ्येत्य जनस्सर्वो जातिं स्मरति पौर्विकीम् । वास्यते यस्य पुष्पोत्थगन्धेनोर्वी त्रियोजनम् ॥१२॥

ततस्ते यादवास्सर्वे देहबन्धानमानुषान् । ददृशुः पादपे तस्मिन् कुर्वन्तो मुखदर्शनम् ॥ १३ ॥

किंकरैस्समुपानीतं हस्त्यश्वादि ततो धनम् । विभज्य प्रददौ कृष्णो बांधवानां महामतिः ॥ १४ ॥

---

## अथैकविंशोऽध्यायः

संस्तुत इति ॥ भावगंभीरं—सूचितार्थगहनम् ॥ १ ॥

देवराज इति ॥ अपराधकृतं—कृतापराधमित्यर्थः ॥ २, ३ ॥

वज्रं चेति ॥ तवैव योग्यमिति शेषः ॥ ४ ॥

विमोहयसीति ॥ नैव सूक्ष्मविदः सूक्ष्मरूपं न विद्मः ॥ ५ ॥

य इति ॥ शल्यनिष्कर्षं—कंटकोद्धारम् ॥ ६–८ ॥ तथेति ॥ प्रसक्तैः—अनुबद्धैः ॥ ९– १२ ॥

तत इति ॥ मुखदर्शनम्—अभिमुखदर्शनम् । अमानुषान्—प्राचीनान् । ददृशुः—ज्ञातवन्तः ॥ १३, १४ ॥

दृष्टमात्रे ततः कान्ते प्रद्युम्नतनये द्विज । दृष्ट्याऽत्यर्थविलासिन्या लज्जा कापि निराकृता ॥ २५ ॥
सोऽयंसोऽयमितीत्युक्ते तया सा योगगामिनी । चित्रलेखाऽब्रवीदेनामुषां बाणसुता तदा ॥ २६ ॥

चित्रलेखा—

अयं कृष्णस्य पौत्रस्ते भर्ता देव्या प्रसादितः । अनिरुद्ध इति ख्यातः प्रख्यातः प्रियदर्शनः ॥ २७ ॥
प्राप्नोषि यदि भर्तारमिमं प्राप्तं त्वयाऽखिलम् । दुष्प्रवेशा पुरी पूर्वं द्वारका कृष्णपालिता ॥ २८ ॥
तथापि यत्नाद्भर्तारमानयिष्यामि ते सखि । रहस्यमेतद्वक्तव्यं न कस्यचिदपि त्वया ॥ २९ ॥
अचिरादागमिष्यामि सहस्व विरहं मम । ययौ द्वारवतीं चोषां समाश्वास्य ततः सखीम् ॥ ३० ॥

इति श्रीविष्णुपुराणे पञ्चमेंऽशे द्वात्रिंशोऽध्यायः ॥ ३२ ॥

## अथ त्रयस्त्रिंशोऽध्यायः

श्रीपराशरः—

बाणोऽपि प्रणिपत्याग्रे मैत्रेयाह त्रिलोचनम् । देव बाहुसहस्रेण निर्विण्णोऽस्म्याहवं विना ॥ १ ॥
कच्चिन्ममैषां बाहूनां साफल्यजनको रणः । भविष्यति विना युद्धं भाराय मम किं भुजैः ॥ २ ॥

श्रीशंकर उवाच—

मयूरध्वजभङ्गस्ते यदा बाण भविष्यति । पिशिताशिजनानन्दं प्राप्स्यसे त्वं तदा रणम् ॥ ३ ॥

श्रीपराशरः—

ततः प्रणम्य वरदं शम्भुमभ्यागतो गृहम् । स भग्नं ध्वजमालोक्य हृष्टो हर्षं पुनर्ययौ ॥ ४ ॥
एतस्मिन्नेव काले तु योगविद्याबलेन तम् । अनिरुद्धमथानिन्ये चित्रलेखा वराऽप्सराः ॥ ५ ॥
कन्यान्तःपुरमभ्येत्य रममाणं सहोषया । विज्ञाय रक्षिणो गत्वा शशंसुर्दैत्यभूपतेः ॥ ६ ॥
व्यादिष्टं किंकराणां तु सैन्यं तेन महात्मना । जघान परिघं घोरमादाय परवीरहा ॥ ७ ॥
हतेषु तेषु बाणोऽपि रथस्थस्तद्वधोद्यतः । युध्यमानो यथाशक्ति यदुवीरेण निर्जितः ॥ ८ ॥
मायया युयुधे तेन स तदा मन्त्रिचोदितः । ततस्तं पन्नगास्त्रेण बबन्ध यदुनन्दनम् ॥ ९ ॥

---

दृष्टमात्र इति ॥ स्वप्नलब्धे कान्ते दृष्टमात्रे तस्मिन् रागाधिक्याल्लज्जा निराकृता ॥ २५ ॥

सोऽयमिति ॥ सोऽयंसोऽयमिति प्रत्यभिज्ञाविस्मयाभ्यां वीप्सा । योगगामिनी—योगविद्यया गगनगामिनी ॥ २६–३० ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमेंऽशे द्वात्रिंशोऽध्यायः ॥ ३२ ॥

## अथ त्रयस्त्रिंशोऽध्यायः

बाण इति ॥ अग्रे—अनिरुद्धवृत्तान्तात्प्राक् ॥ १ ॥ कच्चिदिति ॥ भाराय जातैः किं भुजैः ॥ २, ३ ॥
तत इति ॥ देववचनात् हृष्टः ध्वजभङ्गदर्शनाद्धर्षान्तरं ययौ ॥ ४–९ ॥

द्वारवत्यां क्व यातोऽसावनिरुद्धेति जल्पताम् । यदूनामाचचक्षे तं बद्धं बाणेन नारदः ॥ १० ॥
तं शोणितपुरं नीतं श्रुत्वा विद्याविदग्धया । योषिता प्रत्ययं जग्मुर्यादवा नामरैरिति ॥ ११ ॥
ततो गरुडमारुह्य स्मृतमात्रागतं हरिः । बलप्रद्युम्नसहितो बाणस्य प्रययौ पुरम् ॥ १२ ॥
पुरप्रवेशे प्रमथैर्युद्धमासीन्महात्मनः । ययौ बाणपुराभ्याशं नीत्वा तान्संक्षयं हरिः ॥ १३ ॥
ततस्त्रिपादस्त्रिशिरा ज्वरो माहेश्वरो महान् । बाणरक्षार्थमभ्येत्य युयुधे शार्ङ्गधन्वना ॥ १४ ॥
तद्भस्मस्पर्शसंभूततापः(ः) कृष्णाङ्गसङ्गमात् । अवाप बलदेवोऽपि श्रममामीलितेक्षणः ॥ १५ ॥
ततस्स युद्ध्यमानस्तु सह देवेन शार्ङ्गिणा । वैष्णवेन ज्वरेणाशु कृष्णदेहान्निराकृतः ॥ १६ ॥
नारायणभुजाघातपरिपीडनविह्वलम् । तं वीक्ष्य क्षम्यतामस्येत्याह देवः पितामहः ॥ १७ ॥
ततश्च क्षान्तमेवेति प्रोक्त्वा तं वैष्णवं ज्वरम् । आत्मन्येव लयं निन्ये भगवान्मधुसूदनः ॥ १८ ॥

ज्वर उवाच—

मम त्वया समं युद्धं ये स्मरिष्यन्ति मानवाः । विज्वरास्ते भविष्यन्तीत्युक्त्वा चैनं ययौ ज्वरः ॥ १९ ॥
ततोऽग्नीन्भगवान्पञ्च [नीत्वाऽद्यन्तवतः क्षयम्] जित्वा नीत्वा तथा क्षयम् ।
दानवानां बलं कृष्णश्चूर्णयामास लीलया ॥ २० ॥
ततस्समस्तसैन्येन दैतेयानां बलेस्सुतः । युयुधे शङ्करश्चैव कार्तिकेयश्च शौरिणा ॥ २१ ॥
हरिशङ्करयोर्युद्धमतीवासीत्सुदारुणम् । चुक्षुभुस्सकला लोकाश्शस्त्रास्त्रांशुप्रतापिताः ॥ २२ ॥
प्रलयोऽयमशेषस्य जगतो नूनमागतः । मेनिरे त्रिदशास्तत्र वर्तमाने महारणे ॥ २३ ॥
जृंभकास्त्रेण गोविन्दो जृंभयामास शङ्करम् । ततः प्रणेशुर्दैतेयाः प्रमथाश्च समंततः ॥ २४ ॥
जृम्भाभिभूतस्तु हरो रथोपस्थ उपाविशत् । न शशाक ततो योद्धुं कृष्णेनाक्लिष्टकर्मणा ॥ २५ ॥
गरुडक्षतवाहश्च प्रद्युम्नास्त्रेण पीडितः । कृष्णहुंकारनिर्धूतशक्तिश्चापययौ गुहः ॥ २६ ॥
जृंभिते शङ्करे नष्टे दैत्यसैन्ये गुहे जिते । नीते प्रमथसैन्ये च संक्षयं शार्ङ्गधन्वना ॥ २७ ॥

---

द्वारवत्यामिति ॥ अनिरुद्धेत्यार्षः संधिः ॥ १० ॥ तमिति ॥ नामरैरिति । पारिजातनिमित्तं बद्धरैरमरैरनिरुद्धो हृतस्स्यादिति शङ्का हरिवंशोक्ता ॥ ११–१४ ॥

तद्भस्मेति ॥ तापः कृष्णांगसंगमात्, अवाप बलदेवोऽपि श्रममामीलितेक्षणः इति पाठः । तापः कृष्णांगसंगमात् शममिति पाठे अपिशब्दो न संगतः ॥ १५ ॥

तत इति ॥ कृष्णस्पर्शी ज्वरो वैष्णवेन ज्वरेण कृष्णदेहान्निराकृतः ॥ १६, १७ ॥

ततश्चेति ॥ लयं—सौक्ष्म्यं, न नाशम् । * युवां ज्वरौ ज्वरपती पीडायां मारणे प्रभू । पीडायां भवानस्तु मारणे मामको ज्वरः ॥ इति हरिवंशे भगवदुक्तेः ॥ १८ ॥

ममेति ॥ मम त्वयेत्यनेन कृष्णज्वरयुद्धस्मरणं ज्वरशान्तिकरमुक्तम् । अत्र मन्त्ररूपं श्लोकांतरम् आद्यन्तवन्तः कवय इत्यादि । आद्यन्तवन्तः—जगतामाद्यन्तकर्तारः ॥ १९ ॥

तत इति ॥ आद्यन्तवतः—आद्यन्तकर्तॄन् * अग्नीन्—पुररक्षकान् रुद्रानुचरान् ॥ २०–२४ ॥

नन्दिना संगृहीताश्वमधिरूढो महारथम् । बाणस्तत्राययौ योद्धुं कृष्णकार्ष्णिबलैस्सह ॥ २८ ॥
बलभद्रो महावीर्यो बाणसैन्यमनेकधा । विव्याध बाणैः प्रभ्रश्य धर्मतश्चापलायत ॥ २९ ॥
आकृष्य लाङ्गलाग्रेण मुसलेनाशु ताडितम् । बलं बलेन ददृशे बाणो बाणैश्च चक्रिणा ॥ ३० ॥
ततः कृष्णेन बाणस्य युद्धमासीत्सुदारुणम् ॥ ३१ ॥
समस्यतोरिषून्दीप्तान्कायत्राणविभेदिनः । कृष्णश्चिच्छेद बाणैस्तान्बाणेन प्रहिताञ्छितान् ॥
विव्याध केशवं बाणो बाणं विव्याध चक्रधृत् ॥ ३२ ॥
मुमुचाते तथाऽस्त्राणि बाणकृष्णौ जिगीषया । परस्परक्षतिकरौ लाघवादनिशं द्विज ॥ ३३ ॥
भिद्यमानेष्वशेषेषु शरेष्वस्त्रे च सीदति । प्राचुर्येण ततो बाणं हन्तुं चक्रे हरिर्मनः ॥ ३४ ॥
ततोऽर्कशतसंघाततेजसा सदृशद्युति । जग्राह दैत्यचक्रारिर्हरिश्चक्रं सुदर्शनम् ॥ ३५ ॥
मुञ्चतो बाणनाशाय ततश्चक्रं मधुद्विषः । नग्ना दैतेयविद्याऽभूत्कोटरी पुरतो हरेः ॥ ३६ ॥
तामग्रतो हरिर्दृष्ट्वा मीलिताक्षस्सुदर्शनम् । मुमोच बाणमुद्दिश्य च्छेत्तुं बाहुवनं रिपोः ॥ ३७ ॥
क्रमेण तत्तु बाहूनां बाणस्याच्युतचोदितम् । छेदं चक्रेऽसुरापास्तशस्त्रौघक्षपणादृतम् ॥ ३८ ॥
छिन्ने बाहुवने तत्तु करस्थं मधुसूदनः । मुमुक्षुर्बाणनाशाय विज्ञातस्त्रिपुरद्विषा ॥ ३९ ॥
समुपेत्याह गोविन्दं सामपूर्वमुमापतिः । विलोक्य बाणं दोर्दण्डच्छेदासृक्स्राववर्षिणम् ॥ ४० ॥
कृष्णकृष्ण जगन्नाथ जाने त्वां पुरुषोत्तमम् । परेशं परमात्मानमनादिनिधनं हरिम् ॥ ४१ ॥
देवतिर्यङ्मनुष्येषु शरीरग्रहणात्मिका । लीलेयं सर्वभूतस्य तव चेष्टोपलक्षणा ॥ ४२ ॥
तत्प्रसीदाभयं दत्तं बाणस्यास्य मया प्रभो । तत्त्वया नानृतं कार्यं यन्मया व्याहृतं वचः ॥ ४३ ॥
अस्मत्संश्रयदृप्तोऽयं नापराधी तवाव्यय । मया दत्तवरो दैत्यस्ततस्त्वां क्षमयाम्यहम् ॥ ४४ ॥

श्रीपराशरः—

इत्युक्तः प्राह गोविन्दश्शूलपाणिमुमापतिम् । प्रसन्नवदनो भूत्वा गतामर्षोऽसुरं प्रति ॥ ४५ ॥

---

जृम्भेति ॥ जृम्भो गात्रपारवश्यम ॥ २५—२८ ॥ बलभद्र इति ॥ प्रभ्रश्येति । धर्मतः—युद्धधर्मात् प्रभ्रश्यापलायत ॥ २९ ॥ आकृष्येति ॥ बलेन चक्रिणा मुसलेन बाणैश्च पीडितं स्वबलं बाणो ददर्शेत्यन्वयः ॥ ३०, ३१ ॥

समस्यतोरिति ॥ समस्यतोः कृष्णबाणयोर्मध्ये कृष्णः बाणप्रहितान् तान् बाणांश्चिच्छेद ॥ ३२, ३३ ॥

भिद्यमानेष्विति ॥ प्राचुर्येणास्त्रे च सीदति ॥ ३४, ३५ ॥

मुञ्चत इति ॥ कोटरी विद्यारूपा दैतेयकुलदेवता गौर्यांशशक्तिः । तथा माथुरे हरिवंशे * दिग्वासा देववचनात्प्रातिष्ठत्तत्र कोटरी । लम्बमाना महाभागा गौरीदेव्यास्तथाऽष्टमी ॥ इति । गोमन्तहरिवंशे च * शशाप चैनां भगवान्यश्च मां भक्तिसंयुतः । द्वादशाब्दं नमस्कुर्यात्तेनाभूद्यत्फलं महत् ॥ त्वन्नमस्करणात्तस्य तत्सर्वं नश्यतां तदा । सदा दिगंबरा भूयास्तिष्ठ वा गच्छ वाऽग्रतः ॥ इति ॥ ३६, ३७ ॥

क्रमेणेति ॥ असुरेति । असुरक्षिप्तशस्त्रौघक्षपणे आदृतम ॥ ३८—४१ ॥

देवेति ॥ देवतिर्यङ्मनुष्येषु मध्ये देवादिशरीरग्रहणात्मिका तत्तच्चेष्टाविशिष्टा तव लीलेयम् ॥ ४२-४६ ॥

श्रीभगवानुवाच—

युष्मद्दत्तवरो बाणो जीवतामेष शंकर । त्वद्वाक्यगौरवादेतन्मया चक्रं निवर्तितम् ॥ ४६ ॥
त्वया यदभयं दत्तं तद्दत्तमखिलं मया । मत्तोऽविभिन्नमात्मानं द्रष्टुमर्हसि शंकर ॥ ४७ ॥
योऽहं स त्वं जगच्चेदं सदेवासुरमानुषम् । मत्तो नान्यदशेषं यत्तत्त्वं ज्ञातुमिहार्हसि ॥ ४८ ॥
अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः । वदन्ति भेदं पश्यन्ति चावयोरन्तरं हर ॥ ४९ ॥
प्रसन्नोऽहं गमिष्यामि त्वं गच्छ वृषभध्वज ॥ ५० ॥

श्रीपराशरः—

इत्युक्त्वा प्रययौ कृष्णः प्राद्युम्निर्यत्र तिष्ठति । तद्बन्धफणिनो नेशुर्गरुडानिलपोथिताः ॥ ५१ ॥
ततोऽनिरुद्धमारोप्य सपत्नीकं गरुत्मति । आजग्मुर्द्वारकां रामकार्ष्णिदामोदराः पुरीम् ॥ ५२ ॥
पुत्रपौत्रैः परिवृतस्तत्र रेमे जनार्दनः । देवीभिस्सततं विप्र भूभारतरणेच्छया ॥ ५३ ॥

इति श्रीविष्णुपुराणे पंचमेंशे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## अथ चतुस्त्रिंशोऽध्यायः

मैत्रेयः—

चक्रे कर्म महच्छौरिर्बिभ्राणो मानुषीं तनुम् । जिगाय शक्रं शर्वं च सर्वान्देवांश्च लीलया ॥ १ ॥
यच्चान्यदकरोत्कर्म दिव्यचेष्टाविघातकृत् । तत्कथ्यतां महाभाग परं कौतूहलं हि मे ॥ २ ॥

श्रीपराशरः—

गदतो मम विप्रर्षे श्रूयतामिदमादरात् । नरावतारे कृष्णेन दग्धा वाराणसी यथा ॥ ३ ॥
पौण्ड्रको वासुदेवस्तु वासुदेवोऽभवद्भुवि । अवतीर्णस्त्वमित्युक्तो जनैरज्ञानमोहितैः ॥ ४ ॥
स मेने वासुदेवोऽहमवतीर्णो महीतले । नष्टस्मृतिस्ततस्सर्वं विष्णुचिह्नमचीकरत् ॥ ५ ॥

---

त्वयेति ॥ मत्तोविभिन्नमात्मानमित्यत्र अविभिन्नमिति च्छेदः । योऽहं स त्वमितिवत् जगच्चेदं सदेवासुरमानुषमित्युक्तत्वात् इतरक्षेत्रज्ञवदस्य ब्रह्मात्मकत्वेनैक्यमुच्यते, न तु स्वरूपतः ॥ ४७–४८ ॥

अविद्येति ॥ भिन्नदर्शिनः—अब्रह्मात्मकत्वेन भिन्नदर्शिनः ॥ ४९–५३ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## अथ चतुस्त्रिंशोऽध्यायः

॥ १ ॥ यच्चान्यदकरोदिति ॥ दिव्यचेष्टाविघातकृत्—दिव्यानां शर्वादीनां चेष्टाविघातकृत् ॥ २, ३ ॥
पौण्ड्रक इति ॥ पौण्ड्रकः—पुण्ड्रदेशेशः ॥ ४ ॥ स इति ॥ अचीकरत्—अकारयत् ॥ ५ ॥

दूतं च प्रेषयामास कृष्णाय सुमहात्मने । त्यक्त्वा चक्रादिकं चिह्नं मदीयं नाम चात्मनः ॥ ६ ॥
वासुदेवात्मकं मूढ त्यक्त्वा सर्वमशेषतः । आत्मनो जीवितार्थाय ततो मे प्रणतिं व्रज ॥ ७ ॥
इत्युक्तस्संप्रहस्यैनं दूतं प्राह जनार्दनः । निजचिह्नमहं चक्रं समुत्स्रक्ष्ये त्वयीति वै ॥ ८ ॥
वाच्यश्च पौण्ड्रको गत्वा त्वया दूत वचो मम । ज्ञातस्त्वद्वाक्यसद्भावो यत्कार्यं तद्विधीयताम् ॥९॥
गृहीतचिह्नवेषोऽहमागमिष्यामि ते पुरम् । उत्स्रक्ष्यामि च तच्चक्रं निजचिह्नमसंशयम् ॥ १० ॥
आज्ञापूर्वं च यदिदमागच्छेति त्वयोदितम् । संपादयिष्ये श्वस्तुभ्यं समागम्याविलम्बितम् ॥ ११ ॥
शरणं ते समभ्येत्य कर्तास्मि नृपते तथा । यथा त्वत्तो भयं भूयो न मे किंचिद्भविष्यति ॥ १२ ॥
इत्युक्तेऽपगते दूते संस्मृत्याभ्यागतं हरिः । गरुत्मन्तमथारुह्य त्वरितस्तत्पुरं ययौ ॥ १३ ॥
ततस्तु केशवोद्योगं श्रुत्वा काशीपतिस्तदा । सर्वसैन्यपरीवारः पार्ष्णिग्राह उपाययौ ॥ १४ ॥
ततो बलेन महता काशीराजबलेन च । पौण्ड्रको वासुदेवोऽसौ केशवाभिमुखो ययौ ॥ १५ ॥
तं ददर्श हरिर्दूरादुदारस्यन्दने स्थितम् । चक्रहस्तं गदाशार्ङ्गबाहुं पाणिगताम्बुजम् ॥ १६ ॥
स्रग्धरं पीतवसनं सुपर्णरचितध्वजम् । वक्षस्स्थले कृतं चास्य श्रीवत्सं ददृशे हरिः ॥ १७ ॥
किरीटकुण्डलधरं नानारत्नोपशोभितम् । तं दृष्ट्वा भावगंभीरं जहास गरुडध्वजः ॥ १८ ॥
युयुधे च बलेनास्य हस्त्यश्वबलिना द्विज । निस्त्रिंशासिगदाशूलशक्तिकार्मुकशालिना ॥ १९ ॥
क्षणेन शार्ङ्गनिर्मुक्तैश्शरैररिविदारणैः । गदाचक्रनिपातैश्च सूदयामास तद्बलम् ॥ २० ॥
काशीराजबलं चैवं क्षयं नीत्वा जनार्दनः । उवाच पौण्ड्रकं मूढमात्मचिह्नोपलक्षितम् ॥ २१ ॥

श्रीभगवानुवाच—

पौण्ड्रकोक्तं त्वया यत्तु दूतवक्त्रेण मां प्रति । समुत्सृजेति चिह्नानि तत्ते संपादयाम्यहम् ॥ २२ ॥
चक्रमेतत्समुत्सृष्टं गदेयं ते विसर्जिता । गरुत्मानेष चोत्सृष्टस्समारोहतु ते ध्वजम् ॥ २३ ॥

श्रीपराशरः—

इत्युच्चार्य विमुक्तेन चक्रेणासौ विदारितः । पातितो गदया भग्नो ध्वजश्चास्य गरुत्मता ॥ २४ ॥

---

दूतं चेति ॥ इत्युक्त्वा दूतं च प्रेषयामासेति, इत्युक्तो दूतेनोक्त इति तन्त्रेणेतिशब्दो योज्यः ॥६-११॥

शरणमिति ॥ शरणमित्यादि प्रणतिं व्रजेत्यस्योत्तरम् । समभ्येत्य ते शरणं—हिंसां कर्तास्मि ; शीर्णाद्धि शत्रोर्न भूयो भयं भवेदिति भावगर्भम् ॥ १२–१६ ॥

स्रग्धरमिति ॥ सुपर्णरचितध्वजं—सुपर्णरचनोपेतध्वजम् ॥ १७ ॥

किरीटेति ॥ कृत्रिममपि मत्सारूप्यं सत्यमिव भातीति भावगम्भीरं जहास ॥ १८ ॥

युयुध इति ॥ हस्त्यश्वबलिना—हस्त्यश्वैर्बलवता ॥ १९–२३ ॥

इत्युच्चार्येति ॥ चक्रेण विदारितः, गदया पातितः ॥ २४ ॥

ततो हाहाकृते लोके काशीपुर्यधिपो बली । युयुधे वासुदेवेन मित्रस्यापचितौ स्थितः ॥ २५ ॥
ततश्शार्ङ्गधनुर्मुक्तैश्छित्त्वा तस्य शिरश्शरैः । काशीपुर्यां स चिक्षेप कुर्वँल्लोकस्य विस्मयम् ॥ २६ ॥
हत्वा त्वं पौण्ड्रकं शौरिः काशीराजं च सानुगम् । पुनर्द्वारवतीं प्राप्तो रेमे स्वर्गगतो यथा ॥२७॥
तच्छिरः पतितं तत्र दृष्ट्वा काशीपतेः पुरे । जनः किमेतदित्याह च्छिन्नं केनेति विस्मितः ॥ २८॥
ज्ञात्वा तं वासुदेवेन हतं तस्य सुतस्ततः । पुरोहितेन सहितस्तोषयामास शंकरम् ॥ २९ ॥
अविमुक्ते महाक्षेत्रे तोषितस्तेन शंकरः । वरं वृणीष्वेति तदा तं प्रोवाच नृपात्मजम् ॥ ३० ॥
स वव्रे भगवन्कृत्या पितृहन्तुर्वधाय मे । समुत्तिष्ठतु कृष्णस्य त्वत्प्रसादान्महेश्वर ॥ ३१ ॥

श्रीपराशरः—

एवं भविष्यतीत्युक्ते दक्षिणाग्नेरनन्तरम् । महाकृत्या समुत्तस्थौ तस्यैवाग्नेर्विनाशनी ॥ ३२ ॥
ततो ज्वालाकरालास्या ज्वलत्केशकपालिका । कृष्णकृष्णेति कुपिता कृत्या द्वारवतीं ययौ ॥ ३३ ॥
तामवेक्ष्य जनस्त्रासाद्विचलल्लोचनो मुने । ययौ शरण्यं जगतां शरणं मधुसूदनम् ॥ ३४ ॥
काशीराजसुतेनेयमाराध्य वृषभध्वजम् । उत्पादिता महाकृत्येत्यवगम्याथ चक्रिणा ॥ ३५ ॥
जहि कृत्यामिमामुग्रां वह्निज्वालाजटालकाम् । चक्रमुत्सृष्टमक्षेषु क्रीडासक्तेन लीलया ॥ ३६ ॥
तदग्निमालाजटिलज्वालोद्गारातिभीषणाम् । कृत्यामनुजगामाशु विष्णुचक्रं सुदर्शनम् ॥ ३७ ॥
चक्रप्रतापनिर्दग्धा कृत्या माहेश्वरी तदा । ननाश वेगिनी वेगात्तदप्यनुजगाम ताम् ॥ ३८ ॥
कृत्या वाराणसीमेव प्रविवेश त्वरान्विता । विष्णुचक्रप्रतिहतप्रभावा मुनिसत्तम ॥ ३९ ॥
ततः काशीबलं भूरि प्रमथानां तथा बलम् । समस्तशस्त्रास्त्रयुतं चक्रस्याभिमुखं ययौ ॥ ४० ॥
शस्त्रास्त्रमोक्षचतुरं दग्ध्वा तद्बलमोजसा । कृत्यागर्भामशेषां तां तदा वाराणसीं पुरीम् ॥ ४१ ॥
सभूभृद्भृत्यपौरां तु साश्वमातङ्गमानवाम् । अशेषगोष्ठकोशां तां दुर्निरीक्ष्यां सुरैरपि ॥ ४२ ॥
ज्वालापरिष्कृताशेषगृहप्राकारचत्वराम् । ददाह तद्धरेश्चक्रं सकलामेव तां पुरीम् ॥ ४३ ॥
अक्षीणामर्षमत्युग्रं साध्यसाधनसस्पृहम् । तच्चक्रं प्रस्फुरद्दीप्ति विष्णोरभ्याययौ करम् ॥ ४४ ॥

इति श्रीविष्णुपुराणे पञ्चमेंऽशे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

तत इति ॥ अपचितिः—पूजा ॥ २५—३० ॥

स वव्र इत्यादि ॥ पितृहन्तुः—* जायमानो मातुरागर्भो हन्तीत्यादिमन्त्रलिङ्गात्, पित्रोररण्योर्हन्तुरग्नेः कृष्णस्य—कृष्णवर्णज्वालत्वेनाभिचारे ध्येयस्य मे-मदीयस्य शत्रोः नाशाय कृत्या समुत्तिष्ठत्वित्यर्थः । अनन्तरमेतद्विवृणोति—तस्यैवाग्निर्विनाशनीति । यद्वा मे पितृहन्तुः कृष्णस्य वधाय कृत्या समुत्तिष्ठत्विति ॥ ३१ ॥

एवं भविष्यतीति ॥ तस्यैवाग्नेर्विनाशिनीति । तस्य दक्षिणाग्नेरेव विनाशिनीति । अनेन कृत्यायाः क्रौर्यमुच्यते । तस्यैवात्मविनाशिनीति पाठे, तस्यैव—अभिचरत एव ॥ ३२—३५ ॥

जहीति ॥ जहीत्युत्सृष्टं चक्रम् अक्षक्रीडासक्तेन भगवता ॥ ३६, ३७ ॥

चक्रप्रतापेति ॥ ननाश—पलायांबभूव * नाशः पलायने मृत्यौ * इति वैजयन्ती ॥ ३८—४४ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पञ्चमेंऽशे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## अथ पञ्चत्रिंशोऽध्यायः

मैत्रेयः—

भूय एवाहमिच्छामि बलभद्रस्य धीमतः । श्रोतुं पराक्रमं ब्रह्मन् तन्ममाख्यातुमर्हसि ॥ १ ॥
यमुनाकर्षणादीनि श्रुतानि भगवन्मया । तत्कथ्यतां महाभाग यदन्यत्कृतवान्बलः ॥ २ ॥

श्रीपराशरः—

मैत्रेय श्रूयतां कर्म यद्रामेणाभवत्कृतम् । अनन्तेनाप्रमेयेन शेषेण धरणीधृता ॥ ३ ॥
सुयोधनस्य तनयां स्वयंवरकृतक्षणाम् । बलादादत्तवान्वीरस्साम्बो जांबवतीसुतः ॥ ४ ॥
ततः क्रुद्धा महावीर्याः कर्णदुर्योधनादयः । भीष्मद्रोणादयश्चैनं बबन्धुर्युधि निर्जितम् ॥ ५ ॥
तच्छ्रुत्वा यादवास्सर्वे क्रोधं दुर्योधनादिषु । मैत्रेय चक्रुः कृष्णश्च तान्निहन्तुं महोद्यमम् ॥ ६ ॥
तान्निवार्य बलः प्राह मदलोलकलाक्षरम् । मोक्ष्यन्ति ते मद्वचनाद्यास्याम्येको हि कौरवान् ॥ ७ ॥

श्रीपराशरः—

बलदेवस्ततो दृष्ट्वा नगरं नागसाह्वयम् । बाह्योपवनमध्येऽभून्न विवेश च तत्पुरम् ॥ ८ ॥
बलमागतमाज्ञाय भूपा दुर्योधनादयः । गामर्घ्यमुदकं चैव रामाय प्रत्यवेदयन् ॥ ९ ॥
गृहीत्वा विधिवत्सर्वं ततस्तानाह कौरवान् । आज्ञापयत्युग्रसेनस्साम्बमाशु विमुञ्चत ॥ १० ॥
ततस्तद्वचनं श्रुत्वा भीष्मद्रोणादयो नृपाः । कर्णदुर्योधनाद्याश्च चुक्षुभुर्द्विजसत्तम ॥ ११ ॥
ऊचुश्च कुपितास्सर्वे बाह्लिकाद्याश्च कौरवाः । अराज्यार्हं यदोर्वंशमवेक्ष्य मुसलायुध ॥ १२ ॥
भोभोः किमेतद्भवता बलभद्रेरितं वचः । आज्ञां कुरुकुलोत्थानां यादवः कः प्रदास्यति ॥ १३ ॥
उग्रसेनोऽपि यद्याज्ञां कौरवाणां प्रदास्यति । तदलं पाण्डुरैश्छत्रैर्नृपयोग्यैर्विडम्बनैः ॥ १४ ॥
तद्गच्छ बल मा वा त्वं साम्बमन्यायचेष्टितम् । विमोक्ष्यामो न भवतश्चोग्रसेनस्य शासनात् ॥१५॥
प्रणतिर्या कृताऽस्माकं मान्यानां कुकुरान्धकैः । न नाम सा कृता केयमाज्ञा स्वामिनि भृत्यतः॥१६॥

---

## अथ पञ्चत्रिंशोऽध्यायः

॥ १–३ ॥ सुयोधनस्येति ॥ कृतक्षणां—कृतावसराम् । आदत्तवान्—आत्तवान् ॥ ४, ७ ॥

बलदेव इति ॥ पुरं न विवेश, अपेक्षितासिद्धौ विरोद्धुम् ॥ ८–१३ ॥

उग्रसेन इति ॥ विडम्बनैः—हासार्हैः । विडम्बितैरिति पाठे, उग्रसेनेन विडम्बितैरस्मच्छत्रैरलम् ॥ १४, १५ ॥ प्रणतिरिति ॥ पूर्वं कृता अस्माकं या प्रणतिः सा अधुना, न नाम—न कृताऽस्तु । भृत्यतः—भृत्यभूतादुग्रसेनात् ॥ १६ ॥

गर्वमारोपिता यूयं समानासनभोजनैः । को दोषो भवतां नीतिर्यत्प्रीत्या नावलोकिता ॥ १७ ॥
अस्माभिरर्घो भवतो योऽयं बल निवेदितः । प्रेम्णैतन्नैतदस्माकं कुलाद्युष्मत्कुलोचितम् । १८ ॥

पराशरः—

इत्युक्त्वा कुरवः साम्बं मुञ्चामो न हरेस्सुतम् । कृतैकनिश्चयास्तूर्णं विविशुर्गजसाह्वयम् ॥ १९ ॥
मत्तः कोपेन चाघूर्णस्ततोऽधिक्षेपजन्मना । उत्थाय पार्ष्ण्या वसुधां जघान स हलायुधः ॥ २० ॥
ततो विदारिता पृथ्वी पार्ष्णिघातान्महात्मनः । आस्फोटयामास तदा दिशश्शब्देन पूरयन् ॥ २१ ॥
उवाच चातिताम्राक्षो भ्रुकुटीकुटिलाननः ॥ २२ ॥
अहो मदावलेपोऽयमसाराणां दुरात्मनाम् । कौरवाणां महीपत्वमस्माकं किल कालजम् ।
उग्रसेनस्य येनाज्ञां मन्यन्तेऽद्यापि लङ्घनम् ॥ २३ ॥
उग्रसेनस्समध्यास्ते सुधर्मां न शचीपतिः । धिङ्मानुषशतोच्छिष्टे तुष्टिरेषां नृपासने ॥ २४ ॥
पारिजाततरोः पुष्पमञ्जरीर्वनिताजनः । बिभर्ति यस्य भृत्यानां सोऽप्येषां न महीपतिः ॥ २५ ॥
समस्तभूभृतां नाथ उग्रसेनस्स तिष्ठतु । अद्य निष्कौरवामुर्वीं कृत्वा यास्यामि तत्पुरीम् ॥ २६ ॥
कर्णं दुर्योधनं द्रोणमद्य भीष्मं सबाह्लिकम् । दुश्शासनादीन्भूरिं च भूरिश्रवसमेव च ॥ २७ ॥
सोमदत्तं शलं चैव भीमार्जुनयुधिष्ठिरान् । यमौ च कौरवांश्चान्यान्हत्वा साश्वरथद्विपान् ॥ २८ ॥
वीरमादाय तं साम्बं सपत्नीकं ततः पुरीम् । द्वारकामुग्रसेनादीन्गत्वा द्रक्ष्यामि बान्धवान् ॥ २९ ॥
अथवा कौरवावासं समस्तैः कुरुभिस्सह । भागीरथ्यां क्षिपाम्याशु नगरं नागसाह्वयम् ॥ ३० ॥

पराशरः—

इत्युक्त्वा मदरक्ताक्षः कर्षणाधोमुखं हलम् । प्राकारवप्रदुर्गस्य चकर्ष मुसलायुधः ॥ ३१ ॥
आघूर्णितं तत्सहसा ततो वै हास्तिनं पुरम् । दृष्ट्वा संक्षुब्धहृदयाश्चुक्रुशुस्सर्वकौरवाः ॥ ३२ ॥
रामराम महाबाहो क्षम्यतां क्षम्यतां त्वया । उपसंह्रियतां कोपः प्रसीद मुसलायुध ॥ ३३ ॥
एष साम्बस्सपत्नीकस्तव निर्यातितो बलात् । अविज्ञातप्रभावानां क्षम्यतामपराधिनाम् ॥ ३४ ॥

पराशरः—

ततो निर्यातयामासुस्साम्बं पत्नीसमन्वितम् । निष्क्रम्य स्वपुरात्तूर्णं कौरवा मुनिपुङ्गव ॥ ३५ ॥

---

गर्वमिति ॥ नीतिर्यत्प्रीत्या नावलोकितेति । नीचेष्वपि युष्मासु प्रीत्या युष्माकमुचितमवमानमकृत्वा समानासनभोजनैः अस्मत्साम्यं नयद्भिरस्माभिरेव नीतिरुपेक्षिता । प्रीतिर्यत्प्रीत्येति पाठे, अस्माभिः समानासनभोजनैः युष्माकं कृता प्रीतिः एभिः प्रीत्या कृतेति नावलोकिता, किं तु भीत्येति ॥ १७–२२ ॥

अहो इति ॥ अस्माकं—यादवानां महीपत्वं कालजं—कस्मिंश्चित्काले जातं नान्वयागतमिति । अवलेपेन । लङ्घनम्—अतिक्रमम् । यद्वा ये कौरवाः आज्ञां न मन्यन्ते, किं तु लङ्घनं मन्यन्ते ॥ २३ ॥

अद्यापीति सूचितमैश्वर्यं दर्शयति उग्रसेन इत्यादिना ॥ उग्रसेन इति ॥ एषां मनुष्यशतोच्छिष्टे आसने तुष्टिः । धिगेतान् ॥ २४–३० ॥

भीष्मद्रोणकृपादीनां प्रणम्य वदतां प्रियम् । क्षान्तमेव मयेत्याह बलो बलवतां वरः ॥ ३६ ॥
अद्याप्याघूर्णिताकारं लक्ष्यते तत्पुरं द्विज । एष प्रभावो रामस्य बलशौर्योपलक्षणः ॥ ३७ ॥
ततस्तु कौरवास्साम्बं संपूज्य बलिना सह । प्रेषयामासुरुद्वाहधनभार्यासमन्वितम् ॥ ३८ ॥

इति श्रीविष्णुपुराणे पञ्चमेंशे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

## अथ षट्त्रिंशोऽध्यायः

श्रीपराशरः—

मैत्रेयैतद्बलं तस्य बलस्य बलशालिनः । कृतं यदन्यत्तेनाभूत्तदपि श्रूयतां त्वया ॥ १ ॥
नरकस्यासुरेन्द्रस्य देवपक्षविरोधिनः । सखाऽभवन्महावीर्यो द्विविदो वानरर्षभः ॥ २ ॥
वैरानुबन्धं बलवान्स चकार सुरान्प्रति । नरकं हतवान्कृष्णो देवराजेन चोदितः ॥ ३ ॥
करिष्ये सर्वदेवानां तस्मादेतत्प्रतिक्रियाम् । यज्ञविध्वंसनं कुर्वन् मर्त्यलोकक्षयं तथा ॥ ४ ॥
ततो विध्वंसयामास यज्ञानज्ञानमोहितः । बिभेद साधुमर्यादां क्षयं चक्रे च देहिनाम् ॥ ५ ॥
ददाह सवनान्देशान्पुरग्रामान्तराणि च । क्वचिच्च पर्वताक्षेपैर्ग्रामादीन्समचूर्णयत् ॥ ६ ॥
शैलानुत्पाट्य तोयेषु मुमोचाम्बुनिधौ तथा । पुनश्चार्णवमध्यस्थः क्षोभयामास सागरम् ॥ ७ ॥
तेन विक्षोभितश्चाब्धिरुद्वेलो द्विज जायते । प्लावयंस्तीरजान्ग्रामान्पुरादीनतिवेगवान् ॥ ८ ॥
कामरूपी महारूपं कृत्वा सस्यान्यशेषतः । लुठन्भ्रमणसंमर्दैस्संचूर्णयति वानरः ॥ ९ ॥
तेन विप्रकृतं सर्वं जगदेतद्दुरात्मना । निस्स्वाध्यायवषट्कारं मैत्रेयासीत्सुदुःखितम् ॥ १० ॥
एकदा रैवतोद्याने पपौ पानं हलायुधः । रेवती च महाभागा तथैवान्या वरस्त्रियः ॥ ११ ॥
उद्गीयमानो विलसल्ललनामौलिमध्यगः । रेमे यदुकुलश्रेष्ठः कुबेर इव नन्दने ॥ १२ ॥

---

इत्युक्त्वेति ॥ कर्षणाधोमुखं—कर्षणार्थमधोमुखम् ॥ ३१–३८ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पञ्चमांशे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

## अथ षट्त्रिंशोऽध्यायः

मैत्रेयेति ॥ एतद्बलं—यमुनाकर्षणादिरूपम् । अन्यत्—द्विविदवधादि ॥ १–५ ॥

ददाहेति ॥ ग्रामान्तराणि—ग्रामविशेषान् ॥ ६, ७ ॥

तेनेति ॥ उद्वेलः—वेलामतिक्रान्तः, जायते ॥ ८, ९ ॥

तेनेति ॥ विप्रकृतं—विनाशितम् ॥ १०, ११ ॥

उद्गीयमान इति ॥ ललनामौल्यः—विलासिनीश्रेष्ठाः, अशोकद्रुमो वा । * मौलिः किरीटे चूडायामशोके केशसंहतौ * इति निघण्टुः । तदा ललनोपलक्षिताशोकवनान्तस्थः ॥ १२ ॥

ततस्स वानरोऽभ्येत्य गृहीत्वा सीरिणो हलम् । मुसलं च चकारास्य संमुखं च विडम्बनम् ॥१३॥
तथैव योषितां तासां जहासाभिमुखं कपिः । पानपूर्णाश्च करकाश्चिक्षेपाहत्य वै तदा ॥ १४ ॥
ततः कोपपरीतात्मा भर्त्सयामास तं हली । तथापि तमवज्ञाय चक्रे किलकिलध्वनिम् ॥ १५ ॥
ततः स्मयित्वा स बलो जग्राह मुसलं रुषा । सोऽपि शैलशिलां भीमां जग्राह प्लवगोत्तमः ॥ १६ ॥
चिक्षेप स च तां क्षिप्तां मुसलेन सहस्रधा । बिभेद यादवश्रेष्ठस्सा पपात महीतले ॥ १७ ॥
अथ तन्मुसलं चासौ समुल्लंघ्य प्लवंगमः । वेगेनागत्य रोषेण करेणोरस्यताडयत् ॥ १८ ॥
ततो बलेन कोपेन मुष्टिना मूर्ध्नि ताडितः । पपात रुधिरोद्गारी द्विविदः क्षीणजीवितः ॥ १९ ॥
पतता तच्छरीरेण गिरेश्शृङ्गमशीर्यत । मैत्रेय शतधा वज्रिवज्रेणेव विदारितम् ॥ २० ॥
पुष्पवृष्टिं ततो देवा रामस्योपरि चिक्षिपुः । प्रशशंसुस्ततोऽभ्येत्य साध्वेतत्ते महत्कृतम् ॥ २१ ॥
अनेन दुष्टकपिना दैत्यपक्षोपकारिणा । जगन्निराकृतं वीर दिष्ट्या स क्षयमागतः ॥ २२ ॥
इत्युक्त्वा दिवमाजग्मुर्देवा हृष्टास्सगुह्यकाः ॥ २३ ॥

पराशरः—
एवंविधान्यनेकानि बलदेवस्य धीमतः । कर्माण्यपरिमेयानि शेषस्य धरणीभृतः ॥ २४ ॥

इति श्रीविष्णुपुराणे पञ्चमांशे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

## अथ सप्तत्रिंशोऽध्यायः

पराशरः—
एवं दैत्यवधं कृष्णो बलदेवसहायवान् । चक्रे दुष्टक्षितीशानां तथैव जगतः कृते ॥ १ ॥
क्षितेश्च भारं भगवान्फल्गुनेन समन्वितः । अवतारयामास विभुस्समस्ताक्षौहिणीवधात् ॥ २ ॥
कृत्वा भारावतरणं भुवो हत्वाऽखिलान्नृपान् । शापव्याजेन विप्राणामुपसंहृतवान्कुलम् ॥ ३ ॥

---

तत इति ॥ विडम्बनं—भ्रूनेत्रादिविकारः । सम्मुखस्येति च पाठः ॥ १३–१८ ॥

तत इति ॥ क्षीणजीवित इत्यनेनास्यामृतप्राशनाद्दीर्घजीवित्वं महद्धिक्काराल्लष्टमित्युक्तम् , * आयुः श्रियं । वित्तं लोकानाशिष एव च । हंति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः ॥ इति श्रीशुकोक्तेः ॥ १९–२४ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमांशे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

## अथ सप्तत्रिंशोऽध्यायः

एवमिति ॥ दुष्टक्षितीशानां वधमित्यनुषङ्गः ॥ १,२ ॥

कृत्वेति ॥ शापेति । उपसंहारे शापो व्याजमात्रं स्वेच्छैव हेतुः । यथोक्तम् * भवितव्यं तथा तद्धि मेतन्महात्मना इत्यादिना । कुलं—स्वम् ॥ ३ ॥

उत्सृज्य द्वारकां कृष्णस्त्यक्त्वा मानुष्यमात्मनः। सांशो विष्णुमयं स्थानं प्रविवेश मुने निजम्॥४॥

**मैत्रेयः—**

स विप्रशापव्याजेन संजह्रे स्वकुलं कथम्। कथं च मानुषं देहमुत्ससर्ज जनार्दनः॥ ५॥

**श्रीपराशरः—**

विश्वामित्रस्तथा कण्वो नारदश्च महामुनिः। पिण्डारके महातीर्थे दृष्टा यदुकुमारकैः॥ ६॥
ततस्ते यौवनोन्मत्ता भाविकार्यप्रचोदिताः। साम्बं जांबवतीपुत्रं भूषयित्वा स्त्रियं यथा॥ ७॥
प्रश्रितास्तान्मुनीनूचुः प्रणिपातपुरस्सरम्। इयं स्त्री पुत्रकामा वै ब्रूत किं जनयिष्यति॥ ८॥

**श्रीपराशरः—**

दिव्यज्ञानोपपन्नास्ते विप्रलब्धाः कुमारकैः। मुनयः कुपिताः प्रोचुर्मुसलं जनयिष्यति॥ ९॥
सर्वयादवसंहारकारणं भुवनोत्तरम्। येनाखिलकुलोत्सादो यादवानां भविष्यति॥ १०॥
इत्युक्तास्ते कुमारास्तु आचचक्षुर्यथातथम्। उग्रसेनाय मुसलं जज्ञे साम्बस्य चोदरात्॥ ११॥
तदुग्रसेनो मुसलमयश्चूर्णमकारयत्। जज्ञे तदेरकाचूर्णं प्रक्षिप्तं तैर्महोदधौ॥ १२॥
मुसलस्याथ लोहस्य चूर्णितस्य तु यादवैः। खण्डं चूर्णितशेषं तु ततो यत्तोमराकृति॥ १३॥
तदप्यम्बुनिधौ क्षिप्तं मत्स्यो जग्राह जालिभिः। घातितस्योदरात्तस्य लुब्धो जग्राह तज्जराः॥१४॥
विज्ञातपरमार्थोऽपि भगवान्मधुसूदनः। नैच्छत्तदन्यथा कर्तुं विधिना यत्समीहितम्॥ १५॥
देवैश्च प्रहितो वायुः प्रणिपत्याह केशवम्। रहस्येवमहं दूतः प्रहितो भगवन्सुरैः॥ १६॥
वस्वश्विमरुदादित्यरुद्रसाध्यादिभिस्सह। विज्ञापयति शक्रस्त्वां तदिदं श्रूयतां विभो॥ १७॥

---

उत्सृज्येत्यादि॥ मानुष्यं—मर्त्यदेहं, सांशः—ससंकर्षणादिः, विष्णुमयं—विष्णुप्रचुरम्। तत्तेजस्तद्विभूतितत्परिकरसूरिपूर्णमित्यर्थः। निजं स्थानं—परमव्योमपरमपदादिशब्दवाच्यं स्वासाधारणम्। यथा मौसले * दिव्यं स्थानमजरं चाप्रमेयम् * इत्यादि। अत्र मानुष्यमिति विशेषणात्, * ऊर्ध्वं गच्छन् व्याप्य लोकान् स्वलक्ष्म्या इत्युक्त्वा, अनन्तरं * दिवं प्राप्तमित्यादिना वसुप्रभृतिभिर्देवैः प्रत्युद्गमनादिकमुक्त्वा, * ततो राजन् भगवानुग्रधन्वेत्यादिना स्वस्थानप्रवेशमभिधाय, * भुजैश्चतुर्भिस्समुपेतं ममेदमिति मौसलोक्तप्रकारेण स्वसाधारणदिव्यविग्रहवत एव गमनं ज्ञातव्यम्॥ ४—६॥ तत इति॥ भावि कार्यं—भविष्यत्फलकर्म, तेन प्रचोदिताः॥ ७, ८॥

दिव्यज्ञानेति॥ दिव्यज्ञानोपपन्नाः—दिव्यस्य भगवदिच्छादेर्ज्ञानोपपन्नाः। यथा मौसल एव * भवितव्यं तथा तद्धि दृष्टमेतन्महात्मना। उपेक्षितं च कृष्णेन शक्तेनापि व्यपोहितुम्॥ इत्यादि, * कुतश्शापो मनीषिणाम् इत्यन्तम्॥ ९–११॥ तदिति॥ एरका—त्रिधारः तृणविशेषः॥ १२॥

मुसलस्येति॥ तोमरमत्र बाणशल्यम्॥ १३॥ तदिति॥ जरा नाम लुब्धकः॥ १४॥

विज्ञातेति॥ विधिना समीहितं—[illegible]॥ १५॥ देवैश्चेति॥ दूतः—वायुः॥ १६, १७॥

भारावतरणार्थाय वर्षाणामधिकं शतम् । भगवानवतीर्णोऽत्र त्रिदशैस्सह चोदितः ॥ १८ ॥
दुर्वृत्ता निहता दैत्या भुवो भारोऽवतारितः । त्वया सनाथास्त्रिदशा भवन्तु त्रिदिवे सदा ॥ १९ ॥
तदतीतं जगन्नाथ वर्षाणामधिकं शतम् । इदानीं गम्यतां स्वर्गो भवता यदि रोचते ॥ २० ॥
देवैर्विज्ञाप्यते देव तथाऽत्रैव रतिस्तव । तत्स्थीयतां यथाकालमास्थेयमनुजीविभिः ॥ २१ ॥

श्रीभगवानुवाच :—

यत्त्वमात्थाखिलं दूत वेद्म्येतदहमप्युत । प्रारब्ध एव हि मया यादवानां परिक्षयः ॥ २२ ॥
भुवो नाद्यापि भारोऽयं यादवैरनिबर्हितैः । अवतार्य करोम्येतत्सप्तरात्रेण सत्वरः ॥ २३ ॥
यथा गृहीतमम्भोधेर्दत्त्वाऽहं द्वारकाभुवम् । यादवानुपसंहृत्य यास्यामि त्रिदशालयम् ॥ २४ ॥
मनुष्यदेहमुत्सृज्य संकर्षणसहायवान् । प्राप्त एवास्मि मन्तव्यो देवेन्द्रेण तथाऽमरैः ॥ २५ ॥

जरासंधादयो येऽन्ये निहता भारहेतवः ।
क्षितेस्तेभ्यः तु बालोऽपि (कुमारोऽपि) यदूनां नापचीयते ॥ २६ ॥

तदेतं सुमहाभारमवतार्य क्षितेरहम् । यास्याम्यमरलोकस्य पालनाय ब्रवीहि तान् ॥ २७ ॥

श्रीपराशरः—

इत्युक्तो वासुदेवेन देवदूतः प्रणम्य तम् । मैत्रेय दिव्यया गत्या देवराजान्तिकं ययौ ॥ २८ ॥
भगवानप्यथोत्पातान्दिव्यभौमान्तरिक्षजान् । ददर्श द्वारकापुर्यां विनाशाय दिवानिशम् ॥ २९ ॥
तान्दृष्ट्वा यादवानाह पश्यध्वमतिदारुणान् । महोत्पाताञ्छमायैषां प्रभासं याम मा चिरम् ॥३०॥

श्रीपराशरः—

एवमुक्ते तु कृष्णेन यादवप्रवरस्ततः । महाभागवतः प्राह प्रणिपत्योद्धवो हरिम् ॥ ३१ ॥
भगवन्यन्मया कार्यं तदाज्ञापय सांप्रतम् । मन्ये कुलमिदं सर्वं भगवान्संहरिष्यति ॥ ३२ ॥

नाशायास्य निमित्तानि कुलस्याच्युत लक्षये ॥ ३३ ॥

श्रीभगवानुवाच :—गच्छ त्वं दिव्यया गत्या मत्प्रसादसमुत्थया । यद्बदर्याश्रमं पुण्यं गन्धमादनपर्वते ।

नरनारायणस्थाने तत्पवित्रं महीतले ॥ ३४ ॥

मन्मना मत्प्रसादेन तत्र सिद्धिमवाप्स्यसि । अहं स्वर्गं गमिष्यामि ह्युपसंहृत्य वै कुलम् ॥ ३५ ॥
द्वारकां च मया त्यक्तां समुद्रः प्लावयिष्यति । मद्वेश्म चैकं मुक्त्वा तु भयान्मत्तो जलाशये ।
तत्र सन्निहितश्चाहं भक्तानां हितकाम्यया ॥ ३६ ॥

---

भारावतरणार्थायेति ॥ अवतीर्णो वर्षाणामधिकं शतमत्र स्थित इति शेषः ॥ १८—२२ ॥

भुव इति ॥ भुवो भारो नाद्याप्यवतारित इति शेषः । एतत्—गमनम् ॥ २३—२५ ॥

जरासंधादय इति ॥ क्षितेर्भारहेतवो येऽन्ये जरासंधादयो निहताः तेभ्यः यदूनां संबन्धी शिशुरपि नापचितो युद्धे । कुमार इति पाठे, तेभ्योऽप्यधिको यदूनां संबन्धी कुमारः—भूभारः न क्षीयते ॥ २६—२८ ॥

भगवानिति ॥ ग्रहर्क्षवैकृतं दिव्य उत्पातः, उल्कानिपातनिर्घातपरिवेषादिरान्तरिक्षः, चरस्थिरजो भौमः ॥ २९—३६ ॥

श्रीपराशरः—

इत्युक्तः प्रणिपत्यैनं जगामाशु तपोवनम् । नरनारायणस्थानं केशवेनानुमोदितः ॥ ३७ ॥

ततस्ते यादवास्सर्वे रथानारुह्य शीघ्रगान् । प्रभासं प्रययुस्सार्धं कृष्णरामादिभि र्द्विज ॥ ३८ ॥

प्रभासं समनुप्राप्ताः कुकुरान्धकवृष्णयः । चक्रुस्तत्र महापानं वासुदेवेन चोदिताः ॥ ३९ ॥

पिबतां तत्र चैतेषां संघर्षेण परस्परम् । अतिवादेन्धनो जज्ञे कलहाग्निः क्षयावहः ॥ ४० ॥

मैत्रेय उवाच—

स्वं स्वं वै भुञ्जतां तेषां कलहः किंनिमित्तकः । संघर्षो वा द्विजश्रेष्ठ तन्ममाख्यातुमर्हसि ॥ ४१ ॥

श्रीपराशरः—

मृष्टं मदीयमन्नं ते न मृष्टमिति जल्पताम् । मृष्टामृष्टकथा जज्ञे संघर्षकलहौ ततः ॥ ४२ ॥

ततश्चान्योन्यमभ्येत्य क्रोधसंरक्तलोचनाः । जघ्नुः परस्परं ते तु शस्त्रैर्दैवबलात्कृताः ॥ ४३ ॥

क्षीणशस्त्राश्च जगृहुः प्रत्यासन्नामथैरकाम् ॥ ॥ ४४ ॥

एरका तु गृहीता वै वज्रभूतेव लक्ष्यते । तया परस्परं जघ्नुस्संप्रहारे सुदारुणे ॥ ४५ ॥

प्रद्युम्नसाम्बप्रमुखाः कृतवर्माऽथ सात्यकिः । अनिरुद्धादयश्चान्ये पृथुर्विपृथुरेव च ॥ ४६ ॥

चारुवर्मा चारुकश्च तथाऽक्रूरादयो द्विज । एरकारूपिभिर्वज्रैस्ते निजघ्नुः परस्परम् ॥ ४७ ॥

निवारयामास हरिर्यादवांस्ते च केशवम् । सहायं मेनिरेऽरीणां प्राप्तं जघ्नुः परस्परम् ॥ ४८ ॥

कृष्णोऽपि कुपितस्तेषामेरकामुष्टिमाददे । वधाय सोऽपि मुसलं मुष्टिर्लौहमभूत्तदा ॥ ४९ ॥

जघान तेन निश्शेषान्यादवानाततायिनः । जघ्नुस्ते सहसाऽभ्येत्य तथाऽन्येपि परस्परम् ॥ ५० ॥

ततश्चार्णवमध्येन जैत्रोऽसौ चक्रिणो रथः । पश्यतो दारुकस्याथ प्रायादश्वैर्धृतो द्विज ॥ ५१ ॥

चक्रं गदा तथा शार्ङ्गं तूणी शंखोऽसिरेव च । प्रदक्षिणं हरिं कृत्वा जग्मुरादित्यवर्त्मना ॥ ५२ ॥

क्षणेन नाभवत्कश्चिद्यादवानामघातितः । ऋते कृष्णं महात्मानं दारुकं च महामुने ॥ ५३ ॥

चंक्रम्यमाणौ तौ रामं वृक्षमूले कृतासनम् । ददृशाते मुखाच्चास्य निष्क्रामन्तं महोरगम् ॥ ५४ ॥

निष्क्रम्य स मुखात्तस्य महाभोगो भुजंगमः । प्रययावर्णवं सिद्धैः पूज्यमानस्तथोरगैः ॥ ५५ ॥

ततोऽर्घ्यमादाय तदा जलधिस्संमुखं ययौ । प्रविवेश ततस्तोयं पूजितः पन्नगोत्तमैः ॥ ५६ ॥

दृष्ट्वा बलस्य निर्याणं दारुकं प्राह केशवः । इदं सर्वं समाचक्ष्व वसुदेवोग्रसेनयोः ॥ ५७ ॥

---

इत्युक्त इति ॥ अनुमोदितः—तत्त्वोपदेशपादुकाप्रदानादिनाऽनुगृहीतः । यादवत्वेऽपि भगवत्स्वातन्त्र्यप्रदर्शनार्थं सात्वतविद्यासंतानायोद्धवो राजसंतानाय वज्रश्च शेषितौ ॥ ३७–४७ ॥

निवारयामासेति ॥ माध्यस्थ्यात्केशवो युध्यमानान् निवारयामास । ते च तम् अरीणां—स्वविपक्षाणां सहायं प्राप्तं मेनिरे । अतस्तमनादृत्यान्योन्यं च जघ्नुः ॥ ४८, ४९ ॥

जघानेति ॥ आततायी—वधोद्यतः ॥ ५०–५७ ॥

निर्याणं बलभद्रस्य यादवानां तथा क्षयम् । योगे स्थित्वाऽहमप्येतत्परित्यक्ष्ये कलेवरम् ॥ ५८ ॥
वाच्यश्च द्वारकावासी जनस्सर्वस्तथाऽऽहुकः । यथेमां नगरीं सर्वां समुद्रः प्लावयिष्यति ॥ ५९ ॥
तस्माद्भवद्भिस्सर्वैस्तु प्रतीक्ष्यो ह्यर्जुनागमः । न स्थेयं द्वारकामध्ये निष्क्रान्ते तत्र पाण्डवे ॥ ६० ॥
तेनैव सह गन्तव्यं यत्र याति स कौरवः ॥ ६१ ॥
गत्वा च ब्रूहि कौन्तेयमर्जुनं वचनान्मम । पालनीयस्त्वया शक्त्या जनोऽयं मत्परिग्रहः ॥ ६२ ॥
त्वमर्जुनेन सहितो द्वारवत्यां तथा जनम् । गृहीत्वा याहि वज्रश्च यदुराजो भविष्यति ॥ ६३ ॥

श्रीपराशरः—

इत्युक्तो दारुकः कृष्णं प्रणिपत्य पुनःपुनः । प्रदक्षिणं च बहुशः कृत्वा प्रायाद्यथोदितम् ॥ ६४ ॥
स च गत्वा तदाचष्ट द्वारकायां तथाऽर्जुनम् । आनिनाय महाबुद्धिर्वज्रं चक्रे तथा नृपम् ॥ ६५ ॥
भगवानपि गोविन्दो वासुदेवात्मकं परम् । ब्रह्मात्मनि समारोप्य सर्वभूतेष्वधारयत् ॥ ६६ ॥
[निष्प्रपञ्चे महाभाग संयोज्यात्मानमात्मनि । तुर्यावस्थस्सलीलं च शेते स्म पुरुषोत्तमः ॥]
संमानयन्द्विजवचो दुर्वासा यदुवाच ह । योगयुक्तोऽभवत्पादं कृत्वा जानुनि सत्तम ॥ ६७ ॥
आययौ स जरा नाम तदा तत्र स लुब्धकः । मुसलावशेषलोहैकसायकन्यस्ततोमरः ॥ ६८ ॥
स तत्पादं मृगाकारमवेक्ष्याराद्वस्थितः । तले विव्याध तेनैव तोमरेण द्विजोत्तम ॥ ६९ ॥
ततश्च ददृशे तत्र चतुर्बाहुधरं नरम् । प्रणिपत्याह चैवैनं प्रसीदेति पुनःपुनः ॥ ७० ॥
अजानता कृतमिदं मया हरिणशङ्कया । क्षम्यतां मम पापेन दग्धं मां त्रातुमर्हसि ॥ ७१ ॥

श्रीपराशरः—

ततस्तं भगवानाह न तेऽस्तु भयमण्वपि । गच्छ त्वं मत्प्रसादेन लुब्ध स्वर्गं सुरास्पदम् ॥ ७२ ॥

श्रीपराशरः—

विमानमागतं सद्यस्तद्वाक्यसमनन्तरम् । आरुह्य प्रययौ स्वर्गं लुब्धकस्तत्प्रसादतः ॥ ७३ ॥

---

निर्याणमिति ॥ योगेन देहत्यागो लोकसंग्रहार्थः ॥ ५८–६४ ॥

स चेति ॥ द्वारवत्यां स्थितमिति शेषः ॥ ६५ ॥

भगवानपीति ॥ सर्वभूतेषु स्थितम् अत एव वासुदेवात्मकं ब्रह्म आत्मन्यधारयत्—आत्मानं ब्रह्म अभावयत् इत्यर्थः ॥ ६६ ॥

संमानयन्निति ॥ द्विजवचः—विप्रशापवचः । दुर्वासा यदुवाच तच्च संमानयन् पादं लुब्धकदश्यं स्वस्तिकासनेन जानुनि कृत्वा योगं चक्रे । श्रीकृष्णो हि, मदुच्छिष्टेन सर्वाङ्गं लिम्पेति दुर्वाससो वचनात् विप्रोच्छिष्टं पादेन न स्प्रष्टव्यमिति पादवर्जं सर्वाङ्गं लिप्ते, पादौ न लिप्ताविति क्रुद्धेन दुर्वाससा तत्रैव पादे विद्धो भवेति शप्त इत्युक्तं भारते ॥ ६७ ॥

आययाविति ॥ मुसलावशेषलोहम् एकसायके न्यस्तं तोमरं यस्य स तथोक्तः । अक्षराधिक्यमार्षम् ॥ ६८–७१ ॥ तत इति ॥ गच्छ त्वमित्यादिना लोकसंग्रहार्थं योगेन स्वदेहं त्यजन्नपि भगवानात्मनो निरतिशयमैश्वर्यं प्रकटयितुम् अनर्हमपि लुब्धकं सशरीरमेव स्वर्गमगमयदित्यभिप्रेतम् ॥ ७२, ७३ ॥

गते तस्मिन्स भगवान्संयोज्यात्मानमात्मनि । ब्रह्मभूतेऽव्ययेऽचिन्त्ये वासुदेवमयेऽमले ॥ ७४ ॥
अजन्मन्यमरे विष्णावप्रमेयेऽखिलात्मनि । तत्याज मानुषं देहमतीत्य त्रिविधां गतिम् ॥ ७५ ॥

इति श्रीविष्णुपुराणे पञ्चमेंऽशे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## अथाष्टत्रिंशोऽध्यायः

श्रीपराशरः—

अर्जुनोऽपि तदाऽन्वीक्ष्य रामकृष्णकलेवरे । संस्कारं लम्भयामास तथाऽन्येषामनुक्रमात् ॥ १ ॥
अष्टौ महिष्यः कथिता रुक्मिणीप्रमुखास्तु याः । उपगूह्य हरेर्देहं विविशुस्ता हुताशनम् ॥ २ ॥
रेवती चापि रामस्य देहमाश्लिष्य सत्तमा । विवेश ज्वलितं वह्निं तत्सङ्गाह्लादशीतलम् ॥ ३ ॥
उग्रसेनस्तु तच्छ्रुत्वा तथैवानकदुंदुभिः । देवकी रोहिणी चैव विविशुर्जातवेदसम् ॥ ४ ॥
ततोऽर्जुनः प्रेतकार्यं कृत्वा तेषां यथाविधि । निश्चक्राम जनं सर्वं गृहीत्वा वज्रमेव च ॥ ५ ॥
द्वारवत्या विनिष्क्रान्ताः कृष्णपत्न्यः सहस्रशः । वज्रं जनं च कौन्तेयः पालयञ्छनकैर्ययौ ॥ ६ ॥
सभा सुधर्मा कृष्णेन मर्त्यलोके समुज्झिते । स्वर्गं जगाम मैत्रेय पारिजातश्च पादपः ॥ ७ ॥
यस्मिन्दिने हरिर्यातो दिवं संत्यज्य मेदिनीम् । तस्मिन्नेवावतीर्णोऽयं कालकायो बली कलिः ॥ ८ ॥
प्लावयामास तां शून्यां द्वारकां च महोदधिः । वासुदेवगृहं त्वेकं न प्लावयति सागरः ॥ ९ ॥
नातिक्रान्तुमलं ब्रह्मंस्तदद्यापि महोदधिः । नित्यं सन्निहितस्तत्र भगवान्केशवो यतः ॥ १० ॥
तदतीव महापुण्यं सर्वपातकनाशनम् । विष्णुक्रियाऽन्वितं स्थानं दृष्ट्वा पापाद्विमुच्यते ॥ ११ ॥
पार्थः पञ्चनदे देशे बहुधान्यधनान्विते । चकार वासं सर्वस्य जनस्य मुनिसत्तमः ॥ १२ ॥
ततो लोभस्समभवत्पार्थेनैकेन धन्विना । दृष्ट्वा स्त्रियो नीयमाना दस्यूनां निहतेश्वराः ॥ १३ ॥

---

गत इति ॥ गत इत्यादिश्लोकद्वयस्यैकान्वयः । तस्मिन्—लुब्धके स्वर्गं गते सति भगवान् श्रीकृष्णः ब्रह्मभूत इत्याद्युक्तविशेषणविशिष्टे आत्मनि—स्वस्मिन् आत्मानं—मनः संयोज्य, त्रिविधां—सात्विकराजसतामसरूपेण त्रिविधां गतिमतीत्य ॥ ७४, ७५ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पंचमेंऽशे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## अथाष्टत्रिंशोऽध्यायः

॥ १–७ ॥ यस्मिन्निति ॥ कालकायः—मलिनाङ्गः । कालकाम इति पाठे कृष्णोपेक्षावसरप्रतीक्षः ॥ ८–११ ॥ पार्थ इति ॥ पञ्चनदाख्यो देशः ॥ १२, १३ ॥

ततस्ते पापकर्माणो लोभो(प्त्रो)पहतचेतसः । आभीरा मन्त्रयामासुस्समेत्यात्यन्तदुर्मदाः ॥ १४ ॥
अयमेकोऽर्जुनो धन्वी स्त्रीजनं निहतेश्वरम् । नयत्यस्मानतिक्रम्य धिगेतद्भवतां बलम् ॥ १५ ॥
हत्वा गर्वसमारूढो भीष्मद्रोणजयद्रथान् । कर्णादींश्च न जानाति बलं ग्रामनिवासिनाम् ॥ १६ ॥
यष्टिहस्तानवेक्ष्यास्मान्धनुष्पाणिस्स दुर्मतिः । सर्वानेवावजानाति किं वो बाहुभिरुन्नतैः ॥ १७ ॥
ततो यष्टिप्रहरणा दस्यवो लोष्टधारिणः । सहस्रशोऽभ्यधावन्त तं जनं निहतेश्वरम् ॥ १८ ॥
ततो निर्भर्त्स्य कौन्तेयः प्राहाभीरान्हसन्निव । निवर्तध्वमधर्मज्ञा यदि न स्थ मुमूर्षवः ॥ १९ ॥
अवज्ञाय वचस्तस्य जगृहुस्ते तदा धनम् । स्त्रीधनं चैव मैत्रेय विष्वक्सेनपरिग्रहम् ॥ २० ॥
ततोऽर्जुनो धनुर्दिव्यं गांडीवमजरं युधि । आरोपयितुमारेभे न शशाक च वीर्यवान् ॥ २१ ॥
चकार सज्यं कृच्छ्राच्च तच्चाभूच्छिथिलं पुनः । न सस्मार ततोऽस्त्राणि चिन्तयन्नपि पाण्डवः ॥२२॥
शरान्मुमोच चैतेषु पार्थो वैरिष्वमर्षितः । त्वग्भेदं ते परं चक्रुरस्ता गाण्डीवधन्विना ॥ २३ ॥
वह्निना येऽक्षया दत्ताश्शरास्तेऽपि क्षयं ययुः । युद्ध्यतस्सह गोपालैरर्जुनस्य भवक्षये ॥ २४ ॥
अचिन्तयच्च कौन्तेयः कृष्णस्यैव हि तद्बलम् । यन्मया शरसंघातैस्सकला भूभृतो हताः ॥ २५ ॥
मिषतः पाण्डुपुत्रस्य ततस्ताः प्रमदोत्तमाः । आभीरैरपकृष्यन्त कामं चान्याः प्रदुद्रुवुः ॥ २६ ॥
ततश्शरेषु क्षीणेषु धनुष्कोट्या धनंजयः । जघान दस्यूंस्ते चास्य प्रहाराञ्जहसुर्मुने ॥ २७ ॥
प्रेक्षतस्तस्य पार्थस्य वृष्ण्यन्धकवरस्त्रियः । जग्मुरादाय ते म्लेच्छाः समस्ता मुनिसत्तम ॥ २८ ॥
ततस्सुदुःखितो जिष्णुः कष्टं कष्टमिति ब्रुवन् । अहो भगवताऽनेन मुष्टोऽस्मीति रुरोद वै ॥ २९ ॥
तद्धनुस्तानि शस्त्राणि स रथस्ते च वाजिनः । सर्वमेकपदे नष्टं दानमश्रोत्रिये यथा ॥ ३० ॥
अहोऽतिबलवद्दैवं विना तेन महात्मना । यदसामर्थ्ययुक्तेऽपि नीचवर्गे जयप्रदम् ॥ ३१ ॥
तौ बाहू स च मे मुष्टिः स्थानं तत्सोऽस्मि चार्जुनः । पुण्येनैव विना तेन गतं सर्वमसारताम् ॥ ३२ ॥
ममार्जुनत्वं भीमस्य भीमत्वं तत्कृतं ध्रुवम् । विना तेन यदाभीरैर्जितोऽहं रथिनां वरः ॥ ३३ ॥

पराशरः—

इत्थं वदन्ययौ जिष्णुरिन्द्रप्रस्थं पुरोत्तमम् । चकार तत्र राजानं वज्रं यादवनन्दनम् ॥ ३४ ॥
स ददर्श ततो व्यासं फल्गुनः काननाश्रयम् । तमुपेत्य महाभागं विनयेनाभ्यवादयत् ॥ ३५ ॥
तं वन्दमानं चरणाववलोक्य मुनिश्चिरम् । उवाच वाक्यं विच्छायः कथमद्य त्वमीदृशः ॥ ३६ ॥
अवीरजोनुगमनं ब्रह्महत्या कृताऽथ वा । दृढाशाभङ्गदुःखीव भ्रष्टच्छायोऽसि सांप्रतम् ॥ ३७ ॥

---

तत इति ॥ लोप्त्रं—चौर्यधनम् । लोभोपहतचेतस इति च पाठः ॥ १४–२८ ॥

तत इति ॥ मुष्टः—मुषितः, मायया शक्तिहरणात् ॥ २९ ॥

तद्धनुरिति ॥ एकपदे—एकक्षणे ॥ ३०–३६ ॥

अवीरजोऽनुगमनमिति ॥ अविशब्देन अजजातिर्लक्ष्यते । अविः खरादिजातिर्वा । अविशब्दस्यौणादिक : संज्ञायाम् ॥ ३७ ॥

सांतानिकादयो वा ते याचमाना निराकृताः । अगम्यस्त्रीरतिर्वा त्वं येनासि विगतप्रभः ॥ ३८ ॥
भुङ्क्तेऽप्रदाय विप्रेभ्यो मृष्टमेकोऽथ वा भवान् । किं वा कृपणवित्तानि हृतानि भवताऽर्जुन ॥३९॥
कच्चिन्नु शूर्पवातस्य गोचरत्वं गतोऽर्जुन । दुष्टचक्षुर्हतो वाऽसि निश्श्रीकः कथमन्यथा ॥ ४० ॥

स्पृष्टो नखांभसा वाथ घटवार्युक्षितोऽपि वा ।
केन त्वं वाऽसि विच्छायो न्यूनैर्वा युधि निर्जितः ॥ ४१ ॥

श्रीपराशरः—

ततः पार्थो विनिश्वस्य श्रूयतां भगवन्निति । प्रोक्त्वा यथावदाचष्टे व्यासायात्मपराभवम् ॥ ४२ ॥

अर्जुन उवाच :—

यद्बलं यच्च त(म)त्तेजो यद्वीर्यं यः पराक्रमः । या श्रीश्छाया च नस्सोऽस्मान्परित्यज्य हरिर्गतः॥४३॥

(इतरेणेव) ईश्वरेणापि महता स्मितपूर्वाभिभाषिणा ।
हीना वयं मुने तेन जातास्तृणमया इव ॥ ४४ ॥

अस्त्राणां सायकानां च गाण्डीवस्य तथा मम । सारता याऽभवन्मूर्तिस्स गतः पुरुषोत्तमः ॥४५॥
यस्यावलोकनादस्माञ्छ्रीर्जयः संपदुन्नतिः । न तत्याज स गोविन्दस्त्यक्त्वाऽस्मान्भगवान्गतः ॥४६॥
भीष्मद्रोणाङ्गराजाद्यास्तथा दुर्योधनादयः । यत्प्रभावेन निर्दग्धास्स कृष्णस्त्यक्तवान्भुवम् ॥ ४७ ॥
निर्यौवना गतश्रीका नष्टच्छायेव मेदिनी । विभाति तात नैकोऽहं विरहे तस्य चक्रिणः ॥ ४८ ॥
यस्य प्रभावाद्भीष्माद्यैर्मय्यग्नौ शलभायितम् । विना तेनाद्य कृष्णेन गोपालैरस्मि निर्जितः ॥४९॥
गाण्डीवस्त्रिषु लोकेषु ख्यातिं यदनुभावतः । गतस्तेन विनाऽऽभीरलगुडैस्स तिरस्कृतः ॥ ५० ॥
स्त्रीसहस्राण्यनेकानि मन्नाथानि महामुने । यततो मम नीतानि दस्युभिर्लगुडायुधैः ॥ ५१ ॥
आनीयमानमाभीरैः कृष्ण कृष्णावरोधनम् । हृतं यष्टिप्रहरणैः परिभूय बलं मम ॥ ५२ ॥
निश्श्रीकता न मे चित्रं यज्जीवामि तदद्भुतम् । नीचावमानपंकांकी निर्लज्जोऽस्मि पितामह ॥५३॥

व्यास उवाच :—

अलं ते व्रीडया पार्थ न त्वं शोचितुमर्हसि । अवेहि सर्वभूतेषु कालस्य गतिरीदृशी ॥ ५४ ॥
कालो भवाय भूतानामभवाय च पाण्डव । कालमूलमिदं ज्ञात्वा भव स्थैर्यपरोऽर्जुन ॥ ५५ ॥
नद्यस्समुद्रा गिरयस्सकला च वसुंधरा । देवा मनुष्याः पशवस्तरवश्च सरीसृपाः ॥ ५६ ॥

---

सांतानिकादय इति ॥ सांतानिकः—संतानार्थमुद्वोढुमिच्छन् । आदिशब्देन यक्ष्यमाणादयो गृह्यन्ते । यथाह मनुः * सांतानिकं यक्ष्यमाणमध्वगं सार्ववेदसम् । गुर्वर्थपितृमात्रर्थस्वाध्यायार्थ्युपतापिनः ॥ इति ॥ ३८–४० ॥ स्पृष्ट इति ॥ घटवारि—घटान्नीयमानाच्चलितादुच्चलद्वारि ॥ ४१–४३ ॥

ईश्वरेणेति ॥ इतरेणेव । महता—महता सतापि इतरेणेव-प्राकृतेनेव स्मितादिकं कुर्वता तृणमयाः–तृणकृताः पुरुषाः ॥ ४४–४७ ॥

निर्यौवनेति ॥ नाहमेक एव निर्यौवनादिकः । यौवनशब्देन शक्तिर्लक्ष्यते । छाया—कान्तिः ॥४८-५१॥

सृष्टाः कालेन कालेन पुनर्यास्यन्ति संक्षयम् । कालात्मकमिदं सर्वं ज्ञात्वा शममवाप्नुहि ॥५७॥
कालस्वरूपी भगवान्कृष्णः कमललोचनः । यच्चात्थ कृष्णमाहात्म्यं तत्तथैव धनंजय ॥ ५८ ॥
भारावतरकार्यार्थमवतीर्णस्स मेदिनीम् । भाराक्रान्ता धरा याता देवानां समितिं पुरा ॥ ५९ ॥
तदर्थमवतीर्णोऽसौ कालरूपी जनार्दनः । तच्च निष्पादितं कार्यमशेषा भूभुजो हताः ॥ ६० ॥
वृष्ण्यन्धककुलं सर्वं तथा पार्थोपसंहृतम् । न किंचिदन्यत्कर्तव्यं तस्य भूमितले प्रभोः ॥ ६१ ॥
अतो गतस्स भगवान्कृतकृत्यो यथेच्छया । सृष्टिं सर्गे करोत्येष देवदेवः स्थितौ स्थितिम् ।
अन्तेऽन्ताय समर्थोऽयं सांप्रतं वै यथा गतः ॥ ६२ ॥
तस्मात्पार्थ न संतापस्त्वया कार्यः पराभवे । भवन्ति भावाः कालेषु पुरुषाणां यतस्स्तुतिः ॥६३॥
त्वयैकेन हता भीष्मद्रोणकर्णादयो रणे । तेषामर्जुन कालोत्थः किं न्यूनाभिभवो न सः ॥ ६४ ॥
विष्णोस्तस्य प्रभावेन यथा तेषां पराभवः । कृतस्तथैव भवतो दस्युभ्यस्स पराभवः ॥ ६५ ॥
स देवेशश्शरीराणि समाविश्य जगत्स्थितम् । करोति सर्वभूतानां नाशमन्ते जगत्पतिः ॥ ६६ ॥
भगोदये ते कौन्तेय सहायोऽभूज्जनार्दनः । तथान्ते तद्विपक्षास्ते केशवेन विनाशिताः ॥ ६७ ॥
कश्श्रद्दध्यात्सगाङ्गेयान्हन्यास्त्वं कौरवानिति । आभीरेभ्यश्च भवतः कः श्रद्दध्यात्पराभवम् ॥६८॥
पार्थैतत्सर्वभूतस्य हरेर्लीलाविचेष्टितम् । त्वया यत्कौरवा ध्वस्ता यदाभीरैर्भवाञ्जितः ॥ ६९ ॥
गृहीता दस्युभिर्याश्च भवाञ्छोचति तास्स्त्रियः । एतस्याहं यथावृत्तं कथयामि तवार्जुन ॥ ७० ॥
अष्टावक्रः पुरा विप्रो जलवासरतोऽभवत् । बहून्वर्षगणान्पार्थ गृणन्ब्रह्म सनातनम् ॥ ७१ ॥
जितेष्वसुरसंघेषु मेरुपृष्ठे महोत्सवः । बभूव तत्र गच्छन्त्यो ददृशुस्तं सुरस्त्रियः ॥ ७२ ॥
रंभातिलोत्तमाद्यास्तु शतशोऽथ सहस्रशः । तुष्टुवुस्तं महात्मानं प्रशशंसुश्च पाण्डव ॥ ७३ ॥
आकण्ठमग्नं सलिले जटाभारवहं मुनिम् । विनयावनताश्चैनं प्रणेमुस्स्तोत्रतत्पराः ॥ ७४ ॥
यथायथा प्रसन्नोऽसौ तुष्टुवुस्तं तथातथा । सर्वास्ताः कौरवश्रेष्ठ तं वरिष्ठं द्विजन्मनाम् ॥ ७५ ॥

अष्टावक्र उवाच :—

प्रसन्नोऽहं महाभागा भवतीनां यदिष्यते । मत्तस्तद्व्रियतां सर्वं प्रदास्याम्यतिदुर्लभम् ॥ ७६ ॥
रंभातिलोत्तमाद्यास्तं वैदिक्योऽप्सरसोऽब्रुवन् । प्रसन्ने त्वय्यपर्याप्तं किमस्माकमिति द्विज ॥ ७७ ॥
इतरास्त्वब्रुवन्विप्र प्रसन्नो भगवान्यदि । तदिच्छामः पतिं प्राप्तुं विप्रेन्द्र पुरुषोत्तमम् ॥ ७८ ॥

---

आनीयमानमिति ॥ कृष्ण—हे व्यास ॥ ५२—६२ ॥

तस्मादिति ॥ भावास्सर्वे, कालेषु—अभ्युदयकालेषु ॥ ६३—७२ ॥

रंभेति ॥ स्तुतिर्गानसहिता, प्रशंसा तद्रहिता ॥ ७३—८५ ॥

व्यास उवाच—एवं भविष्यतीत्युक्त्वा ह्युत्ततार जलान्मुनिः ।
तमुत्तीर्णं च ददृशुर्विरूपं वक्रमष्टधा ॥ ७९ ॥

तं दृष्ट्वा गूहमानानां यासां हासः स्फुटोऽभवत् । ताश्शशाप मुनिः कोपमवाप्य कुरुनन्दन ॥८०॥
यस्माद्विकृतरूपं मां मत्वा हासावमानना । भवतीभिः कृता तस्मादेतं शापं ददामि वः ॥ ८१ ॥
मत्प्रसादेन भर्तारं लब्ध्वा तु पुरुषोत्तमम् । मच्छापोपहतास्सर्वा दस्युहस्तं गमिष्यथ ॥ ८२ ॥

व्यास उवाच—

[इत्युदीरितमाकर्ण्य मुनिस्ताभिः प्रसादितः । पुनस्सुरेन्द्रलोकं वै प्राह भूयो गमिष्यथ ॥ ८३ ॥]
एवं तस्य मुनेश्शापादष्टावक्रस्य चक्रिणम् । भर्तारं प्राप्य ता याता दस्युहस्तं सुराङ्गनाः ॥ ८४ ॥
तत्त्वया नात्र कर्तव्यश्शोकोऽल्पोऽपि हि पाण्डव । तेनैवाखिलनाथेन सर्वं तदुपसंहृतम् ॥ ८५ ॥
भवतां चोपसंहार आसन्नस्तेन पाण्डव । बलं तेजस्तथा वीर्यं माहात्म्यं चोपसंहृतम् ॥ ८६ ॥
जातस्य नियतो मृत्युः पतनं च तथोन्नतेः । विप्रयोगावसानस्तु संयोगस्संचये क्षयः ॥ ८७ ॥
विज्ञाय न बुधाश्शोकं न हर्षमुपयान्ति ये । तेषामेवेतरे चेष्टां शिक्षन्तस्सन्ति तादृशाः ॥ ८८ ॥
तस्मात्त्वया नरश्रेष्ठ ज्ञात्वैतद्भ्रातृभिस्सह । परित्यज्याखिलं तन्त्रं गन्तव्यं तपसे वनम् ॥ ८९ ॥
तद्गच्छ धर्मराजाय निवेद्यैतद्वचो मम । परश्वो भ्रातृभिस्सार्धं यथा यासि तथा कुरु ॥ ९० ॥
इत्युक्तोऽभ्येत्य पार्थाभ्यां यमाभ्यां च सहार्जुनः । दृष्टं चैवानुभूतं च सर्वमाख्यातवांस्तथा ॥९१॥
व्यासवाक्यं च ते सर्वे श्रुत्वाऽर्जुनमुखेरितम् । राज्ये परीक्षितं कृत्वा ययुः पाण्डुसुता वनम् ॥९२॥
इत्येतत्तव मैत्रेय विस्तरेण मयोदितम् । जातस्य यद्यदोर्वंशे वासुदेवस्य चेष्टितम् ॥ ९३ ॥
यश्चैतच्चरितं तस्य कृष्णस्य शृणुयात्सदा । सर्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ९४ ॥

इति श्रीविष्णुपुराणे पञ्चमेंऽशेऽष्टत्रिंशोऽध्यायः ॥ ३८ ॥

समाप्तश्चायं विष्णुपुराणस्य पञ्चमोंऽशः ॥

---

भवतामिति ॥ तेजः—पराभिभवासहिष्णुत्वम् । माहात्म्यम्—अस्त्रमन्त्रादिजं सामर्थ्यम् ॥ ८६-८७ ॥
विज्ञायेति ॥ विबुधाः—विद्वांसः, सन्ति तादृशाः—तादृशा भवन्ति ॥ ८८ ॥
तस्मादिति ॥ तन्त्रं—परिच्छदम् ॥ ८९, ९० ॥
इत्युक्त इति ॥ दृष्टं—प्रत्यक्षितं व्यासोक्त्या श्रुतं च सर्वम् ॥ ९१, ९२ ॥
श्रीकृष्णलीलां निगमयति—इत्येतदिति ॥ ९३ ॥
भगवच्चरित्रश्रवणादिफलमाह—यश्चैतच्चरितमिति ॥ ९४ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये पञ्चमेंऽशेऽष्टत्रिंशोऽध्यायः ॥ ३८ ॥

समाप्तश्चायं पञ्चमोंऽशः ॥

# अथ षष्ठेंशे प्रथमोऽध्यायः

य:—

व्याख्याता भवता सर्गवंशमन्वन्तरस्थितिः । वंशानुचरितं चैव विस्तरेण महामुने ॥ १ ॥
श्रोतुमिच्छाम्यहं त्वत्तो यथावदुपसंहृतिम् । महाप्रलयसंज्ञां च कल्पान्ते च महामुने ॥ २ ॥

राशरः—

मैत्रेय श्रूयतां मत्तो यथावदुपसंहृतिः । कल्पान्ते प्राकृते चैव प्रलयो जायते यथा ॥ ३ ॥
अहोरात्रं पितॄणां तु मासोऽब्दस्त्रिदिवौकसाम् । चतुर्युगसहस्रे तु ब्रह्मणो द्वे द्विजोत्तम ॥ ४ ॥
कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम् । दिव्यैर्वर्षसहस्रैस्तु तद्द्वादशभिरुच्यते ॥ ५ ॥
चतुर्युगाण्यशेषाणि सदृशानि स्वरूपतः । आद्यं कृतयुगं मुक्त्वा मैत्रेयान्त्यं तथा कलिम् ॥ ६ ॥
आद्ये कृतयुगे सर्गो ब्रह्मणा क्रियते यथा । क्रियते चोपसंहारस्तथाऽन्ते च कलौ युगे ॥ ७ ॥

:—

लेस्स्वरूपं भगवन्विस्तराद्वक्तुमर्हसि । धर्मश्चतुष्पाद्भगवान्यस्मिन्विप्लवमृच्छति ॥ ८ ॥

राशरः—

लेस्स्वरूपं मैत्रेय यद्भवाञ्छ्रोतुमिच्छति । तन्निबोध समासेन वर्तते यन्महामुने ॥ ९ ॥

---

## अथ षष्ठेंशे प्रथमोऽध्यायः

व्याख्यातेति ॥ प्रथमांशे सर्ग उक्तः । द्वितीयादिषु वंशमन्वन्तरवंशानुचरितरूपा स्थितिरुक्ता ॥ १ ॥

श्रोतुमिति ॥ अथ कल्पान्ते उपसंहृतिं—महाप्रलयसंज्ञामुपसंहृतिं च श्रोतुमिच्छामि ॥ २ ॥

मैत्रेयेति ॥ प्राकृते, प्रलय इति शेषः । द्विपरार्धक इति वक्ष्यमाणे यथोपसंहृतिर्जायते तथा यथावत्—
तः श्रूयताम् ॥ ३ ॥

अहोरात्रमिति ॥ मानुषे मासः पितॄणामहोरात्रम्, अब्दो देवानाम्, दिव्ये चतुर्युगसहस्रे द्वे ब्रह्मणो-
॥ ४, ५ ॥

चतुर्युगानीति ॥ स्वरूपतः—परिमाणधर्माधर्मादिभिः । यथोक्तं हरिवंशे—* कृते धर्मश्चतुष्पात्स्याद-
भागथा । द्वाभ्यामधर्मः पादाभ्यां त्रिभिर्धर्मस्ततः स्थितः ॥ द्वाभ्यां धर्मः स्थितः पद्भ्यामधर्मस्त्रिभिरुच्छ्रितः ।
श्चतुष्पात्स्याद्धर्मः पादशेषगः ॥ इति । अयमर्थः—कृते—कृतयुगे आदौ पादभाक् । अथ कृतान्ते
ः पादभाग्भवति ततस्त्रेतायाम् ॥ ६ ॥

आद्य इति ॥ ब्रह्मणा—चतुर्मुखशरीरकेण भगवता, * भोगिशय्यागतः शेते त्रैलोक्यग्रासबृंहितः *
ात् । आद्यन्तयोर्युगयोः सृष्टिसंहारादेव विशेषः ॥ ७–९ ॥

वर्णाश्रमाचारवती प्रवृत्तिर्न कलौ नृणाम् । न सामऋग्यजुर्धर्मविनिष्पादनहैतुकी ॥ १० ॥
विवाहा न कलौ धर्म्या न शिष्यगुरुसंस्थितिः । न दांपत्यक्रमो नैव वह्निदेवात्मकः क्रमः ॥११॥
यत्र कुत्र कुले जातो बली सर्वेश्वरः कलौ । सर्वेभ्य एव वर्णेभ्यो योग्यः कन्यावरोधने ॥ १२ ॥
येन केन च योगेन द्विजातिर्दीक्षितः कलौ । यैव सैव च मैत्रेय प्रायश्चित्तं कलौ क्रिया ॥ १३ ॥
सर्वमेव कलौ शास्त्रं यस्य यद्वचनं द्विज । देवता च कलौ सर्वा सर्वस्सर्वस्य चाश्रमः ॥ १४ ॥
उपवासस्तथाऽऽयासो वित्तोत्सर्गस्तपः कलौ । धर्मो यथाभिरुचितैरनुष्ठानैरनुष्ठितः ॥ १५ ॥
वित्तेन भविता पुंसां स्वल्पेनाढ्यमदः कलौ । स्त्रीणां रूपमदश्चैवं केशैरेव भविष्यति ॥ १६ ॥
सुवर्णमणिरत्नादौ वस्त्रे चोपक्षयं गते । कलौ स्त्रियो भविष्यन्ति तदा केशैरलंकृताः ॥ १७ ॥
परित्यक्ष्यन्ति भर्तारं वित्तहीनं तथा स्त्रियः । भर्ता भविष्यति कलौ वित्तवानेव योषिताम् ॥१८॥
यो वै ददाति बहुलं स्वं स स्वामी सदा नृणाम् । स्वामित्वहेतुस्संबन्धो न चाभिजनता तथा ॥
गृहान्ता द्रव्यसंघाता द्रव्यान्ता च तथा मतिः । अर्थाश्चात्मोपभोग्यान्ता भविष्यन्ति कलौ युगे ॥२०॥

---

वर्णाश्रमेति ॥ वर्णाश्रमेत्यादिस्मार्तप्रवृत्तिविषयं सामर्ग्यजुरिति श्रौतप्रवृत्तिविषयत्रयीप्रतिपाद्याग्निहोत्रादिधर्मविनिष्पादनं यस्याः प्रवृत्तेः हेतुः—प्रयोजनं सा तथोक्ता । सा च नेत्यर्थः ॥ १० ॥

विवाहा इति ॥ दांपत्यक्रमः—दंपत्योर्धर्मः, दंपती एव दांपत्यम् । वह्निदेवात्मकः—वह्नौ देवयज्ञक्रियात्मकः । क्रमः—अनुष्ठानम् ॥ ११ ॥

यत्र कुत्रेति ॥ वर्णेभ्यः—वर्णानां धनी योग्यः, न तु वृत्तविद्यादिमान् ॥ १२ ॥

येनेति ॥ येन केन च—श्रुतिस्मृतिभ्यामनुकल्पतयोक्तेन, योगेन—प्रकारेण, दीक्षितो भवति ॥ १३॥

सर्वमेवेति ॥ देवता च सर्वा—अवैदिकी काल्यादिः । सर्वः सर्वस्य चाश्रमः—ब्रह्मचर्यवैराग्यादिरहितस्यापि ॥ १४ ॥

उपवास इति ॥ आयासः—तीर्थयात्रादिकायक्लेशः । उपवासादिस्स्वाभिरुचितानुष्ठानानुष्ठितो धर्मो भवति ॥ १५, १६ ॥

सुवर्णमणीति ॥ केशैः—प्रशस्तैः, सुवर्णादिभूषणसहपाठात् ॥ १७, १८ ॥

य इति ॥ स्वामित्वहेतुरिति । बह्वर्थदानादिना संबन्ध एव स्वामित्वहेतुः भावी, न त्वभिजनः स्वामित्वहेतुस्संबन्धो भविता अभिजन इति पाठे स्वामित्वहेतुर्वसुदानादिसम्बन्धः, स एवाभिजनः न तु महाकुलीनत्वम् । हीनवर्णोऽप्यर्थदो महाकुलीनवत्सेव्य इत्यर्थः ॥ १९ ॥

गृहान्ता इति ॥ बुद्धेस्साध्यं धनार्जनम्, न त्वात्मज्ञानादि । तच्च धनं गृहनिर्माणार्थम्, न तु यागाधानाद्यर्थम् । ते चार्था गृहरूपाः स्वदेहभोगार्थाः, न त्वतिथ्यादिभोगार्थाः ॥ २० ॥

स्त्रियः कलौ भविष्यन्ति स्वैरिण्यो ललितस्पृहाः। अन्यायादाप्तवित्तेषु पुरुषाः स्पृहयालवः॥ २१॥
अभ्यर्थितापि सुहृदा स्वार्थमेव निरीक्ष्यते। पणार्धार्धार्धमात्रेऽपि करिष्यन्ति तथा स्पृहाम्॥ २२॥
समानपौरुषं चेतो भावि विप्रेषु वै कलौ। क्षीरप्रधानसंबन्धि भावि गोषु च गौरवम्॥ २३॥
अनावृष्टिभयप्रायाः प्रजाः क्षुद्भयकातराः। भविष्यन्ति तदा सर्वे गगनासक्तदृष्टयः॥ २४॥
कन्दमूलफलाहारास्तापसा इव मानवाः। आत्मानं घातयिष्यन्ति ह्यनावृष्ट्यादिदुःखिताः॥ २५॥
दुर्भिक्षमेव सततं तथा क्लेशमनीश्वराः। प्राप्स्यन्ति व्याहतसुखप्रमोदा मानवाः कलौ॥ २६॥
अस्नानभोजिनो नाग्निदेवतातिथिपूजनम्। करिष्यन्ति कलौ प्राप्ते न च पिण्डोदकक्रियाम्॥ २७॥
लोलुपा ह्रस्वदेहाश्च बह्वन्नादनतत्पराः। बहुप्रजाल्पभाग्याश्च भविष्यन्ति कलौ स्त्रियः॥ २८॥
उभाभ्यामपि पाणिभ्यां शिरःकण्डूयनं स्त्रियः। कुर्वन्त्यो गुरुभर्तॄणामाज्ञां भेत्स्यन्त्यनादराः॥ २९॥
स्वपोषणपराः क्षुद्रा देहसंस्कारवर्जिताः। परुषानृतभाषिण्यो भविष्यन्ति कलौ स्त्रियः॥ ३०॥
दुश्शीला दुष्टशीलेषु कुर्वन्त्यस्सततं स्पृहाम्। असद्वृत्ता भविष्यन्ति पुरुषेषु कुलाङ्गनाः॥ ३१॥
वेदादानं करिष्यन्ति बटवश्चाकृतव्रताः। गृहस्थाश्च न होष्यन्ति न दास्यन्त्युचितान्यपि॥ ३२॥
वानप्रस्था भविष्यन्ति ग्राम्याहारपरिग्रहाः। भिक्षवश्चापि मित्रादिस्नेहसंबन्धयन्त्रणाः॥ ३३॥
अरक्षितारो हर्तारश्शुल्कव्याजेन पार्थिवाः। हारिणो जनवित्तानां संप्राप्ते तु कलौ युगे॥ ३४॥
योयोऽश्वरथनागाढ्यस्स स राजा भविष्यति। यश्च यश्चाबलस्सर्वस्स स भृत्यः कलौ युगे॥ ३५॥
वैश्याः कृषिवणिज्यादि संत्यज्य निजकर्म यत्। शूद्रवृत्त्या प्रवत्स्यन्ति कारुकर्मोपजीविनः॥ ३६॥
भैक्षव्रतपराश्शूद्राः प्रव्रज्यालिङ्गिनोऽधमाः। पाषण्डसंश्रयां वृत्तिमाश्रयिष्यन्ति सत्कृताः॥ ३७॥
दुर्भिक्षकरपीडाभिरतीवोपद्रुता जनाः। गोधूमान्नयवान्नाढ्यान्देशान्यास्यन्ति दुःखिताः॥ ३८॥
वेदमार्गे प्रलीने च पाषण्डाढ्ये ततो जने। अधर्मवृद्ध्या लोकानामल्पमायुर्भविष्यति॥ ३९॥
अशास्त्रविहितं घोरं तप्यमानेषु वै तपः। नरेषु नृपदोषेण बाल्ये मृत्युर्भविष्यति॥ ४०॥
भविता योषितां सूतिः पञ्चषट्सप्तवार्षिकी। नवाष्टदशवर्षाणां मनुष्याणां तथा कलौ॥ ४१॥

---

स्त्रिय इति॥ ललितेषु पुरुषेषु स्पृहा यासां तास्तथोक्ताः॥ २१॥

अभ्यर्थितापीति॥ अभ्यर्थितापि—अभ्यर्थिता अपि। अत्र आर्षस्संधिः। देवापि यं न पश्यन्तीतिवत्। पणः कपर्दिकाशीतिः, पञ्चगुञ्जातुलितं स्वर्णं वा॥ २२॥

समानपौरुषमिति॥ समानपौरुषमित्यवरवर्णाश्शूद्रादयः विप्रान् स्वसमानतेजस्कान् मन्यन्त इत्यर्थः। समानपरुषम् इति पाठे सगर्वनिष्ठुरं च चेत इति॥ २३, २४॥ कन्दमूलेति॥ घातयिष्यन्ति—क्लेशयिष्यन्ति॥२५॥

दुर्भिक्षमिति॥ प्रमोदः—उल्लासः॥ २६—३१॥ वेदादानमिति॥ अकृतव्रताः—वेदव्रतरहिताः॥३२॥

वानप्रस्था इति॥ वनवासिनः—वानप्रस्थाः॥ ३३॥

अरक्षितार इति॥ शुल्कव्याजेन—शुल्कमिति व्यपदिश्य शुल्कव्यतिरिक्तैर्दण्डैश्च॥ ३४—४१॥

पलितोद्भवश्च भविता तथा द्वादशवार्षिकः। नातिजीवति वै कश्चित्कलौ वर्षाणि विंशतिम् ॥४२॥
अल्पप्रज्ञा वृथालिङ्गा दुष्टान्तःकारणाः कलौ। यतस्ततो विनङ्क्ष्यन्ति कालेनाल्पेन मानवाः ॥४३॥
यदायदा हि मैत्रेय हानिर्धर्मस्य लक्ष्यते। तदातदा कलेर्वृद्धिरनुमेया विचक्षणैः ॥ ४४ ॥
यदायदा हि पाषण्डवृद्धिर्मैत्रेय लक्ष्यते। तदातदा कलेर्वृद्धिरनुमेया महात्मभिः ॥ ४५ ॥
यदायदा सतां हानिर्वेदमार्गानुसारिणाम्। तदातदा कलेर्वृद्धिरनुमेया विचक्षणैः ॥ ४६ ॥
प्रारंभाश्चावसीदन्ति यदा धर्मभृतां नृणाम्। तदाऽनुमेयं प्राधान्यं कलेर्मैत्रेय पण्डितैः ॥ ४७ ॥
यदायदा न यज्ञानामीश्वरः पुरुषोत्तमः। इज्यते पुरुषैर्यज्ञैस्तदा ज्ञेयं कलेर्बलम् ॥ ४८ ॥
न प्रीतिर्वेदवादेषु पाषण्डेषु यदा रतिः। कलेर्वृद्धिस्तदा प्राज्ञैरनुमेया विचक्षणैः ॥ ४९ ॥
कलौ जगत्पतिं विष्णुं सर्वस्रष्टारमीश्वरम्। नार्चयिष्यन्ति मैत्रेय पाषण्डोपहता जनाः ॥ ५० ॥
किं देवैः किं द्विजैर्वेदैः किं शौचेनाम्बुजन्मना। इत्येवं विप्रवक्ष्यन्ति पाषण्डोपहता जनाः ॥५१॥
स्वल्पाम्बुवृष्टिः पर्जन्यः सस्यं स्वल्पफलं तथा। फलं तथाऽल्पसारं च विप्र प्राप्ते कलौ युगे ॥५२॥
शाणीप्रायाणि वस्त्राणि शमीप्राया महीरुहाः। शूद्रप्रायास्तथा वर्णा भविष्यन्ति कलौ युगे ॥५३॥
अणुप्रायाणि धान्यानि चाज्यप्रायं तथा पयः। भविष्यन्ति कलौ प्राप्ते ह्यौशीरं चानुलेपनम् ॥५४॥
श्वश्रूश्वशुरभूयिष्ठा गुरवश्च नृणां कलौ। स्यालाद्या हारिभार्याश्च सुहृदो मुनिसत्तम ॥ ५५ ॥
कस्य माता पिता कस्य यथा कर्मानुगः पुमान्। इति चोदाहरिष्यन्ति श्वशुरानुगता नराः ॥५६॥
वाङ्मनःकायजैर्दोषैरभिभूताः पुनःपुनः। नराः पापान्यनुदिनं करिष्यन्त्यल्पमेधसः ॥ ५७ ॥
निस्सत्यानामशौचानां निर्ह्रीकाणां तथा नृणाम्। यद्यद्दुःखाय तत्सर्वं कलिकाले भविष्यति ॥५८॥
निस्स्वाध्यायवषट्कारे स्वधास्वाहाविवर्जिते। तदा प्रविरलो धर्मः क्वचिल्लोके निवत्स्यति ॥ ५९ ॥
तत्राल्पेनैव यत्नेन पुण्यस्कन्धमनुत्तमम्। करोति यः कृतयुगे क्रियते तपसा हि सः ॥ ६० ॥

इति श्रीविष्णुपुराणे षष्ठेंशे प्रथमोऽध्यायः ॥ १ ॥

---

पलितेति ॥ विंशतिं नातिजीवन्ति कलेरन्ते। त्रयोविंशतिमिति चतुर्थोक्तं जीवनमितः पूर्वम् ॥४२-५२॥

शाणीप्रायाणीति ॥ शाणश्शाणी वा शणविकारः। शाटीति पाठे ह्रस्वस्थूलम् ॥ ५३-५४ ॥

श्वश्रूश्वशुरेति ॥ हारिभार्याः—हारिण्यः हृद्या भार्याः। बहुव्रीहिर्वा हारिण्यो भार्या येषां ते, ते सुहृदः। भर्तॄणां जाराणां च रम्यभार्या हि सुहृदः ॥ ५५-५८ ॥

निस्स्वाध्यायेति ॥ क्वचित्—कीकटादौ ॥ ५९ ॥

तत्रेति ॥ तत्र—कलौ। अल्पेनैव यत्नेन—हरिसंकीर्तनादिना। अनुत्तमं पुण्यस्कन्धं—पुण्यराशिं करोति पुरुषः। यः—पुण्यस्कन्धः क्रियते स कृतयुगे तपसा हि क्रियते ॥ ६० ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये षष्ठेंशे प्रथमोऽध्यायः ॥ १ ॥

## अथ द्वितीयोऽध्यायः

श्रीपराशरः—

व्यासश्चाह महाबुद्धिर्यदत्रैव हि वस्तुनि । तच्छ्रूयतां महाभाग गदतो मम तत्त्वतः ॥ १ ॥

कस्मिन्कालेऽल्पको धर्मो ददाति सुमहत्फलम् । मुनीनां पुण्यवादोऽभूत्कैश्चासौ क्रियते सुखम् ॥ २ ॥

संदेहनिर्णयार्थाय वेदव्यासं महामुनिम् । ययुस्ते संशयं प्रष्टुं मैत्रेय मुनिपुङ्गवाः ॥ ३ ॥

ददृशुस्ते मुनिं तत्र जाह्नवीसलिले द्विज । वेदव्यासं महाभागमर्धस्नातं सुतं मम ॥ ४ ॥

स्नानावसानं ते तस्य प्रतीक्षन्तो महर्षयः । तस्थुस्तीरे महानद्यास्तरुषण्डमुपाश्रिताः ॥ ५ ॥

मग्नोऽथ जाह्नवीतोयादुत्थायाह सुतो मम । शूद्रस्साधुः कलिस्साधुरित्येवं शृण्वतां वचः ।
तेषां मुनीनां भूयश्च ममज्ज स नदीजले ॥ ६ ॥

साधुसाध्विति चोत्थाय शूद्र धन्योऽसि चाब्रवीत् ॥ ७ ॥

निमग्नश्च समुत्थाय पुनः प्राह महामुनिः । योषितस्साधु धन्यास्तास्ताभ्यो धन्यतरोऽस्ति कः ॥ ८ ॥

ततः स्नात्वा यथान्यायमाचान्तं च कृतक्रियम् । उपतस्थुर्महाभागं मुनयस्ते सुतं मम ॥ ९ ॥

कृतसंवन्दनांश्चाह कृतासनपरिग्रहान् । किमर्थमागता यूयमिति सत्यवतीसुतः ॥ १० ॥

श्रीपराशरः—

तमूचुस्संशयं प्रष्टुं भवन्तं वयमागताः । अलं तेनास्तु तावन्नः कथ्यतामपरं त्वया ॥ ११ ॥

कलिस्साध्विति यत्प्रोक्तं शूद्रः साध्विति योषितः । यदाह भगवान्त्साधु धन्याश्चेति पुनःपुनः ॥

तत्सर्वं श्रोतुमिच्छामो न चेद्गुह्यं महामुने । तत्कथ्यतां ततो हृत्स्थं पृच्छामस्त्वां प्रयोजनम् ॥ १३ ॥

---

## अथ द्वितीयोऽध्यायः

व्यासश्चेति ॥ अत्र वस्तुनि—अल्पयत्नेन पुण्यस्कन्धप्राप्तौ ॥ १ ॥

कस्मिन्निति ॥ पुण्यवादः—पुण्यविषयविचारः ॥ २ ॥

संदेहनिर्णयार्थायेति ॥ संशयं—संशयितमर्थं प्रष्टुम् ॥ ३–५ ॥

मग्न इति ॥ शूद्रस्साधुः कलिः साधुरिति वचनम् ॥ ६ ॥

साधुसाध्विति ॥ साधुसाधु शूद्र धन्योऽसीत्युक्तिः हृदयसन्निधेः प्रत्यक्षोक्तिरिव भातीति ॥ ७ ॥

निमग्नश्चेति ॥ ताभ्यः—योषिद्भ्यः । कलौ साधुत्वं शूद्रे धन्यत्वं योषितां धन्यतरत्वं चेति तद्गुणरतम्याद्विरम्य त्रिधोक्तिः ॥ ८–१० ॥

तमिति ॥ तेन—प्राग्विवक्षितेनार्थेन, अलमस्तु—तन्निवृत्तिरस्तु ॥ ११–१३ ॥

श्रीपराशरः—

इत्युक्तो मुनिभिर्व्यासः प्रहस्येदमथाब्रवीत् । श्रूयतां भो मुनिश्रेष्ठा यदुक्तं साधुसाध्विति ॥ १४ ॥

व्यास उवाच—

यत्कृते दशभिर्वर्षैस्त्रेतायां हायनेन तत् । द्वापरे तच्च मासेन ह्यहोरात्रेण तत्कलौ ॥ १५ ॥
तपसो ब्रह्मचर्यस्य जपादेश्च फलं द्विजाः । प्राप्नोति पुरुषस्तेन कलिस्साध्विति भाषितम् ॥ १६ ॥
ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥ १७ ॥
धर्मोत्कर्षमतीवात्र प्राप्नोति पुरुषः कलौ । अल्पायासेन धर्मज्ञास्तेन तुष्टोऽस्म्यहं कलौ ॥ १८ ॥
व्रतचर्यापरैर्ग्राह्या वेदाः पूर्वं द्विजातिभिः । ततस्स धर्मसंप्राप्तैर्यष्टव्यं विधिवद्धनैः ॥ १९ ॥
वृथा कथा वृथा भोज्यं वृथेज्या च द्विजन्मनाम् । पतनाय ततो भाव्यं तैस्तु संयमिभिस्सदा ॥ २० ॥
असम्यक्करणे दोषस्तेषां सर्वेषु वस्तुषु । भोज्यपेयादिकं चैषां नेच्छाप्राप्तिकरं द्विजाः ॥ २१ ॥
पारतन्त्र्यं समस्तेषु तेषां कार्येषु वै यतः । जयन्ति ते निजाँल्लोकान्क्लेशेन महता द्विजाः ॥ २२ ॥
द्विजशुश्रूषयैवैष पाकयज्ञाधिकारवान् । निजाञ्जयति वै लोकाञ्छूद्रो धन्यतरस्ततः ॥ २३ ॥
भक्ष्याभक्ष्येषु नास्यास्ति पेयापेयेषु वै यतः । नियमो मुनिशार्दूलास्तेनासौ साध्वितीरितः ॥ २४ ॥
स्वधर्मस्याविरोधेन नरैर्लब्धं धनं सदा । प्रतिपादनीयं पात्रेषु यष्टव्यं च यथाविधि ॥ २५ ॥
तस्यार्जने महाक्लेशः पालने च द्विजोत्तमाः । तथा सद्विनियोगे च विज्ञातं गहनं नृणाम् ॥ २६ ॥
एवमन्यैस्तथा क्लेशैः पुरुषा द्विजसत्तमाः । निजाञ्जयन्ति वै लोकान्प्राजापत्यादिकान्क्रमात् ॥ २७ ॥
योषिच्छुश्रूषणाद्भर्तुः कर्मणा मनसा गिरा । तद्धिता शुभमाप्नोति तत्सालोक्यं यतो द्विजाः ॥ २८ ॥

---

इत्युक्त इति ॥ प्रहस्येति—धिगस्त्वितिवत् । स्वप्रश्नोत्तरं दत्तमप्यबुद्ध्वा पुनः पृच्छतो मुनीन् प्रति हासः ॥ १४–१६ ॥

ध्यायन्निति ॥ कृते चित्तशुद्धिसंभवाद्ध्यानेन फलप्राप्तिः । त्रेतायां तदभावेऽपि चित्तशुद्ध्या यज्ञैः फलसिद्धिः । द्वापरे तयोरभावेऽपि आचारशुद्ध्याऽर्चनेन सिद्धिः, * सन्ध्याहीनोऽशुचिर्नित्यम् * इत्यादिवचनात् । कलौ तु तेषामभावेऽपि भगवन्नामसंकीर्तनेनैव फलसिद्धिरिति कलेस्साधुत्वम् ॥ १७ ॥

एतदेव विवृणोति । धर्मेति ॥ स्वल्पायासेन—संकीर्तनादिना ॥ १८ ॥

व्रतचर्येति ॥ व्रतचर्येत्यादि शूद्रसाधुत्वस्य उपोद्घातः ॥ १९,२० ॥

असम्यक्करण इति ॥ इच्छैव प्राप्तिकरी यस्य तदिच्छाप्राप्तिकरम्, इच्छया प्राप्यं न ॥ २१ ॥

अत्र हेतुः—पारतन्त्र्यमिति ॥ पारतन्त्र्यं—विधिपारतन्त्र्यम् ॥ २२ ॥

द्विजशुश्रूषयैवेति ॥ पाकयज्ञाधिकारवान्—शूद्रस्याप्यमन्त्रकपक्वहोमादिष्वधिकारः । अस्मै साधुचरितमिति शेषः ॥ २३,२४ ॥

स्वधर्मस्येति ॥ स्वधर्मस्येति स्त्रीसाधुत्वस्य प्रस्तावः । नरैः—पुंभिः ॥ २५ ॥

तस्येति ॥ गहनं—क्लेशः ॥ २६–२८ ॥

नातिक्लेशेन महता तानेव पुरुषो यथा । तृतीयं व्याहृतं तेन मया साध्विति योषितः ॥ २९ ॥
एतद्वः कथितं विप्रा यन्निमित्तमिहागताः । तत्पृच्छत यथाकामं सर्वं वक्ष्यामि वः स्फुटम् ॥३०॥
ऋषयस्ते ततः प्रोचुर्यत्प्रष्टव्यं महामुने । अस्मिन्नेव च तत्प्रश्ने यथावत्कथितं त्वया ॥ ३१ ॥

ीपराशरः—

ततः प्रहस्य तानाह कृष्णद्वैपायनो मुनिः । विस्मयोत्फुल्लनयनांस्तापसांस्तानुपागतान् ॥ ३२ ॥
मयैष भवतां प्रश्नो ज्ञातो दिव्येन चक्षुषा । ततो हि वः प्रसंगेन साधुसाध्विति भाषितम् ॥ ३३ ॥
स्वल्पेन हि प्रयत्नेन धर्मस्सिध्यति वै कलौ । नरैरात्मगुणाम्भोभिः क्षालिताखिलकिल्बिषैः ॥३४॥
शूद्रैश्च द्विजशुश्रूषातत्परैर्द्विजसत्तमाः । तथा स्त्रीभिरनायासात्पतिशुश्रूषयैव हि ॥ ३५ ॥
ततस्त्रितयमप्येतन्मम धन्यतरं मतम् । धर्मसंपादने क्लेशो द्विजातीनां कृतादिषु ॥ ३६ ॥
भवद्भिर्यदभिप्रेतं तदेतत्कथितं मया । अपृष्टेनापि धर्मज्ञाः किमन्यत्क्रियतां द्विजाः ॥ ३७ ॥

ीपराशरः—

ततस्संपूज्य ते व्यासं प्रशशंसुः पुनःपुनः । यथागतं द्विजा जग्मुर्व्यासोक्तिकृतनिश्चयाः ॥ ३८ ॥
भवतोऽपि महाभाग रहस्यं कथितं मया । अत्यन्तदुष्टस्य कलेरयमेको महान्गुणः ॥ ३९ ॥
यच्चाहं भवता पृष्टो जगतामुपसंहृतिम् । प्राकृतामन्तरालां च तामप्येष वदामि ते ॥ ४० ॥

इति श्रीविष्णुपुराणे षष्ठेंशे द्वितीयोऽध्यायः ॥ २ ॥

## अथ तृतीयोऽध्यायः

ोपराशरः—

सर्वेषामेव भूतानां त्रिविधः प्रतिसञ्चरः । नैमित्तिकः प्राकृतिकः तथैवात्यन्तिको लयः ॥ १ ॥
ब्राह्मो नैमित्तिकस्तेषां कल्पान्ते प्रतिसञ्चरः । आत्यन्तिकस्तु मोक्षाख्यः प्राकृतो द्विपरार्धकः ॥२॥

त्रेय उवाच—

परार्धसंख्यां भगवन्ममाचक्ष्व यया तु सः । द्विगुणीकृतया ज्ञेयः प्राकृतः प्रतिसञ्चरः ॥ ३ ॥

---

नेति ॥ तानेवेति—पुरुषो यथा प्राजापत्यादिकान् प्राप्नोति तथा योषित्तानेव प्राप्नोतीत्यर्थः ॥ २९-४० ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये षष्ठेंशे द्वितीयोऽध्यायः ॥ २ ॥

## अथ तृतीयोऽध्यायः

॥ १ ॥ ब्राह्म इति ॥ प्राकृतो द्विपरार्धक इति जल्पनात् परार्धद्वयात्मके ब्रह्मायुषि पूर्णे प्रकृतौ त्कार्यस्य लयः प्राकृतः ॥ २, ३ ॥

श्रीपराशरः—

स्थानात्स्थानं दशगुणमेकस्माद्गण्यते द्विज । ततोऽष्टादशमे भागे परार्धमभिधीयते ॥ ४ ॥

परार्धद्विगुणं यत्तु प्राकृतस्य लयो द्विज । तदाऽव्यक्तेऽखिलं व्यक्तं स्वहेतौ लयमेति वै ॥ ५ ॥

निमेषो मानुषो योऽसौ मात्रामात्राप्रमाणतः । तैः पञ्चदशभिः काष्ठा त्रिंशत्काष्ठाः कला स्मृता ॥६॥

नाडिका तु प्रमाणेन सा कला दश पञ्च च ॥ ७ ॥

उन्मानेनाम्भसस्सा तु पलान्यर्धत्रयोदश । मागधेन तु मानेन जलप्रस्थस्तु स स्मृतः ।

हेममाषैः कृतच्छिद्रश्चतुर्भिश्चतुरङ्गुलैः ॥ ८ ॥

नाडिकाभ्यामथ द्वाभ्यां मुहूर्तो द्विजसत्तम । अहोरात्रं मुहूर्तास्तु त्रिंशन्मासो दिनैस्तथा ॥ ९ ॥

मासैर्द्वादशभिर्वर्षमहोरात्रं तु तद्दिवि । त्रिभिर्वर्षशतैर्वर्षं षष्ट्या चैवासुरद्विषाम् ॥ १० ॥

तैस्तु द्वादशसाहस्रैश्चतुर्युगमुदाहृतम् । चतुर्युगसहस्रं तु कथ्यते ब्रह्मणो दिनम् ॥ ११ ॥

स कल्पस्तत्र मनवश्चतुर्दश महामुने । तदन्ते चैव मैत्रेय ब्राह्मो नैमित्तिको लयः ॥ १२ ॥

तस्य स्वरूपमत्युग्रं मैत्रेय गदतो मम । शृणुष्व प्राकृतं भूयस्तव वक्ष्याम्यहं लयम् ॥ १३ ॥

चतुर्युगसहस्रान्ते क्षीणप्राये महीतले । अनावृष्टिरतीवोग्रा जायते शतवार्षिकी ॥ १४ ॥

ततो यान्यल्पसाराणि तानि सत्त्वान्यशेषतः । क्षयं यान्ति मुनिश्रेष्ठ पार्थिवान्यनुपीडनात् ॥ १५ ॥

---

स्थानात् स्थानमिति ॥ * एकं दश शतमस्मात्सहस्रमयुतं ततः परं लक्षम् । प्रयुतं कोटिमथार्बुदमब्जं खर्वं ततो निखर्वं च ॥ तस्मान्महासरोजं शङ्कुम् सरितां पतिं ततो मध्यम् । अन्त्यं परार्धमाहुर्यथोत्तरं दशगुणं हि वै तज्ज्ञाः ॥ एवं द्विपरार्धमानुषवत्सरे तु महासंहारः ॥ ४, ५ ॥

निमेष इत्यादि ॥ यः प्रागुक्तो निमेषः असौ मात्रेत्युच्यते, मात्राप्रमाणत्वात् । एकमात्रलघ्वक्षरोच्चारणकालसंमितो ह्यसौ ॥ ६, ७ ॥

उन्मानेनेति ॥ तुलया मितस्याम्भसः पलानि, अर्धत्रयोदश—अर्धं त्रयोदशं येषां तानि अर्धत्रयोदश, सार्धद्वादशेत्यर्थः । सा नाडिका—उपचारात्तैर्नाडिका ज्ञातव्येत्यर्थः । कथमित्याह—हेमेति । हेममाषैः—माषः पञ्चगुञ्जामानम् । जलस्यैतत्सार्धं पलद्वादशकं मगधदेश्यं प्रस्थं पूरयति । स च प्रस्थश्चतुर्गुणस्सन्नाडीज्ञापक इति शेषः । यथा ह वायुः—* उन्मानेनाम्भसश्चापि पलान्यर्धत्रयोदश । मागधेन तु मानेन जलप्रस्थो विधीयते । एवं चाप्युदकप्रस्थाश्चत्वारो नाडिका घटः । हेममाषैः कृतच्छिद्रश्चतुर्भिश्चतुरङ्गुलैः ॥ इति । एवं चतुर्माषसुवर्णरचितचतुरङ्गुलसूचीकृताधश्छिद्रादाढकजलपूर्णात्पंचाशत्पलपरिमाणाद्घटात्तच्छिद्रेण पञ्चाशत्पलं जलं यावता कालेन निस्सरति तावत्कालो नाडीत्युक्तं भवति । अथवा अहोरात्रे जलस्य पूरणं निस्सरणं वा षष्टिवारं यथा स्यात् तथा तत्पात्रमानं कार्यम् । अन्ये तु चतुर्माषहेमनिर्मितया चतुरङ्गुलया सूच्या कृतच्छिद्रे सार्धद्वादशपले ताम्रपात्रे तत्प्रमाणं जलं तच्छिद्रेण यावता कालेन प्रविशति स काल एका नाडिका, तानि पलानि मागधमानेन जलप्रस्थ इति वर्णयन्ति । कृतच्छिद्रैरिति च पठन्ति । तत्रायमन्वयः—सा नाडिका चतुर्भिर्हेममाषैः कृतच्छिद्रैर्निष्पन्नान्यम्भसोऽर्धत्रयोदशपलानीति ॥ ८–१५ ॥

ततः स भगवान्विष्णू रुद्ररूपधरोऽव्ययः। क्षयाय यतते कर्तुमात्मस्था स्सकलाः प्रजाः ॥ १६ ॥
ततस्स भगवान्विष्णुर्भानोस्सप्तसु रश्मिषु। स्थितः पिबत्यशेषाणि जलानि मुनिसत्तम ॥ १७ ॥
पीत्वाऽम्भांसि समस्तानि प्राणिभूमिगतान्यपि। शोषं नयति मैत्रेय समस्तं पृथिवीतलम् ॥ १८ ॥
समुद्रान्सरितः शैलनदीप्रस्रवणानि च। पातालेषु च यत्तोयं तत्सर्वं नयति क्षयम् ॥ १९ ॥
ततस्तस्यानुभावेन तोयाहारोपबृंहिताः। त एव रश्मयस्सप्त जायन्ते सप्त भास्कराः ॥ २० ॥
अधश्चोर्ध्वं च ते दीप्ता स्ततस्सप्त दिवाकराः। दहन्त्यशेषं त्रैलोक्यं सपातालतलं द्विज ॥ २१ ॥
दह्यमानं तु तैर्दीप्तैस्त्रैलोक्यं द्विज भास्करैः। साद्रिनद्यर्णवाभोगं निस्स्नेहमभिजायते ॥ २२ ॥
ततो निर्दग्धवृक्षाम्बुत्रैलोक्यमखिलं द्विज। भवत्येषा च वसुधा कूर्मपृष्ठोपमाकृतिः ॥ २३ ॥
ततः कालाग्निरुद्रोऽसौ भूत्वा सर्वहरोऽनलः। शेषाहिश्वाससंभूतः पातालानि दहत्यधः ॥ २४ ॥
पातालानि समस्तानि स दग्ध्वा ज्वलनो महान्। भूमिमभ्येत्य सकलं बभस्ति वसुधातलम् ॥२५॥
भुवर्लोकं ततस्सर्वं स्वर्लोकं च सुदारुणः। ज्वालामालामहावर्तस्तत्रैव परिवर्तते ॥ २६ ॥
अम्बरीषमिवाभाति त्रैलोक्यमखिलं तदा। ज्वालावर्तपरीवारमुपक्षीणचराचरम् ॥ २७ ॥
ततस्तापपरीतास्तु लोकद्वयनिवासिनः। कृ(हृ)ताधिकारा गच्छन्ति महर्लोकं महामुने ॥ २८ ॥
तस्मादपि महातापतप्ता लोकात्ततः परम्। गच्छन्ति जनलोकं ते दशावृत्त्या परैषिणः ॥ २९ ॥
ततो दग्ध्वा जगत्सर्वं रुद्ररूपी जनार्दनः। मुखनिश्वासजान्मेघान्करोति मुनिसत्तम ॥ ३० ॥
ततो गजकुलप्रख्यास्तटित्वन्तोऽतिनादिनः। उत्तिष्ठन्ति तथा व्योम्नि घोरास्संवर्तका घनाः ॥३१॥
केचिन्नीलोत्पलश्यामाः केचित्कुमुदसन्निभाः। धूम्रवर्णा घनाः केचित्केचित्पीताः पयोधराः ॥३२॥
केचिद्रासभवर्णाभा लाक्षारसनिभास्तथा। केचिद्वैडूर्यसंकाशा इन्द्रनीलनिभाः क्वचित् ॥ ३३ ॥
शङ्खकुन्दनिभाश्चान्ये जात्यञ्जननिभाः परे। इन्द्रगोपनिभाः केचित्ततश्शिखिनिभास्तथा ॥ ३४ ॥
मनश्शिलाभाः केचिद्वै हरितालनिभाः परे। चाषपत्रनिभाः केचिदुत्तिष्ठन्ते महाघनाः ॥ ३५ ॥

---

तत इति ॥ क्षयाय रुद्ररूपधरो भूत्वा ॥ १६ ॥

तत इति ॥ सप्त रश्मयः—"सुषुम्णो हरिकेशश्च विश्वकर्मा तथैव च। विश्वव्यचा स्वधा संयद्वसुरर्वाग्वसुस्तथा" इत्युक्ताः ॥ १७–१९ ॥ तत इति ॥ भास्कराः—आरोगो भ्राज इत्यादयः ॥ २०–२४ ॥

पातालानीति ॥ बभस्ति—भक्षयति। भस—भक्षणदीप्त्योः ॥ २५, २६ ॥

अम्बरीषमिवेति ॥ अम्बरीषं—भर्जनभाण्डम् ॥ २७ ॥

तत इति ॥ कृताधिकाराः—मन्वादयः। दशावृत्त्या—सप्त पातालानि त्रयो लोका इति दश, तेष्वावृत्त्या—वृत्त्यभावेन। यद्वा, तावद्दशाया आवृत्त्या। परैषिणः—परस्थानैषिणः। अथवा त्रैलोक्ये ये कृताधिकारा मन्वाद्याः ते हृताधिकाराः भोगात्प्रक्षीणतद्देशभोग्यकर्माणः सन्तो महर्लोकं प्राप्य तस्मादपि तप्तात्तल्लोकवासिभिस्सह सशरीराः जनलोकं यान्ति। तेषां मध्ये ये परैषिणः—परं प्राप्तुमिच्छवस्ते दशवारावृत्त्यैव क्रमात्त-

केचित्पुरवराकाराः केचित्पर्वतसन्निभाः । कूटागारनिभाश्चान्ये केचित्स्थलनिभा घनाः ॥ ३६ ॥
महारावा महाकायाः पूरयन्ति नभःस्थलम् । वर्षन्तस्ते महासारास्तमग्निमतिभैरवम् ।
शमयन्त्यखिलं विप्र त्रैलोक्यान्तरधिष्ठितम् ॥ ३७ ॥
नष्टे चाग्नौ च सततं वर्षमाणा ह्यहर्निशम् । प्लावयन्ति जगत्सर्वमम्भोभिर्मुनिसत्तम ॥ ३८ ॥
धाराभिरतिमात्राभिः प्लावयित्वाऽखिलां भुवम् । भुवर्लोकं तथैवोर्ध्वं प्लावयन्ति हि ते द्विज ॥३९॥
अन्धकारीकृते लोके नष्टे स्थावरजङ्गमे । वर्षन्ति ते महामेघा वर्षाणामधिकं शतम् ॥ ४० ॥
एवं भवति कल्पान्ते समस्तं मुनिसत्तम । वासुदेवस्य माहात्म्यान्नित्यस्य परमात्मनः ॥ ४१ ॥

इति श्रीविष्णुपुराणे षष्ठेंशे तृतीयोऽध्यायः ॥ ३ ॥

## अथ चतुर्थोऽध्यायः

श्रीपराशरः—

सप्तर्षिस्थानमाक्रम्य स्थितेऽम्भसि महामुने । एकार्णवं भवत्येतत् त्रैलोक्यमखिलं ततः ॥ १ ॥
मुखनिश्वासजो विष्णोर्वायुस्ताञ्जलदांस्ततः । नाशयन्वाति मैत्रेय वर्षाणामपरं शतम् ॥ २ ॥
सर्वभूतमयोऽचिन्त्यो भगवान्भूतभावनः । अनादिरादिर्विश्वस्य पीत्वा वायुमशेषतः ॥ ३ ॥
एकार्णवे ततस्तस्मिञ्छेषशय्यागतः प्रभुः । ब्रह्मरूपधरश्शेते भगवानादिकृद्धरिः ॥ ४ ॥
जनलोकगतैस्सिद्धैस्सनकाद्यैरभिष्टुतः । ब्रह्मलोकगतैश्चैव चिन्त्यमानो मुमुक्षुभिः ॥ ५ ॥

---

परसत्यप्राप्तिद्वारा ततः परमीश्वरं विशन्ति । अन्ये त्रैलोक्यस्था जीवाः स्वात्मनि संलीयन्ते । यथाह वायुः— * पितृभिर्मनुभिश्चैव साध्यैस्सप्तर्षिभिस्तथा। यज्वानश्चैव येऽप्यन्ये तद्भक्ताश्चैव तैस्सह । महर्लोकं गमिष्यन्ति त्यक्त्वा त्रैलोक्यमीश्वराः । महर्लोकं परित्यज्य गणास्तेऽपि चतुर्दश । सशरीराश्च यान्त्यन्ये जनलोकं सहानुगैः । एवं देवास्सपितर ऋषयो मानवाश्च ये । मित्रैस्सहोर्ध्वं गच्छन्ति व्यावर्तन्ते च तैस्सह । जनलोकात्सुरास्सर्वे दश-कल्पान्पुनःपुनः । पर्यायकाले संप्राप्ते संभूतानि धनेष्विह । अवश्यभाविनाऽर्थेन संबध्यन्ते तथा तु ते । निवर्तन्ते तथा वृत्त्या तेषां सद्यो न निस्तरः । महर्जनं चापि जनात्तपं च ह्येकान्ततस्तानि भवन्ति सत्ये । मन्वन्तराणां परिवर्तनानि मुञ्चन्ति सत्येन तपोऽवराणि। तपोभियोगाद्विषयप्रहाणाद्विशन्ति तेऽपीश्वरमेव देवम् ॥ इति । * अथात्मनि महातेजास्सर्वमाधाय सर्वकृत् । ततस्स रात्रिं स्वपिति तमस्येकार्णवे जले ॥ इति । हृताधिकारा गच्छन्तीति च पाठः ॥ २८—४१ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये षष्ठेंशे तृतीयोऽध्यायः ॥ ३ ॥

## अथ चतुर्थोऽध्यायः

॥ १—३ ॥ एकार्णव इति ॥ ब्रह्मरूपधरः इति प्रथमांशे व्याख्यातम् । ननूत्तरत्र ब्रह्मादीनां शुभाश्रयत्वं निषिध्यते । तत्कथमत्र ब्रह्मरूपधरस्य मुमुक्षुभिश्चिन्त्यमानत्वम् ? उच्यते—धारणासिध्यर्थं तत्र शुभाश्रय उक्तः । निष्पन्नसमाधीनां तु जगद्रूपतया भगवदनुसन्धानमविरुद्धम् । यथा * मत्तस्सर्वमहं सर्वम्, * अहं मनुरभवम् * इत्यादि । किं च परशुरामकल्क्यादिवदनुप्रवेशावतारत्वाच्च न विरोधः ॥ ४, ५ ॥

आत्ममायामयीं दिव्यां योगनिद्रां समास्थितः। आत्मानं वासुदेवाख्यं चिन्तयन्मधुसूदनः ॥ ६ ॥
एष नैमित्तिको नाम मैत्रेयः प्रतिसञ्चरः। निमित्तं तत्र यच्छेते ब्रह्मरूपधरो हरिः ॥ ७ ॥
यदा जागर्ति सर्वात्मा स तदा चेष्टते जगत्। निमीलत्येतदखिलं मायाशय्यां गतेऽच्युते ॥ ८ ॥
पद्मयोनेर्दिनं यत्तु चतुर्युगसहस्रवत्। एकार्णवीकृते लोके तावती रात्रिरिष्यते ॥ ९ ॥
ततः प्रबुद्धो रात्र्यन्ते पुनस्सृष्टिं करोत्यजः। ब्रह्मस्वरूपधृग्विष्णुर्यथा ते कथितं पुरा ॥ १० ॥
इत्येष कल्पसंहारोऽवान्तरप्रलयो द्विज। नैमित्तिकस्ते कथितः प्राकृतं शृण्वतः परम् ॥ ११ ॥
अनावृष्ट्यादिसंपर्कात्कृते संक्षालने मुने। समस्तेष्वेव लोकेषु पातालेष्वखिलेषु च ॥ १२ ॥
महदादेर्विकारस्य विशेषान्तस्य संक्षये। कृष्णेच्छाकारिते तस्मिन्प्रवृत्ते प्रतिसञ्चरे ॥ १३ ॥
आपो ग्रसन्ति वै पूर्वं भूमेर्गन्धात्मकं गुणम्। आत्तगन्धा ततो भूमिः प्रलयत्वाय कल्पते ॥१४॥
प्रणष्टे गन्धतन्मात्रे भवत्युर्वी जलात्मिका। आपस्तदा प्रवृद्धास्तु वेगवत्यो महास्वनाः ॥ १५ ॥
सर्वमापूरयन्तीदं तिष्ठन्ति विचरन्ति च। सलिलेनोर्मिमालेन आलोकान्तात्समन्ततः ॥ १६ ॥
अपामपि गुणो यस्तु ज्योतिषा पीयते तु सः। नश्यन्त्यापस्ततस्ताश्च रसतन्मात्रसंक्षयात् ॥ १७ ॥
ततश्चापो हृतरसा ज्योतिष्ट्वं प्राप्नुवन्ति वै। अग्न्यवस्थे तु सलिले तेजसा सर्वतो वृते ॥ १८ ॥
स चाग्निस्सर्वतो व्याप्य चादत्ते तज्जलं तथा। सर्वमापूर्यतेऽर्चिभिस्तदा जगदिदं शनैः ॥ १९ ॥
अर्चिभिस्संवृते तस्मिंस्तिर्यगूर्ध्वमधस्तदा। ज्योतिषोऽपि परं रूपं वायुरत्ति प्रभाकरम् ॥ २० ॥
प्रलीने च ततस्तस्मिन्वायुभूतेऽखिलात्मनि। प्रनष्टे रूपतन्मात्रे हृतरूपो विभावसुः ॥ २१ ॥
प्रशाम्यति तदाऽज्योतिर्वायुर्दोधूयते महान्। निरालोके तथा लोके वाय्ववस्थे च तेजसि ॥२२॥

---

आत्मेति ॥ आत्ममायामयीं—मूलप्रकृत्यभिमानिदेवताम्। योगनिद्रां—योगरूपां निद्राम्। एतद्विवृणोति आत्मानं चिंतयन्निति ॥ ६ ॥

एष इति ॥ यत् निमित्तं तत्रेति। तत्र—ब्रह्मणो दिनान्ते ॥ ७–११ ॥

अनावृष्टीत्यादि ॥ समस्तेषु लोकेषु पातालेषु च संक्षालने—नाशे कृते ॥ १२ ॥

महदादेरिति ॥ तस्मिन्—प्राकृते प्रतिसंचरे महदादेर्विशेषान्तस्य विकारस्य संक्षये च प्रवृत्ते—प्रस्तुते ॥ १३ ॥ आप इत्यादि ॥ प्रलयत्वाय—प्रकृष्टो लयो यस्याः सा प्रलया, तद्भावाय ॥ १४ ॥

प्रणष्ट इति ॥ गन्धतन्मात्रे—अत्र तन्मात्रग्रहणं विशेषस्याप्युपलक्षणम् ॥ १५ ॥

सर्वमिति ॥ सलिलेन—ओघेन, आलोकान्तात्—लोकान्तं यावत्। आलोकस्तेजो वा ॥ १६–२१ ॥

प्रशाम्यतीति ॥ अज्योतिरिति पदच्छेदः। तच्च वायुविशेषणम्। ज्योतिर्विरोधी ॥ २२ ॥

ततस्तुमुलमासाद्य वायुस्संभवमात्मनः । ऊर्ध्वं चाधश्च तिर्यक्च दोधवीति दिशो दश ॥ २३ ॥
वायोरपि गुणं स्पर्शमाकाशो ग्रसते ततः । प्रशाम्यति ततो वायुः खं तु तिष्ठत्यनावृतम् ॥ २४ ॥
अरूपरसमस्पर्शमगन्धं न च मूर्तिमत् । सर्वमापूरयच्चैव सुमहत्तत्प्रकाशते ॥ २५ ॥
परिमण्डलं च सुषिरमाकाशं शब्दलक्षणम् । शब्दमात्रं तदाकाशं सर्वमावृत्य तिष्ठति ॥ २६ ॥
ततश्शब्दगुणं तस्य भूतादिर्ग्रसते पुनः । भूतेन्द्रियेषु युगपद्भूतादौ संस्थितेषु वै ॥ २७ ॥
अभिमानात्मको ह्येष भूतादिस्तामसस्स्मृतः । भूतादिं ग्रसते चापि महान्वै बुद्धिलक्षणः ॥ २८ ॥
उर्वी महांश्च जगतः प्रान्तेऽन्तर्बाह्यतस्तथा ॥ २९ ॥
एवं सप्त महाबुद्धे क्रमात्प्रकृतयस्स्मृताः । प्रत्याहारे तु तास्सर्वाः प्रविशन्ति परस्परम् ॥ ३० ॥
येनेदमावृतं सर्वमण्डमप्सु प्रलीयते । सप्तद्वीपसमुद्रान्तं सप्तलोकं सपर्वतम् ॥ ३१ ॥
उदकावरणं यत्तु ज्योतिषा पीयते तु तत् । ज्योतिर्वायौ लयं याति यात्याकाशे समीरणः ॥ ३२ ॥
आकाशं चैव भूतादिर्ग्रसते तं तथा महान् । महान्तमेभिस्सहितं प्रकृतिर्ग्रसते द्विज ॥ ३३ ॥
गुणसाम्यमनुद्रिक्तमन्यूनं च महामुने । प्रोच्यते प्रकृतिर्हेतुः प्रधानं कारणं परम् ॥ ३४ ॥
इत्येषा प्रकृतिस्सर्वा व्यक्ताव्यक्तस्वरूपिणी । व्यक्तस्वरूपमव्यक्ते तस्मान्मैत्रेय लीयते ॥ ३५ ॥
एकश्शुद्धोऽक्षरो नित्यस्सर्वव्यापी तथा पुमान् । सोऽप्यंशस्सर्वभूतस्य मैत्रेय परमात्मनः ॥ ३६ ॥

---

तत इति ॥ तुमुलं—सशब्दम् । आत्मनः संभवं—खम् ॥ २३, २४ ॥

अरूपमिति ॥ न च मूर्तिमत्—निरवयवम्, अहंकारावच्छिन्नतया परिमाणविशेषायोगात् ॥ २५, २६ ॥

तत इति ॥ भूतादिशब्देन त्रिविधाहंकारस्य ग्रहणम ॥ २७, २८ ॥

उर्वीत्यादि ॥ उर्वी महांश्च अन्तः—अण्डस्यान्तः स्थितस्य जगतः प्रान्ते—चरमकोटयां प्रथमकोटयां च, तथा बाह्यतः—अण्डाद्बहिरपि, तथा—पृथिव्येकप्रान्ते महानितरप्रान्ते ॥ २९ ॥

एवमिति ॥ अयमावरणलयविषयः श्लोकः । महदादयः सप्त क्रमादहंकारादीनां प्रकृतयः स्मृताः । ताः प्रत्याहारे तु परस्परं स्वस्वं कारणम् एवं—पूर्वोक्तलयक्रमेण प्रविशन्ति ॥ ३० ॥

एतदेव प्रपञ्चयति—येनेति ॥ एवंभूतमिदमण्डं येनावृतं तत्पृथिव्यावरणमप्सु लीयते ॥ ३१, ३४ ॥

इत्येषा प्रकृतिरिति ॥ व्यक्तावस्थमपि प्रकृतिद्रव्यमेव न द्रव्यान्तरम् । तस्माद्व्यक्तमव्यक्ते लीयते । तस्या इति पाठे स्वरूपमित्यनुषङ्गः ॥ ३५ ॥

एक इति ॥ एकः शुद्धः—प्रकृतिवदनेकत्वानर्हः वैचित्र्यानर्हश्च, अनेकत्वबोधकवैचित्र्यार्हसत्वादिगुणमयत्वाभावात् । अत एवाक्षरो नित्यश्च । तत्र हेतुमाह—सर्वव्यापीति । सूक्ष्मत्वात्प्रकृतेरपि व्यापनस्वभावः । सोऽपि पुमान् परमात्मनोंऽशः, यथा प्रकृतिः । अत्र लयस्थानत्वेन प्रकृतेः प्रकृतत्वात् प्रसङ्गात् पुरुषपरमात्मनोः प्रस्तावः ॥ ३६ ॥

न सन्ति यत्र सर्वेशे नामजात्यादिकल्पनाः । सत्तामात्रात्मके ज्ञेये ज्ञानात्मन्यात्मनः परे ॥ ३७ ॥
तद्ब्रह्म परमं धाम परमात्मा स चेश्वरः । स विष्णुस्सर्वमेवेदं यतो नावर्तते यतिः ॥ ३८ ॥
प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥ ३९ ॥
परमात्मा च सर्वेषामाधारः परमेश्वरः । विष्णुनामा स वेदेषु वेदान्तेषु च गीयते ॥ ४० ॥
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् । ताभ्यामुभाभ्यां पुरुषैस्सर्वमूर्तिस्स इज्यते ॥ ४१ ॥
ऋग्यजुस्सामभिर्मार्गैः प्रवृत्तैरिज्यते ह्यसौ । यज्ञेश्वरो यज्ञपुमान्पुरुषैः पुरुषोत्तमः ॥ ४२ ॥
ज्ञानात्मा ज्ञानयोगेन ज्ञानमूर्तिस्स चेज्यते । निवृत्ते योगिभिर्मार्गे विष्णुर्मुक्तिफलप्रदः ॥ ४३ ॥
ह्रस्वदीर्घप्लुतैर्यत्तु किंचिद्वस्त्वभिधीयते । यच्च वाचामविषयं तत्सर्वं विष्णुरव्ययः ॥ ४४ ॥
व्यक्तस्स एव चाव्यक्तस्स एव पुरुषोत्तमः । परमात्मा च विश्वात्मा विश्वरूपधरो हरिः ॥४५॥

---

परमाह—न सन्तीति ॥ नन्वंशत्ववचनात् पुरुषस्य परमात्मैकद्रव्यत्वं स्यात् । नैवम् । * समस्त-
यरहितम् * स सर्वभूतप्रकृतिं विकारान्, * विष्णुस्समस्तेन्द्रियदेहदेही, * क्षेत्रज्ञशक्तिः * सा वेष्टिता, * नित्यो
नित्यानाम् * पृथगात्मानं प्रेरितारं च मत्वा, * उत्तमः पुरुषस्त्वन्यः * इत्यादिभिस्तयोरत्यन्तवैलक्षण्यस्योक्तत्वात् ।
कथमंशत्वमित्याशंक्य * प्रकाशादिवन्नैवं परः * इत्यादिना सूत्रकारः प्रकाशजातिगुणदेहवदात्मनोऽपि शरीर-
भूतस्य तिष्ठतः परमात्मैकदेहत्वात् अंशत्वमुपपादितवान् । सत्तामात्रात्मक इति विकारनिषेधः । ज्ञेये—* नारायणं
महाज्ञेयम् * इत्यादिना । आत्मनः परे—* यस्यात्मा शरीरमिति शरीरत्वेनोक्तत्वात् बद्धान्मुक्काच्चात्मनोऽत्यन्त-
विलक्षणे । प्रकाशतद्वतोरिव जगद्ब्रह्मणोश्शरीरशरीरिभावस्स्वाभाविकः न जीववत्कर्मकृतः । * तत्पुरुषस्य विश्व-
माजानमग्रे * वेदात्मशक्तिं स्वाच्छरीरात् इत्यादेः ॥ ३७, ३८ ॥

प्रकृतिरित्यादि ॥ प्रकृतेः परमात्मनि लयः पुरुषे लयद्वारा, * अव्यक्तमक्षरे लीयते अक्षरं तमसि
लीयते तमः परे देव एकीभवति * इति श्रुतेः ॥ ३९ ॥

परमात्मेति ॥ विष्णुनामा स वेदेषु वेदान्तेषु च गीयते—विष्णुनामा स एव परमेश्वरो वेदेषु वेदान्तेषु
च सद्ब्रह्मादिशब्दैर्गीयते ॥ ४० ॥

प्रवृत्तमिति ॥ कथमिन्द्रादियागैरस्येज्यत्वमित्यत्राह सर्वमूर्तिरिति ॥ ४१, ४२ ॥

ज्ञानात्मेति ॥ ज्ञानात्मा—ज्ञानस्वरूपः । ज्ञानमूर्तिः—ज्ञानात्मिका मूर्तिर्विग्रहो यस्य । निवृत्ते मार्गे
ज्ञानयोगेन—ज्ञानयोगप्रधानेन कर्मणा इज्यते । मुक्तिफलप्रदः—निवृत्तिमार्गेणेष्ट एव ॥ ४३ ॥

ह्रस्वेति ॥ ह्रस्वादिशब्दैरभिधेयमचिद्वस्तु । वाचामविषयं चिद्वस्तु । तत्सर्वं विष्णुः—तदात्मकम् ॥ ४४ ॥

व्यक्तमिति ॥ व्यक्तादिसामानाधिकरण्यहेतुर्विश्वात्मा विश्वरूपधर इति । पुरुषः कार्यकारणरूपोभ-
यावस्थः । परमात्मा मुक्तः । व्यक्तं स एव चाव्यक्तमिति च पाठः ॥ ४५ ॥

गर्भजन्मजराज्ञानमृत्युनारकजं तथा । दुःखं सहस्रशो भेदैर्भिद्यते मुनिसत्तम ॥ ९ ॥
सुकुमारतनुर्गर्भे जन्तुर्बहुमलावृते । उल्बसंवेष्टितो भुग्नपृष्ठग्रीवास्थिसंहतिः ॥ १० ॥
अत्यम्लकटुतीक्ष्णोष्णलवणैर्मातृभोजनैः । अत्यन्ततापैरत्यर्थं वर्धमानातिवेदनः ॥ ११ ॥
प्रसारणाकुञ्चनादौ नाङ्गानां प्रभुरात्मनः । शकृन्मूत्रमहापङ्कशायी सर्वत्र पीडितः ॥ १२ ॥
निरुच्छ्वासः सचैतन्यस्स्मरञ्जन्मशतान्यथः । आस्ते गर्भेऽतिदुःखेन निजकर्मनिबन्धनः ॥ १३ ॥
जायमानः पुरीषासृङ्मूत्रशुक्लाविलाननः । प्राजापत्येन वातेन पीड्यमानास्थिबन्धनः ॥ १४ ॥
अधोमुखो वै क्रियते प्रबलैस्सूतिमारुतैः । क्लेशान्निष्क्रान्तिमाप्नोति जठरान्मातुरातुरः ॥ १५ ॥
मूर्च्छामवाप्य महतीं संस्पृष्टो बाह्यवायुना । विज्ञानभ्रंशमाप्नोति जातश्च मुनिसत्तम ॥ १६ ॥
कण्टकैरिव तुन्नाङ्गः क्रकचैरिव दारितः । पूतिव्रणान्निपतितो धरण्यां क्रिमिको यथा ॥ १७ ॥
कण्डूयनेऽपि चाशक्तः परिवर्तेऽप्यनीश्वरः । स्नानपानादिकाहारमप्याप्नोति परेच्छया ॥ १८ ॥
अशुचिप्रस्तरे सुप्तः कीटदंशादिभिस्तथा । भक्ष्यमाणोऽपि नैवैषां समर्थो विनिवारणे ॥ १९ ॥
जन्मदुःखान्यनेकानि जन्मनोऽनन्तराणि च । बालभावे यदाप्नोति ह्याधिभौतादिकानि च ॥२०॥
अज्ञानतमसाच्छन्नो मूढान्तःकरणो नरः । न जानाति कुतः कोऽहं क्वाहं गन्ता किमात्मनः॥२१॥
केन बन्धेन बद्धोऽहं कारणं किमकारणम् । किं कार्यं किमकार्यं वा किं वाच्यं किं च नोच्यते॥
को धर्मः कश्च वाऽधर्मः कस्मिन्वर्तेऽथ वा कथम् । किं कर्तव्यमकर्तव्यं किं वा किं गुणदोषवत्॥
एवं पशुसमैर्मूढैरज्ञानप्रभवं महत् । अवाप्यते नरैर्दुःखं शिश्नोदरपरायणैः ॥ २४ ॥

---

गर्भेति ॥ नारकजं—नरकजम् । * स्यान्नारकस्तु नरकः * इत्यमरः ॥ ९ ॥

सुकुमारेति ॥ उल्बम्—गर्भवेष्टनचर्म ॥ १०—१३ ॥

जायमान इति ॥ प्राजापत्येन—ब्रह्मणा नियुक्तेन गात्रसंकोचकेन, * तस्माज्ज्यायान् सगर्भः कनीयांसं सूतियोनिमजानानो हिनस्ति ब्रह्मणा हि स कृतः * इति श्रुतेः ॥ १४ ॥

अधोमुख इति ॥ सूतिमारुतैः—सूत्यर्थं गर्भप्रेरकैः ॥ १५, १६ ॥

कंटकैरिति ॥ तुन्नाङ्गः—व्यथितदेहः । पूतिव्रणात्—दुर्गन्धव्रणात्; योनेरित्यर्थः ॥ १७—१९ ॥

जन्मेति ॥ कण्डूयनेत्यादिनोक्तानि जन्मनोऽनन्तराणि । कीटदंशादिभिः बालभावे यदाप्नोति तदप्यनेकमिति शेषः ॥ २० ॥

कामान्धत्वादाधिक्याद्यौवने अज्ञानजं दुःखं विशिष्याह—अज्ञानेत्यादिना ॥ २१ ॥

केनेति ॥ कार्यं—कारणजन्यम् ॥ २२ ॥

को धर्म इति ॥ क वा—कस्मिन्वा वर्ते? तत्सर्वं च कथमिति न जानातीति पूर्वेणान्वयः ॥ २३, २४ ॥

व्यक्ताव्यक्तात्मिका तस्मिन्प्रकृतिस्संप्रलीयते । पुरुषश्चापि मैत्रेय व्यापिन्यव्याहतात्मनि ॥ ४६ ॥
द्विपरार्धात्मकः कालः कथितो यो मया तव । तदहस्तस्य मैत्रेय विष्णोरीशस्य कथ्यते ॥ ४७ ॥
व्यक्ते च प्रकृतौ लीने प्रकृत्यां पुरुषे तथा । तत्र स्थिते निशा चास्य तत्प्रमाणा महामुने ॥४८॥
नैवाहस्तस्य न निशा नित्यस्य परमात्मनः । उपचारस्तथाऽप्येष तस्येशस्य द्विजोच्यते ॥ ४९ ॥
इत्येष तव मैत्रेय कथितः प्राकृतो लयः । आत्यन्तिकमथो ब्रह्मन्निबोध प्रतिसञ्चरम् ॥ ५० ॥

इति श्रीविष्णुपुराणे षष्ठेंशे चतुर्थोऽध्यायः ॥ ४ ॥

## अथ पञ्चमोऽध्यायः

श्रीपराशरः—

आध्यात्मिकादि मैत्रेय ज्ञात्वा तापत्रयं बुधः ॥ उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम् ॥१॥
आध्यात्मिकोऽपि द्विविधश्शारीरो मानसस्तथा । शारीरो बहुभिर्भेदैर्भिद्यते श्रूयतां च सः ॥ २ ॥
शिरोरोगप्रतिश्यायज्वरशूलभगंदरैः । गुल्मार्शश्वयथुश्वासच्छर्द्यादिभिरनेकधा ॥ ३ ॥
तथाक्षिरोगातीसारकुष्ठाङ्गामयसंज्ञितैः । भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि ॥ ४ ॥
कामक्रोधभयद्वेषलोभमोहविषादजः । शोकासूयावमानेर्ष्यामात्सर्यादिमयस्तथा ॥ ५ ॥
मानसोऽपि द्विजश्रेष्ठ तापो भवति नैकधा । इत्येवमादिभि र्भेदैस्तापो ह्याध्यात्मिकः स्मृतः ॥ ६ ॥
मृगपक्षिमनुष्याद्यैः पिशाचोरगराक्षसैः । सरीसृपाद्यैश्च नृणां जायते चाधिभौतिकः ॥ ७ ॥
शीतवातोष्णवर्षाम्बुवैद्युतादिसमुद्भवः । तापो द्विजवरश्रेष्ठैः कथ्यते चाधिदैविकः ॥ ८ ॥

---

व्यक्तेत्यादि ॥ उक्तस्यैवानुवादो गुणान्तरविध्यर्थः । अव्याहतात्मनि-अविकृतस्वरूपे ॥ ४६, ४७ ॥

व्यक्त इति ॥ प्रकृत्यां पुरुषे लीनायामिति शेषः । तथा-तत्र स्थिते, तथाभूते पुरुषे तत्र परमात्मनि स्थिते । द्वयोर्युगपल्लयपक्षे ग्रंथस्सुगमः । व्यक्त इति पुनर्लयानुवादः परमात्मनो रात्र्यादिकल्पनाविध्यर्थः ॥ ४८ ॥

नैवेति ॥ नित्यस्य परमात्मनः इति । अत्र स्वरूपनित्यत्वस्य ब्रह्मादीनामपि साधारण्याद्विग्रहवत्वस्य नित्यत्वमभिप्रेतम्, * सदैकरूपरूपाय * इत्यादिभिर्विग्रहनित्यत्वस्य प्रतिपादनात् ॥ ४९, ५० ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये षष्ठेंशे चतुर्थोऽध्यायः ॥ ४ ॥

## अथ पञ्चमोऽध्यायः

॥ १, २ ॥ शिरोरोगेति ॥ प्रतिश्यायः—पीनसः । श्वयथुः—शोफः ॥ ३, ४ ॥

कामक्रोधेति ॥ द्वेषः—अप्रीतिः । मोहो मूर्च्छा । विषादः—सत्वसंक्षयः । शोकः—प्रियविरहजः । ईर्ष्या—परसंपदक्षमा ॥ ५–८ ॥

गर्भजन्मजराज्ञानमृत्युनारकजं तथा । दुःखं सहस्रशो भेदैर्भिद्यते मुनिसत्तम ॥ ९ ॥
सुकुमारतनुर्गर्भे जन्तुर्बहुमलावृते । उल्बसंवेष्टितो भुग्नपृष्ठग्रीवास्थिसंहतिः ॥ १० ॥
अत्यम्लकटुतीक्ष्णोष्णलवणैर्मातृभोजनैः । अत्यन्ततापैरत्यर्थं वर्धमानातिवेदनः ॥ ११ ॥
प्रसारणाकुञ्चनादौ नाङ्गानां प्रभुरात्मनः । शकृन्मूत्रमहापङ्कशायी सर्वत्र पीडितः ॥ १२ ॥
निरुच्छ्वासः सचैतन्यस्स्मरञ्जन्मशतान्यथः । आस्ते गर्भेऽतिदुःखेन निजकर्मनिबन्धनः ॥ १३ ॥
जायमानः पुरीषासृङ्मूत्रशुक्राविलाननः । प्राजापत्येन वातेन पीड्यमानास्थिबन्धनः ॥ १४ ॥
अधोमुखो वै क्रियते प्रबलैस्सूतिमारुतैः । क्लेशान्निष्क्रान्तिमाप्नोति जठरान्मातुरातुरः ॥ १५ ॥
मूर्च्छामवाप्य महतीं संस्पृष्टो बाह्यवायुना । विज्ञानभ्रंशमाप्नोति जातश्च मुनिसत्तम ॥ १६ ॥
कण्टकैरिव तुन्नाङ्गः क्रकचैरिव दारितः । पूतिव्रणान्निपतितो धरण्यां क्रिमिको यथा ॥ १७ ॥
कण्डूयनेऽपि चाशक्तः परिवर्तेऽप्यनीश्वरः । स्नानपानादिकाहारमप्याप्नोति परेच्छया ॥ १८ ॥
अशुचिप्रस्तरे सुप्तः कीटदंशादिभिस्तथा । भक्ष्यमाणोऽपि नैवैषां समर्थो विनिवारणे ॥ १९ ॥
जन्मदुःखान्यनेकानि जन्मनोऽनन्तराणि च । बालभावे यदाप्नोति ह्याधिभौतादिकानि च ॥२०॥
अज्ञानतमसाच्छन्नो मूढान्तःकरणो नरः । न जानाति कुतः कोऽहं क्वाहं गन्ता किमात्मनः॥२१॥
केन बन्धेन बद्धोऽहं कारणं किमकारणम् । किं कार्यं किमकार्यं वा किं वाच्यं किं च नोच्यते॥
को धर्मः कश्च वाऽधर्मः कस्मिन्वर्तेऽथ वा कथम् । किं कर्तव्यमकर्तव्यं किं वा किं गुणदोषवत्॥
एवं पशुसमैर्मूढैरज्ञानप्रभवं महत् । अवाप्यते नरैर्दुःखं शिश्नोदरपरायणैः ॥ २४ ॥

---

गर्भेति ॥ नारकजं—नरकजम् । * स्यान्नारकस्तु नरकः * इत्यमरः ॥ ९ ॥

सुकुमारेति ॥ उल्बम्—गर्भवेष्टनचर्म ॥ १०—१३ ॥

जायमान इति ॥ प्राजापत्येन—ब्रह्मणा नियुक्तेन गात्रसंकोचकेन, * तस्माज्ज्यायान् सगर्भः कनीयांसं सूतियोनिमजानानो हिनस्ति ब्रह्मणा हि स कृतः * इति श्रुतेः ॥ १४ ॥

अधोमुख इति ॥ सूतिमारुतैः—सूत्यर्थं गर्भप्रेरकैः ॥ १५, १६ ॥

कंटकैरिति ॥ तुन्नाङ्गः—व्यथितदेहः । पूतिव्रणात्—दुर्गन्धव्रणात्; योनेरित्यर्थः ॥ १७—१९ ॥

जन्मेति ॥ कण्डूयनेत्यादिनोक्तानि जन्मनोऽनन्तराणि । कीटदंशादिभिः बालभावे यदाप्नोति तदप्यनेकमिति शेषः ॥ २० ॥

कामान्धत्वादाधिक्याद्यौवने अज्ञानजं दुःखं विशिष्याह—अज्ञानेत्यादिना ॥ २१ ॥

केनेति ॥ कार्यं—कारणजन्यम् ॥ २२ ॥

को धर्म इति ॥ क्व वा—कस्मिन्वा वर्ते ? तत्सर्वं च कथमिति न जानातीति पूर्वेणान्वयः ॥ २३, २४ ॥

अज्ञानं तामसो भावः कार्यारम्भप्रवृत्तयः । अज्ञानिनां प्रवर्तन्ते कर्मलोपास्ततो द्विज ॥ २५ ॥
नरकं कर्मणां लोपात्फलमाहुर्मनीषिणः । तस्मादज्ञानिनां दुःखमिह चामुत्र चोत्तमम् ॥ २६ ॥
जराजर्जरदेहश्च शिथिलावयवः पुमान् । विचलच्छीर्णदशनो वलिस्नायुसिरावृतः ॥ २७ ॥
दूरप्रनष्टनयनो व्योमान्तर्गततारकः । नासाविवरनिर्यातलोमपुञ्जश्चलद्वपुः ॥ २८ ॥
प्रकटीभूतसर्वास्थिर्नतपृष्ठास्थिसंहतिः । उत्सन्नजठराग्नित्वादल्पाहारोऽल्पचेष्टितः ॥ २९ ॥
कृच्छ्राचङ्क्रमणोत्थानशयनासनचेष्टितः । मन्दीभवच्छ्रोत्रनेत्रस्स्रवल्लालाविलाननः ॥ ३० ॥
अनायत्तैस्समस्तैश्च करणैर्मरणोन्मुखः । तत्क्षणेऽप्यनुभूतानामस्मर्ताऽखिलवस्तुनाम् ॥ ३१ ॥
सकृदुच्चारिते वाक्ये समुद्भूतमहाश्रमः । श्वासकाससमुद्भूतमहायासप्रजागरः ॥ ३२ ॥
अन्येनोत्थाप्यतेऽन्येन तथा संवेश्यते जरी । भृत्यात्मपुत्रदाराणामवमानास्पदीकृतः ॥ ३३ ॥
प्रक्षीणाखिलशौचश्च विहाराहारसस्पृहः । हास्यः परिजनस्यापि निर्विण्णाशेषबान्धवः ॥ ३४ ॥
अनुभूतमिवान्यस्मिञ्जन्मन्यात्मविचेष्टितम् । संस्मरन्यौवने दीर्घं निश्वसत्यतितापितः ॥ ३५ ॥
एवमादीनि दुःखानि जरायामनुभूय वै । मरणे यानि दुःखानि प्राप्नोति शृणु तान्यपि ॥ ३६ ॥
श्लथद्ग्रीवांघ्रिहस्तोऽथ व्याप्तो वेपथुना भृशम् । मुहुर्ग्लानिः परवशो मुहुर्ज्ञानलवान्वितः ॥ ३७ ॥
हिरण्यधान्यतनयभार्याभृत्यगृहादिषु । एते कथं भविष्यन्तीत्यतीव ममताकुलः ॥ ३८ ॥
मर्मभिद्भिर्महारोगैः क्रकचैरिव दारुणैः । शरैरिवान्तकस्योग्रैश्छिद्यमानासुबन्धनः ॥ ३९ ॥
परिवर्तितताराक्षो हस्तपादं मुहुः क्षिपन् । संशुष्यमाणताल्वोष्ठपुटो घुरघुरायते ॥ ४० ॥
निरुद्धकण्ठो दोषौघैरुदानश्वासपीडितः । तापेन महता व्याप्तस्तृषा चार्त्तस्तथा क्षुधा ॥ ४१ ॥
क्लेशादुत्क्रान्तिमाप्नोति यमकिंकरपीडितः । ततश्च यातनादेहं क्लेशेन प्रतिपद्यते ॥ ४२ ॥
एतान्यन्यानि चोग्राणि दुःखानि मरणे नृणाम् । शृणुष्व नरके यानि प्राप्यन्ते पुरुषैर्मृतैः ॥ ४३ ॥
याम्यकिंकरपाशादिग्रहणं दण्डताडनम् । यमस्य दर्शनं चोग्रमुग्रमार्गविलोकनम् ॥ ४४ ॥

---

अज्ञानमिति ॥ अज्ञानं तामसो भावः—तमसो विकारः । तेनाज्ञानिनां तदनुगुणकार्यारम्भेषु प्रवृत्तयो भवन्ति । अतः कर्मलोपाः—वैदिककर्मलोपाः प्रवर्तन्ते ॥ २५, २६ ॥

जरेति ॥ वलिस्नायुशिरावृत इति । वलिस्त्वक्तरंगः । रक्तवहा नाडी सिरा । सैव बन्धनी स्नायुः ॥ २७ ॥

दूरेति ॥ दूरप्रनष्टनयनः—अधिकप्रनष्टनयनशक्तिः । व्योमान्तर्गततारकः—दृग्गोलकाकाशनिमग्नकनीनकः ॥ २८-३० ॥ अनायत्तैरिति ॥ अनायत्तैः—प्रवृत्त्यक्षमैः ॥ ३१ ॥ सकृदिति ॥ कासः—श्लेष्मा ॥ ३२-४० ॥

निरुद्धेति ॥ दोषः—वातादिः । उदानेति । उदानः कण्ठस्थवायुः, * उरः स्थानमुदानस्य नासानाभिगलांश्चरेत् । वाक् प्रवृत्तिप्रयत्नोर्जाबलवर्णस्मृतिक्रियः ॥ अस्य गलसंचारित्वात् । * उदानः कण्ठदेशस्थः इत्यमरः ॥ ४१—४४ ॥

भवालुकावह्वियन्त्रशस्त्राभिभीषणे । प्रत्येकं नरके याश्च यातना द्विज दुस्सहाः ॥ ४५ ॥
चैः पाट्यमानानां मूषायां चापि दह्यताम् । कुठारैः कृत्यमानानां भूमौ चापि निखन्यताम् ॥४६॥
ध्वारोप्यमाणानां व्याघ्रवक्त्रे प्रवेश्यताम् । गृध्रैस्संभक्ष्यमाणानां द्वीपिभिश्चोपभुज्यताम् ॥ ४७ ॥
थ्यतां तैलमध्ये च क्लिद्यतां क्षारकर्दमे । उच्चान्निपात्यमानानां क्षिप्यताम् क्षेपयन्त्रकैः ॥ ४८ ॥
के यानि दुःखानि पापहेतूद्भवानि वै । प्राप्यन्ते नारकैर्विप्र तेषां संख्या न विद्यते ॥ ४९ ॥
केवलं द्विजश्रेष्ठ नरके दुःखपद्धतिः । स्वर्गेऽपि पातभीतस्य क्षयिष्णोर्नास्ति निर्वृतिः ॥ ५० ॥
श्च गर्भे भवति जायते च पुनःपुनः । गर्भे विलीयते भूयो जायमानोऽस्तमेति वै ॥ ५१ ॥
तमात्रश्च म्रियते बालभावेऽथ यौवने । मध्यमं वा वयः प्राप्य वार्धके वाऽथ वा मृतिः ॥५२॥
वज्जीवति तावच्च दुःखैर्नानाविधैः प्लुतः । तन्तुकारणपक्ष्मौघैरास्ते कार्पासबीजवत् ॥ ५३ ॥
यनाशे तथोत्पत्तौ पालने च सदा नृणाम् । भवन्त्यनेकदुःखानि तथैवेष्टविपत्तिषु ॥ ५४ ॥
त्प्रीतिकरं पुंसां वस्तु मैत्रेय जायते । तदेव दुःखवृक्षस्य बीजत्वमुपगच्छति ॥ ५५ ॥
त्रपुत्रमित्रार्थगृहक्षेत्रधनादिकैः । क्रियते न तथा भूरि सुखं पुंसां यथाऽसुखम् ॥ ५६ ॥
। संसारदुःखार्कतापतापितचेतसाम् । विमुक्तिपादपच्छायामृते कुत्र सुखं नृणाम् ॥ ५७ ॥
स्य त्रिविधस्यापि दुःखजातस्य वै मम । गर्भजन्मजराद्येषु स्थानेषु प्रभविष्यतः ॥ ५८ ॥
स्तातिशयाह्लादसुखभावैकलक्षणा । भेषजं भगवत्प्राप्तिरेकान्तात्यन्तिकी मता ॥ ५९ ॥
ाच्चत्प्राप्तये यत्नः कर्तव्यः पण्डितैर्नरैः । तत्प्राप्तिहेतुर्ज्ञानं च कर्म चोक्तं महामुने ॥ ६० ॥

---

करंभेति ॥ भज्यमानकरंभसमवालुकाः करंभादिभीषणवस्तुभिर्युता यातनाः दुःसहाः ॥ ४५–५२ ॥

यावदिति ॥ तन्तुकारणेति । पक्ष्माणि–अंशवः ॥ ५३–५५ ॥

कलत्रेति ॥ असुखं–दुःखम् ॥ ५६–५८ ॥

निरस्तेति ॥ निरस्तातियशाह्लादसुखभावैकलक्षणा–सुखान्तरस्यातिशयो निरस्तो येन तन्निरस्तातिशयम् । रूपं सुखम् आह्लादसुखम् । आह्लादो मोहसंभेदः । सुखान्तरानुभवाक्षमत्वापादकोत्कर्षवत्सुखम् । भाव-सुखस्य दुःखनिवृत्तिरूपता व्यावर्त्यते । एवं निरतिशयाह्लादरूपसुखत्वमेव भगवत्प्राप्तिस्वरूपमित्युक्तम् । ा-दुःखासंभिन्ना आत्यन्तिकी-अन्तमतीत्य वर्तमाना नित्या । अत्र भगवच्छब्देन प्राप्यस्य हेयप्रत्यनीकाशेष ागुणात्मकत्वं वक्ष्यमाणं सूचयता तत्प्राप्तेर्निरस्तातिशयेत्याद्युच्यमानं वैशिष्ट्यं प्रतिपादितम् ॥ ५९ ॥

तस्मादिति ॥ यस्माद्भगवत्प्राप्तिरेव तापत्रयनिवृत्तिहेतुः तस्मात्तत्प्राप्तये यत्नः कर्तव्यः इति, * बुद्धे युक्तिमिति मोक्षोपायज्ञानमविधेयमिति वदतो निरस्यति ; प्राप्त्युपायं च दर्शयति–ज्ञानं च कर्म चेति । * अत्र साक्षात् प्राप्त्युपायः, कर्म तु तदङ्गत्वेन । न तु विपर्ययः, समुच्चयो वा । * ब्रह्मविद्यामधिष्ठाय, इयाज सुबहून् * इति हि वक्ष्यति ॥ ६० ॥

आगमोत्थं विवेकाच्च द्विधा ज्ञानं तदुच्यते । शब्दब्रह्मागममयं परं ब्रह्म विवेकजम् ॥ ६१ ॥
अन्धं तम इवाज्ञानं दीपवच्चेन्द्रियोद्भवम् । यथा सूर्यस्तथा ज्ञानं यद्विप्रर्षे विवेकजम् ॥ ६२ ॥
मनुरप्याह वेदार्थं स्मृत्वा यन्मुनिसत्तम । तदेतच्छ्रूयतामत्र संबन्धे गदतो मम ॥ ६३ ॥
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् । शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ ६४ ॥
द्वे वै विद्ये वेदितव्ये इति चाथर्वणी श्रुतिः । परया त्वक्षरप्राप्तिर्ऋग्वेदादिमयाऽपरा ॥ ६५ ॥
यत्तदव्यक्तमजरमचिन्त्यमजमव्ययम् । अनिर्देश्यमरूपं च पाणिपादाद्यसंयुतम् ॥ ६६ ॥
विभु सर्वगतं नित्यं भूतयोनिरकारणम् । व्याप्य व्याप्तं यतस्सर्वं यद्वै पश्यन्ति सूरयः ॥ ६७ ॥

---

आचारे कर्मस्वरूपमुक्तम् । ज्ञानं द्विधा विभज्य दर्शयति—आगमोत्थमिति ॥ विवेकजं—विवेकाद्योगाजन्यम् । तत्रागमोत्थं ज्ञानं शब्दब्रह्मेति, विवेकजं परब्रह्मेति च मन्वादिभिरुच्यत इत्याह—शब्दब्रह्मेति ॥ ६१ ॥

अथ ब्रह्मविषयमिदं ज्ञानद्वयं प्रशंसति, कुदृष्टिनिरसनाय तस्य ज्ञानद्वयस्य वैषम्यं च दर्शयति—अन्धं तम इति ॥ अज्ञानम् आगमश्रवणात्पूर्वम् । आत्मनामविद्याख्यकर्मतिरोहितस्वरूपत्वादात्मपरमात्मयाथात्म्यस्यापरिज्ञानम् । अन्यथाज्ञानं वा । तच्च ज्ञानविरोधित्वादन्धं तम इव । आगमजन्यं ज्ञानं श्रोत्रेन्द्रियगृहीतागमजन्यत्वादिन्द्रियोद्भवमित्युच्यते। तच्चाज्ञानतमोविरोधित्वाद्दीपवदिति । अतः आगमोत्थं ज्ञानं तमसि दीपवदन्यथाज्ञानसंवलितमल्पं च । अथ अज्ञानतन्मूलाविद्यारूपसर्वतमोनिरसनत्वात् आगमोत्थादपि विशदतमप्रत्यक्षरूपत्वाच्च विवेकजं ज्ञानं सूर्यवदित्युच्यते ॥ ६२ ॥

उक्तेऽर्थे मनुवचनं प्रमाणयति । मनुरपीति ॥ अत्र संबन्धे—मोक्षतत्साधनसंबन्धे ॥ ६३ ॥

विद्यातः पुरुषार्थो न कर्मणा इति मनुवचनमेवोदाहरति—द्वे इति ॥ परं च यत्, ब्रह्मेति शेषः। शब्दब्रह्मणि—शास्त्रजन्यज्ञाने । निष्णातः—निपुणः । परं ब्रह्म—प्रत्यक्षरूपं विवेकजं ज्ञानं लभते ॥ ६४ ॥

मनुवचनमूलश्रुतिमुदाहरति—द्वे विद्ये इति ॥ विद्ये-आगमविवेकोत्थे । परया—विवेकोत्थया । अक्षरस्य—परब्रह्मणः प्राप्तिः * यया तदक्षरमधिगम्यते * इति श्रुतेः । अनेन वाक्यार्थज्ञानात्कर्मणो वा मोक्षं वदन्तो निरस्ताः । वाक्यार्थज्ञानान्मोक्षं वदतः * तच्छास्त्रैर्विप्रतिषिद्धं बुद्धे चेत् क्षेमप्रापणमिहैव न दुःखमुपलभेत * इति सूत्रविरोधः, प्रत्यक्षविरोधश्च । अत्र प्रकरणे स्वोक्तस्यार्थस्य वेदविदग्रेसरमनुवचनप्रामाणिकादागमविवेकजपदयोरेकायानायुक्तोऽर्थो न विवक्षित इति वेदितव्यम् ॥ ६५ ॥

अथ परविद्योपास्यस्य प्राप्यभूतस्य ब्रह्मणस्स्वरूपमाह—यत्तदिति ॥ यथाह श्रुतिः * यत्तदद्रेश्यम् * इत्यादिना । श्रुतिव्यतिरिक्तैः प्रमाणैः न व्यज्यत इति अव्यक्तम्, * वेदाहमेतम् * नावेदविन्मनुते तं बृहन्तम् * इति । अजरमजमित्यादिना षड्भावविकारराहित्यमुक्तम् । अचिन्त्यमनिर्देश्यमिति वाङ्मानसागोचरत्वम् । अरूपं—देवमनुष्यादिरूपरहितम्; अन्यथा रूपवत्त्वश्रुत्यादिविरोधात् ॥ ६६ ॥

विभ्विति ॥ विभु—सर्वगतं विततं व्यापि । विभुत्वं नियन्तृत्वं वा । अकारणं—स्वयं कारणरहितम् । व्याप्यव्यापकरूपेणावस्थितम् सर्वं जगद्यतः । भूतयोनिरिति जीवाभिप्रायम् । अत्र परविद्याविषयस्याक्षरस्य भूतयोनित्वविभुत्वादिविशेषणैः परविद्या निर्गुणब्रह्मविषयेत्येतन्निरस्तं, * यद्वै पश्यन्ति * सदा पश्यन्ति * इति श्रुतेः ॥६७

तद्ब्रह्म तत्परं धाम तद्ध्येयं मोक्षकांक्षिभिः । श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम् ॥ ६८ ॥
तदेव भगवद्वाच्यं स्वरूपं परमात्मनः । वाचको भगवच्छब्दस्तस्याद्यस्याक्षयात्मनः ॥ ६९ ॥
एवं निगदितार्थस्य तत्तत्त्वं तस्य तत्त्वतः । ज्ञायते येन तज्ज्ञानं परमन्यत्त्रयीमयम् ॥ ७० ॥
अशब्दगोचरस्यापि तस्य वै ब्रह्मणो द्विज । पूजायां भगवच्छब्दः क्रियते ह्युपचारतः ॥ ७१ ॥
शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते । मैत्रेय भगवच्छब्दस्सर्वकारणकारणे ॥ ७२ ॥
संभर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः । नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ॥ ७३ ॥

---

तद्ब्रह्मेति ॥ धाम—तेजोमयं * तद्विष्णोः परमं पदम् * इति श्रुतिवाक्योदितं सूक्ष्मं तत्परं ब्रह्म मोक्षकाङ्क्षिभिर्ध्येयम् ॥ ६८ ॥

उक्तगुणविशिष्टं तदेव ब्रह्म भगवच्छब्दवाच्यमित्याह—तदेवेति ॥ इदं च वचनं * ध्यानक्रियाभ्यां भगवान् * सर्वव्यापी च भगवान् * नारायणो भगवान् प्रजापतिः, * वासुदेवाय धीमहि * ओमित्यात्मानं युञ्जीत * नमो रुचाय ब्राह्मये इत्यादिवेदान्तसारोद्धाररूपं * द्वादशाक्षरचिन्तका इति पूर्वमुक्तं मन्त्रविशेषमभिप्रेत्याभिहितम् । सकलहेयप्रत्यनीककल्याणगुणात्मकं जगत्कारणं परविद्याधिगम्यमुक्तं परब्रह्मैव भगवच्छब्दवाच्यं नान्यदित्यवधारयति तदेवेति । मनुरपि * ततस्स्वयंभूर्भगवान् * इत्यादिना जगत्कारणमेव भगवच्छब्दवाच्यमित्याह । अथ ब्रह्मणस्स्वरूपगुणविभवैरनन्तस्य याथात्म्यवचनसमर्थोऽयं शब्द इत्याह—वाचक इति ॥ ६९ ॥

एवमिति ॥ एवं भगवच्छब्देनाभिहितनिगदितभूतयोनित्वाद्यर्थस्य तस्य—ब्रह्मणः तत्त्वं-स्वरूपं येन—विवेकजज्ञानेन तत्त्वतो यद् ज्ञायते-दृश्यते, तत्पुष्कलसाक्षात्काररूपं परम् । अन्यदुद्देशतः शास्त्रजं परोक्षरूपमपरमित्युपसंहरति ॥ ७० ॥

सर्वकारणे परे ब्रह्मणि भगवच्छब्दो मुख्यः, अन्यत्रोपचारत इति वक्ष्यन् मुक्ते तावदुपचारत इत्याह—अशब्देति ॥ मुक्तो ह्यशब्दगोचरः, * नामरूपाद्विमुक्तः * न शब्दगोचरे यस्य, * यच्च वाचामविषये, * अगोचरं वचसाम् * (इत्यादिभ्यः) उपनिषत्प्रसिद्ध्या । तस्येति मुक्तस्य परामर्शः । ब्रह्मत्वं च ब्रह्मसाम्यात् । पूजायां निमित्तभूतायां तस्योपचारतो भगवच्छब्दः क्रियते । अस्य श्लोकस्य भगवद्विषयत्वे व्याहतिस्स्यात् । तत्र * शब्दोऽयं नोपचारेण त्वन्यत्र ह्युपचारतः * इत्यनन्तरं वक्ष्यमाणत्वात्, तदेव भगवद्वाच्यमित्यादेरुक्तत्वाच्च ॥७१॥

परमकारणे परे ब्रह्मणि शब्दोऽयमनुपचारतः शब्द्यत इत्याह—शुद्ध इति ॥ शुद्धिः—मलप्रत्यनीकत्वम् । महाविभूत्याख्ये—महाविभूतिसंज्ञे । महाविभूतिर्हि ब्रह्मणः ॥ ७२ ॥

अन्यत्र मुख्यत्वासंभवज्ञापनाय भगवच्छब्दं निर्वक्ति—संभर्तेति ॥ संभरणं—प्रकृतेः कार्ययोग्यताकरणम् । भर्ता—स्वामी, पोषकश्च । नेता—गोप्ता । गमयिता—आत्मानं गमयिता, संहर्तेत्यर्थः । स्रष्टा—आत्मानमुद्गमयिता । एवं गुपेः गुप्त्यर्थत्वात् गत्यर्थत्वात् गमेश्च गकारो निरुक्तः । ज्ञानार्थत्वाद्वा गमेर्गकारः । * तदैक्षतेति संकल्परूपेक्षणस्य कर्तेत्यर्थः । गमयिता ज्ञापयितेति वा गकारः । तथा हौकायननिरुक्तं * भ इत्येतस्माद्भकाराद्भर्ता संभर्तेति द्वौ धात्वर्थौ गम्येते । ग इति पुनरस्माद्गशब्दाद्गमयिता नेता स्रष्टा परत्र गमनं वा । पुनरव्यय इत्यतो गः । सोऽसौ भर्तृसंभर्तृनेतृगमनवानेतद्वान् भगवानित्येव भवतीति । तथाऽथर्वशिरसि—* यस्सर्वान्भगवानीक्षत्यात्मज्ञानान्निरीक्षायति योगं गमयति तस्मादुच्यते स भगवान् * इति ॥ ७३ ॥

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ ७४ ॥
वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि । स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः ॥ ७५ ॥
एवमेष महाञ्छब्दो मैत्रेय भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥ ७६ ॥
तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः । शब्दोऽयं नोपचारेण त्वन्यत्र ह्युपचारतः ॥ ७७ ॥
उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥७८॥
ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥ ७९ ॥
सर्वाणि तत्र भूतानि वसन्ति परमात्मनि । भूतेषु च स सर्वात्मा वासुदेवस्ततः स्मृतः ॥ ८० ॥
खांडिक्यजनकायाह पृष्टः केशिध्वजः पुरा । नामव्याख्यामनन्तस्य वासुदेवस्य तत्त्वतः ॥ ८१ ॥
भूतेषु वसते सोऽन्तर्वसन्त्यत्र च तानि यत् । धाता विधाता जगतां वासुदेवस्ततः प्रभुः ॥ ८२ ॥

---

अथ समुदायनिरुक्तिः—ऐश्वर्यस्येति ॥ समग्रपदं सर्वत्र संबध्यते । भगः षाड्गुण्यं, तद्वान् भगवानित्यभिप्रायः ॥ ७४ ॥

वकारार्थमाह—वसन्तीति ॥ भूतात्मनि—भूतशरीरे, अखिलात्मनि—अखिलस्यात्मभूते भूतानि वसन्ति तत्रेति जगदाधारत्वमुक्तम्, * सदायतनाः * इत्यादि श्रुतेः । स च भूतेष्वित्यन्तरात्मत्वम् * ऐतदात्म्यमिदं सर्वम् * इति श्रुतेः । अतो वः । मतुपो वसतेश्च तन्त्रेणायं वकारः ॥ ७५ ॥

एवमिति ॥ एवमुक्तप्रकारेणावयवार्थयोगादयं शब्दो वासुदेवस्यैव ॥ ७६ ॥

रूढिशक्त्याऽपि तस्यैवेत्याह—तत्रेति ॥ तत्र * भगवान् इति शब्दो वृद्धैः प्रयुज्यते पूज्ये * इति नैघण्टुकप्रसिद्ध्या अयं शब्दो लोके पूज्यपदार्थस्योक्तौ या परिभाषा तया समन्वितोऽपि विष्णौ नियतः नारायणविष्ण्वादिशब्दवत् । नोपचारेण—तस्य सर्वकारणतया सर्वगुणपरिपूर्णतया परमपूज्यतया चायं शब्दो नौपचारिकः । अन्यत्र—जीवविशेषे त्वापेक्षिकपूज्यत्वादमुख्यः ॥ ७७ ॥

अन्यत्रोपचारतः प्रवृत्तौ ज्ञानविशेषो निमित्तमित्याह—उत्पत्तिमिति ॥ ७८ ॥

अथ भगवतोऽन्वयविशेषणभूतानां सत्यकामत्वादीनां गुणान्तराणामुक्तेषु गुणेष्वन्तर्भावं व्यतिरेकविशेषणानां सत्त्वादिगुणानां भगवानित्यत्र नकारवाच्यत्वं चाह—ज्ञानशक्तीति ॥ अशेषतः—अशेषैः स्वविस्तारभूतैर्गुणान्तरैस्सह । नकारस्यार्थमाह—विना हेयैरिति । गुणादिभिः—त्रिगुणतत्कार्यक्लेशादिभिः । निखिलहेयप्रत्यनीकत्वं समस्तकल्याणगुणात्मकत्वं च उभयलिंगं कृत्स्नं भगवच्छब्दवाच्यमित्यनुसंधेयमिति । एवं भगवत्प्राप्तिसाधनपरविद्यांगत्वेनोक्तश्रीमद्द्वादशाक्षरमन्त्रे भगवच्छब्दो निरुक्तः । वेदशाखाभेदप्रकरणे प्रणवार्थ उक्तः ॥ ७९ ॥

अथ वासुदेवशब्दार्थमाह—सर्वाणीति ॥ भूतानि—जीवाः * वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः । वासुदेवस्ततो ज्ञेयः * इत्युद्योगपर्वणि, * वसनाद्देवनाच्चैव वासुदेवं ततो विदुः * इति मोक्षधर्मे । देवनाद्द्योतनाद्देति वा देवः । वासुश्चासौ देवश्च वासुदेवः । वसन्त्यस्मिन् देवे भूतानीत्येकायननिरुक्तम् ॥ ८० ॥

उक्तमेव वासुदेवशब्दनिर्वचनं ज्ञाननिष्ठैर्जनकादिभिरपि परिगृहीतमित्याह—खाण्डिक्येति ॥ ८१ ॥

भूतेष्विति ॥ नैरुक्तं देवशब्दनिर्वचनं दर्शयति—धातेति । दधातेर्वकारः । निरुक्तस्यांशद्वयस्यानुवादः वासुदेवस्तत इति ॥ ८२ ॥

स सर्वभूतप्रकृतिं विकारान्गुणादिदोषांश्च मुने व्यतीतः ।
अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले ॥ ८३ ॥
समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशावृतभूतवर्गः ।
इच्छागृहीताभिमतोरुदेहस्संसाधिताशेषजगद्धितो यः ॥ ८४ ॥
तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः ।
परः पराणां सकला न यत्र क्लेशादयस्सन्ति परावरेशे ॥ ८५ ॥
स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः ।
सर्वेश्वरस्सर्वदृक् सर्वविच्च समस्तशक्तिः परमेश्वराख्यः ॥ ८६ ॥
संज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम् ।
संदृश्यते वाप्यवगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् ॥ ८७ ॥

इति श्रीविष्णुपुराणे षष्ठेंऽशे पञ्चमोऽध्यायः ॥ ५ ॥

---

अथ विद्याद्वयविषयभूतद्वादशाक्षरप्रतिपाद्यतया दर्शितमर्थं बुद्धिस्थैर्म्ने प्रपञ्चयति—स सर्वेत्यादिचतुर्भिः ॥
अथ विद्याद्वयविषयभूतद्वादशाक्षरप्रतिपाद्यतया दर्शितमर्थं बुद्धिस्थैर्म्ने प्रपञ्चयति—स सर्वेत्यादिचतुर्भिः ॥ अदिशब्देन तत्कार्यदुःखा-
सर्वेति ॥ सर्वभूतप्रकृतिः—अव्यक्तम् । विकाराः—महदाद्याः । गुणाः—सत्त्वाद्याः । अदिशब्देन तत्कार्यदुःखा-
ादय उक्ताः । व्यतीतः—तेभ्यो विलक्षणः, कर्मकृततत्संबन्धरहितश्च । अनेनाचितस्तत्संसृष्टाच्चेतनाच्च
ावृत्तिः ॥ अतीतसर्वावरण इति मुक्तात् । मुक्तो हि संसारदशायामविद्यावृतः । अखिलात्मेति नित्यात्
ावृत्तिः । अखिलात्मत्वमुपपादयति—तेनास्तृतमिति । यत्सदसद्वस्तुजातम् आस्तृतम्—अन्तर्बहिश्च व्याप्तम् ॥८३॥
समस्तेति ॥ अत्रात्मशब्दः स्वभाववचनः । निजेच्छया गृहीताभिमतपूज्यदेहः । यद्वा, जगद्धितायाव-
रकालेष्विच्छया गृहीततत्तत्कार्योचितानेकदेहः ॥ ८४ ॥
तेजोबलेति ॥ भगवानितिशब्दस्थनकारस्यार्थमपि विस्तरेणाह—न यत्रेति । क्लेशाः—अविद्यास्मितादयः ।
ादिशब्देन कर्मविपाकाशया उक्ताः । आशयो वासना ॥ ८५ ॥
स इति ॥ व्यूहविभवादिरूपेण च व्यष्टिसमष्टिरूपः । पररूपेणाव्यक्तरूपः । व्यूहादिरूपेण व्यक्त-
रूपः । एवं सर्वावस्थचिदचित्स्वरूपत्वेऽपि सर्वेश्वरः न तु परवशः । सर्वदृक्—* तच्चक्षुर्देवहितम् * चक्षुर्देवा-
ामुत, * त्रैलोक्यस्यैकचक्षुषः * इतिवत् । यद्वा * यस्सर्वज्ञस्सर्वविदितिवत्, सर्वं वेत्ति, तच्च सर्वप्रकारेण
त्तीति । अथवा कारणमन्तरेण करणैश्च जानातीति । * विद्लृ लाभे * इत्यतो वेत्तीति वा । समस्तशक्तिः—
* स परस्सर्वशक्तीनाम् * समस्तास्शक्तयश्चैता इति ॥ ८६ ॥
अथ परविद्यां प्रशंसन्नुपसंहरति—संज्ञायत इति ॥ स ज्ञायते येनेति च पाठः । स इत्युक्तलक्षणः
पुरुषोत्तमः परामृश्यते । तदिति हेतौ । यस्माद्भगवत्प्राप्तिरेव तापत्रयस्य भेषजं तस्मात्स येन—आगमोत्थेन ज्ञानेन
ज्ञायते—येन विवेकजेन संदृश्यते, येन च दर्शनसमानाकारेण भक्तिरूपापन्नेन गम्यते; तदेव ज्ञानम् । अज्ञान-
मतोऽन्यत्—भगवद्व्यतिरिक्तविषयमज्ञानम्—अविद्यारूपं बन्धकमित्यर्थः । अस्तदोषमिति विकारास्पदाचिद्विषयाद्व्या-
वृत्तिः । शुद्धमिति तत्संसृष्टचेतनविषयात् । परं निर्मलमिति हेयार्हमुक्तविषयात्, एकरूपमिति सूरिविषयात्,
तेषामनेकरूपत्वात् । * तमेव विद्वान्, * तमेव विदित्वा....नान्यः पंथा इत्यादिश्रुतिभिरित्थमुक्तमिति ॥ ८७ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये षष्ठेंऽशे पञ्चमोऽध्यायः ॥ ५ ॥

## अथ षष्ठोऽध्यायः

श्रीपराशरः—

स्वाध्यायसंयमाभ्यां स दृश्यते पुरुषोत्तमः। तत्प्राप्तिकारणं ब्रह्म तदेतदिति पठ्यते ॥ १ ॥

स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमावसेत्। स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशते ॥ २ ॥

तदीक्षणाय स्वाध्यायश्चक्षुर्योगस्तथा परम्। न मांसचक्षुषा द्रष्टुं ब्रह्मभूतस्स शक्यते ॥ ३ ॥

मैत्रेयः—

भगवंस्तमहं योगं ज्ञातुमिच्छामि तं वद। ज्ञाते यत्राखिलाधारं पश्येयं परमेश्वरम् ॥ ४ ॥

श्रीपराशरः—

यथा केशिध्वजः प्राह खाण्डिक्याय महात्मने। जनकाय पुरा योगं तमहं कथयामि ते ॥ ५ ॥

मैत्रेयः—

खाण्डिक्यः कोऽभवद्ब्रह्मन्को वा केशिध्वजः कृती। कथं तयोश्च संवादो योगसंबन्धकारणात् ॥ ६ ॥

श्रीपराशरः—

धर्मध्वजो वै जनकस्तस्य पुत्रोऽमितध्वजः। कृतध्वजश्च नाम्नाऽऽसीत्सदाऽऽध्यात्मरतिर्नृपः ॥ ७ ॥

कृतध्वजस्य पुत्रोऽभूत्ख्यातः केशिध्वजो नृपः। पुत्रोऽमितध्वजस्यापि खाण्डिक्यजनकोऽभवत् ॥

कर्ममार्गेण खाण्डिक्यः पृथिव्यामभवत्पतिः। केशिध्वजोऽप्यतीवासीदात्मविद्याविशारदः ॥ ९ ॥

तावुभावपि चैवास्तां विजिगीषू परस्परम्। केशिध्वजेन खाण्डिक्यस्स्वराज्यादवरोपितः ॥ १० ॥

पुरोधसा मन्त्रिभिश्च समवेतोऽल्पसाधनः। राज्यान्निराकृतस्सोऽथ दुर्गारण्यचरोऽभवत् ॥ ११ ॥

---

## अथ षष्ठोऽध्यायः

एवं तावदुपास्यभूतं भगवत्स्वरूपमुक्तम्। इदानीमुपासनपर्यायं सांगोपाङ्गं वक्तुमारभते—स्वाध्यायेति ॥ स्वाध्यायशब्देन वेदान्तद्वादशाक्षरप्रणवादीनां तत्त्वपराणां मीमांसासहितानां वाक्यानां निर्देशः। स इत्युक्तगुणविभूतिविग्रहादिविशिष्टः पुरुषोत्तमः परामृश्यते। स्वाध्यायसंयमजनितं ब्रह्मविषयत्वाद्ब्रह्मशब्दवाच्यम्, तदेतज्ज्ञानं न केवलं दर्शनसाधनम्, अपि तु प्राप्तिसाधनं चोच्यते इत्याह—तत्प्राप्तीति। तत्प्राप्तिकारणं तदेतज्ज्ञानं ब्रह्मेति पठ्यत इति वा योजना ॥ १ ॥

स्वाध्यायादिति ॥ समीमांसात्स्वाध्यायात् अर्थं परिच्छिद्य योगमासीत। गुणत्रयमयत्वेन मनसः प्रमादसंभवादन्ययोपासनपरिहाराय योगात्स्वाध्यायमावसेत्। योगात्स्वाध्यायमामनेदिति च पाठः। यथा बालो मातृकापत्रिकां वीक्ष्य लिपिविन्यासमभ्यस्यति तद्वत्। कपिलानुसारिभिर्हि केवलयोगावलम्बनाज्जगतः प्रधानपरमाण्वादिकारणत्वनिरीश्वरत्वादिकं दृष्टम्। वेदानुसारिभिस्तु ब्रह्मकारणत्वब्रह्मात्मकत्वादिर्योगो दृष्टः। संपत्तिः-पौष्कल्यम् ॥ २ ॥

एतदुपपादयति—तदीक्षणाय स्वाध्यायश्चक्षुरिति ॥ योगः परं चक्षुः—प्रधानं चक्षुः, अपरोक्षरूपत्वात् ॥ ३–५ ॥ खाण्डिक्य इति ॥ योगसंबन्धकारणात्—योगेन संबन्धो योगसंबन्धः। कृती—पंडितः ॥ ६–११ ॥

इयाज सोऽपि सुबहून्यज्ञाञ्ज्ञानव्यपाश्रयः । ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया ॥ १२ ॥
एकदा वर्तमानस्य (यो)यागे योगविदां वर । धर्मधेनुं जघानोग्रश्शार्दूलो विजने वने ॥ १३ ॥
ततो राजा हतां श्रुत्वा धेनुं व्याघ्रेण चर्त्विजः । प्रायश्चित्तं स पप्रच्छ किमत्रेति विधीयताम् ॥ १४ ॥
तेऽप्यूचुर्न वयं विद्मः कशेरुः पृच्छ्यतामिति । कशेरुरपि तेनोक्तस्तथैव प्राह भार्गवम् ॥ १५ ॥
शुनकं पृच्छ राजेन्द्र नाहं वेद्मि स वेत्स्यति । स गत्वा तमपृच्छच्च सोऽप्याह शृणु यन्मुने ॥१६॥
न कशेरुर्न चैवाहं न चैकस्सांप्रतं भुवि । वेत्त्येक एव त्वच्छत्रुः खाण्डिक्यो यो जितस्त्वया ॥ १७ ॥
स चाह तं व्रजाम्येष प्रष्टुमात्मरिपुं मुने । प्राप्त एव महायज्ञो यदि मां स हनिष्यति ॥ १८ ॥
प्रायश्चित्तमशेषेण स चेत्पृष्टो वदिष्यति । ततश्चाविकलो योगो मुनिश्रेष्ठ भविष्यति ॥ १९ ॥

श्रीपराशरः—

इत्युक्त्वा रथमारुह्य कृष्णाजिनधरो नृपः । वनं जगाम यत्रास्ते स खाण्डिक्यो महामतिः ॥२०॥
तमापतन्तमालोक्य खाण्डिक्यो रिपुमात्मनः । प्रोवाच क्रोधताम्राक्षस्समारोपितकार्मुकः ॥ २१ ॥

खाण्डिक्यः—

कृष्णाजिनं त्वं कवचमाबध्यास्मान्हनिष्यसि । कृष्णाजिनधरे वेत्सि न मयि प्रहरिष्यति ॥ २२ ॥
मृगाणां वद पृष्ठेषु मूढ कृष्णाजिनं न किम् । येषां मया त्वया चोग्राः प्रहिताश्शितसायकाः ॥ २३ ॥
स त्वामहं हनिष्यामि न मे जीवन्विमोक्ष्यसे । आतताय्यसि दुर्बुद्धे मम राज्यहरो रिपुः ॥ २४ ॥

केशिध्वज उवाच—

खाण्डिक्य संशयं प्रष्टुं भवन्तमहमागतः । न त्वां हन्तुं विचार्यैतत्कोपं बाणं विमुञ्च वा ॥ २५ ॥

श्रीपराशरः—

ततस्स मन्त्रिभि स्सार्धमेकान्ते सपुरोहितः । मन्त्रयामास खाण्डिक्यस्सर्वैरेव महामतिः ॥ २६ ॥
तमूचुर्मन्त्रिणो वध्यो रिपुरेष वशं गतः । हतेऽस्मिन्पृथिवी सर्वा तव वश्या भविष्यति ॥ २७ ॥
खाण्डिक्यश्चाह तान्सर्वानेवमेतन्न संशयः । हतेऽस्मिन्पृथिवी सर्वा मम वश्या भविष्यति ॥ २८ ॥

---

* स्वाध्यायप्रवचने एव * इति श्रुतेः स्वाध्यायस्य विद्याङ्गत्वमुक्तम् । इदानीं यज्ञादिश्रुतेर्यज्ञाङ्गत्व-मुच्यते–इयाजेति ॥ सोऽपि–केशिध्वजः ज्ञानव्यपाश्रयः–आत्मज्ञानवान् ब्रह्मविद्यामधिष्ठाय–ब्रह्मोपासननिष्ठ एव इयाज । किमर्थमित्यत आह–तर्तुमिति । मृत्युः–परविद्योत्पत्तिविरोधि प्राचीनकर्म । अविद्यया–कर्मणा * अविद्या कर्मसंज्ञेति वक्ष्यति ॥ १२ ॥

एकदेति ॥ धर्मः—प्रवर्ग्यहविः तद्दोग्ध्रीति धर्मधेनुः ॥ १३–१७ ॥

स चाहेति ॥ प्राप्त एवेति । धर्मार्थमुद्युक्तस्यान्तरा विपत्तौ सत्यामपि तत्फलसिद्धेः शास्त्रसिद्धत्वात् ॥ १८–२१ ॥ कृष्णाजिनमिति ॥ मयि न प्रहरिष्यतीति वेत्सीत्यन्वयः । अत्र इतिशब्दोऽध्याहार्यः ॥ २२, २३ ॥

परलोकजयस्तस्य पृथिवी सकला मम। न हन्मि चेल्लोकजयो मम तस्य वसुंधरा ॥ २९ ॥
नाऽहं मन्ये लोकजयादधिका स्याद्वसुंधरा। परलोकजयोऽनन्तस्स्वल्पकालो महीजयः ॥ ३० ॥
तस्मान्नैनं हनिष्यामि यत्पृच्छति वदामि तत् ॥ ३१ ॥

श्रीपराशरः—

ततस्तमभ्युपेत्याह खाण्डिक्यजनको रिपुम्। प्रष्टव्यं यत्त्वया सर्वं तत्पृच्छस्व वदाम्यहम् ॥ ३२ ॥

श्रीपराशरः—

ततस्सर्वं यथावृत्तं धर्मधेनुवधं द्विज। कथयित्वा स प्रपच्छ प्रायश्चित्तं हि तद्गतम् ॥ ३३ ॥
स चाचष्ट यथान्यायं द्विज केशिध्वजाय तत्। प्रायश्चित्तमशेषेण यद्वै तत्र विधीयते ॥ ३४ ॥
विदितार्थस्स तेनैव ह्यनुज्ञातो महात्मना। यागभूमिमुपागम्य चक्रे सर्वाः क्रियाः क्रमात् ॥३५॥
क्रमेण विधिवद्यागं नीत्वा सोऽवभृथाप्लुतः। कृतकृत्यस्ततो भूत्वा चिन्तयामास पार्थिवः ॥ ३६ ॥
पूजिताश्च द्विजास्सर्वे सदस्या मानिता मया। तथैवार्थिजनोऽप्यर्थैर्योजितोऽभिमतैर्मया ॥ ३७ ॥
यथार्हमस्य लोकस्य मया सर्वं विचेष्टितम्। अनिष्पन्नक्रियं चेतस्तथापि मम किं यथा ॥ ३८ ॥
इत्थं संचिन्तयन्नेव सस्मार स महीपतिः। खाण्डिक्याय न दत्तेति मया वै गुरुदक्षिणा ॥ ३९ ॥
स जगाम तदा भूयो रथमारुह्य पार्थिवः। मैत्रेय दुर्गगहनं खाण्डिक्यो यत्र संस्थितः ॥ ४० ॥
खाण्डिक्योऽपि पुनर्दृष्ट्वा तमायान्तं धृतायुधः। तस्थौ हन्तुं कृतमतिस्तमाह स पुनर्नृपः ॥ ४१ ॥
भो नाहं तेऽपराधाय प्राप्तः खाण्डिक्य मा क्रुधाः। गुरोर्निष्क्रियदानाय मामवेहि त्वमागतम् ॥ ४२ ॥
निष्पादितो मया यागः सम्यक्त्वदुपदेशतः। सोऽहं ते दातुमिच्छामि वृणीष्व गुरुदक्षिणाम् ॥ ४३ ॥

श्रीपराशरः—

भूयस्स मन्त्रिभिस्सार्द्धं मन्त्रयामास पार्थिवः। गुरुनिष्क्रियकामोऽयं किं मया प्रार्थ्यतामिति ॥४४॥
तमूचुर्मन्त्रिणो राज्यमशेषं प्रार्थ्यतामयम्। शत्रुभिः प्रार्थ्यते राज्यमनायासितसैनिकैः ॥ ४५ ॥
प्रहस्य तानाह नृपस्स खाण्डिक्यो महामतिः। स्वल्पकालम् महीपाल्यं मादृशैः प्रार्थ्यते कथम् ॥४६॥

---

स इति ॥ राज्यहरत्वादाततायी। अतो यज्ञस्थस्यापि ते वधे न पातकम् ॥ २४—३३ ॥

स चाचष्टेति ॥ यद्वै तत्र विधीयत इत्यत्र प्रायश्चित्तं वाजसनेयोक्तं स्पृणोमिहोमाख्यम्। इयं ह्याख्यायिका वाजसनेयशाखायां केशिगृहपतिना * उपसम्राजमनडुहं शार्दूलो जघान * इत्युपक्रम्य * स्पृते हुत्वेत्यादि चोक्त्वा * पृथिव्यै ते शरीरं स्पृणोमि स्वाहा * इत्यन्ता सप्रपञ्चमुक्ता। आपस्तंबेन तु * यद्यनड्वाहं धर्मदोग्ध्रीं वा शार्दूलो हन्यादर्कक्षीरमजाक्षीरमन्यधेनुं वाश्रित्य प्रचरेत् * इत्याद्युक्तम् ॥ ३४—३७ ॥

यथार्हमिति ॥ तथापि ममेदं चेतः अनिष्पन्नक्रियं यथा—अकृतकृत्यमिव भवति। किमिति चिन्ता। यथाशब्दः सादृश्ये ॥ ३८—४१ ॥

भो इति ॥ निष्क्रियो दक्षिणा। निष्क्रय इति च पाठः ॥ ४२—४६ ॥

एवमेतद्भवन्तोऽत्र ह्यर्थसाधनमन्त्रिणः । परमार्थः कथं कोऽत्र यूयं नात्र विचक्षणाः ॥ ४७ ॥

पराशरः—

इत्युक्त्वा समुपेत्यैनं स तु केशिध्वजं नृपः । उवाच किमवश्यं त्वं ददासि गुरुदक्षिणाम् ॥ ४८ ॥

बाढमित्येव तेनोक्तः खाण्डिक्यस्तमथाब्रवीत् । भवानध्यात्मविज्ञानपरमार्थविचक्षणः ॥ ४९ ॥

यदि चेद्दीयते मह्यं भवता गुरुनिष्क्रियः । तत्क्लेशप्रशमायालं यत्कर्म तदुदीरय ॥ ५० ॥

इति श्रीविष्णुपुराणे षष्ठेंशे षष्ठोऽध्यायः ॥ ६ ॥

## अथ सप्तमोऽध्यायः

केशिध्वज उवाच—

न प्रार्थितं त्वया कस्मादस्मद्राज्यमकण्टकम् । राज्यलाभाद्विना नान्यत्क्षत्त्रियाणामतिप्रियम् ॥ १ ॥

खाण्डिक्य उवाच—

केशिध्वज निबोध त्वं मया न प्रार्थितं यतः । राज्यमेतदशेषं ते यत्र गृध्नन्त्यपण्डिताः ॥ २ ॥

क्षत्त्रियाणामयं धर्मो यत्प्रजापरिपालनम् । वधश्च धर्मयुद्धेन स्वराज्यपरिपन्थिनाम् ॥ ३ ॥

तत्राशक्तस्य मे दोषो नैवास्त्यपहृते त्वया । बन्धायैव भवत्येषा ह्यविद्याऽप्यक्रमोज्झिता ॥ ४ ॥

---

एवमिति ॥ अत्र—राज्यचिन्तायाम् । अत्र—संसारे कः परमार्थस्स च कथमित्यत्रार्थे यूयं न विचक्षणाः ॥ ४७, ४८ ॥

बाढमिति ॥ अध्यात्मेति । अध्यात्मविज्ञानस्य परमार्थः—प्रयोजनं, स च क्लेशनिवृत्तिः ॥ ४९ ॥

यदीति ॥ तत्—तस्मात् क्लेशप्रशमाय यदलं तदुदीरयेत्यब्रवीत् इत्यन्वयः ॥ ५० ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये षष्ठेंशे षष्ठोऽध्यायः ॥ ६ ॥

## अथ सप्तमोऽध्यायः

अथ केशिध्वजः क्लेशं मुमुक्षोः खाण्डिक्यस्य वैराग्यं परीक्षितुमाह—न प्रार्थितमिति ॥ प्रजापालनादेः क्षत्त्रधर्मस्य राज्यमूलत्वात्तदुपेक्षायां दोषात्किं राज्यं न प्रार्थितमिति भावः ॥ १ ॥

यतः कारणान्न प्रार्थितं तच्छृणित्याह—केशिध्वजेति ॥ २ ॥

तदेव कारणमाह—क्षत्त्रियाणमिति सार्धेन—क्षत्त्रियाणामिति ॥ सत्यम्, राज्ये सति प्रजारक्षणादिधर्मः ॥३॥

तत्रेति ॥ मम त्वशक्तस्य असक्तस्य च तत्र राज्ये त्वयाऽपहृते सति तदुपेक्षायां न धर्मलोपदोषः अनधिकारात्, सत्यधिकारे तदुपेक्षायां दोष इत्याह—बन्धायेति । अक्रमोज्झिता—विद्यमानेऽप्यधिकारे त्यक्ता अविद्या—प्रजापालनादिक्रिया बन्धाय—पापाय । हिशब्दो हेतौ ॥ ४ ॥

जन्मोपभोगलिप्सार्थमियं राज्यस्पृहा मम । अन्येषां दोषजा सैव धर्मं वै नानुरुध्यते ॥ ५ ॥

न याच्ञा क्षत्त्रबन्धूनां धर्मायैतत्सतां मतम् । अतो न याचितं राज्यमविद्यान्तर्गतं तव ॥ ६ ॥

राज्ये गृध्नन्त्यविद्वांसो ममत्वाहृतचेतसः । अहंमानमहापानमदमत्ता न मादृशाः ॥ ७ ॥

श्रीपराशरः—

प्रहृष्टस्साध्विति ततः प्राह केशिध्वजो नृपः । खाण्डिक्यजनकं प्रीत्या श्रूयतां वचनं मम ॥ ८ ॥

केशिध्वजः—

अहं ह्यविद्यया मृत्युं तर्तुकामः करोमि वै । राज्यं यागांश्च विविधान्भोगैः पुण्यक्षयं तथा ॥ ९ ॥

तदिदं ते मनो दिष्ट्या विवेकैश्वर्यतां गतम् । तच्छ्रूयतामविद्यायास्स्वरूपं कुलनन्दन ॥ १० ॥

अनात्मन्यात्मबुद्धिर्या चास्वे स्वमिति या मतिः । संसारतरुसंभूतिबीजमेतद्द्विधा स्थितम् ॥ ११ ॥

पञ्चभूतात्मके देहे देही मोहतमोवृतः । अहं ममैतदित्युच्चैः कुरुते कुमतिर्मतिम् ॥ १२ ॥

आकाशवाय्वग्निजलपृथिवीभ्यः पृथक् स्थिते । आत्मन्यात्ममयं भावं कः करोति कलेबरे ॥ १३ ॥

कलेबरोपभोग्यं हि गृहक्षेत्रादिकं च कः । अदेहे ह्यात्मनि प्राज्ञो ममेदमिति मन्यते ॥ १४ ॥

---

असक्तस्येत्येतद्विवृणोति—जन्मेति ॥ अन्येषां दोषजा—रागादिदोषजा राज्यस्पृहा, न धर्मानुरोधिनी । केवलमल्पोपभोगलिप्सार्थं भवति । इयं न ममेत्यन्वयः । जन्मोपभोगेति पाठे अन्येषां संबन्धिनी मम जन्मान्तरोपभोगलिप्सैव । कुतः? अर्थमनुरुध्यते न धर्ममिति । अस्मिन् जन्मन्युपभोगलिप्सार्थमेवेति वा ॥ ५ ॥

तर्हि पालनादिधर्मार्थम् अपहृतस्य राज्यस्य याच्ञा कर्तव्येत्यत्राह—न याच्ञेति ॥ क्षत्त्रबन्धूनां—क्षत्त्रियश्रेष्ठानाम् । अविद्यान्तर्गतं—पालनादिकर्तव्यान्तर्गतम ॥ ६ ॥

यत्र गृध्नन्त्यपण्डिता इत्येतद्विवृणोति—राज्य इति ॥ ७, ८ ॥

योगस्वरूपं वक्ष्यन् तदन्तर्भूतम् * अध्यात्मयोगाधिगमेनेति श्रुतिविहितं प्रकृतिपुरुषविवेकं विहितं कर्म चाह—अहं हीति ॥ अविद्यया—वर्णाश्रमविहितकर्मणा । मृत्युं—विद्योत्पत्तिविरोधि प्रारब्धकर्म, * अन्येषामप्येष विनाशः * इति श्रुतेः ॥ ९ ॥

तदिदमिति ॥ विवेकाख्यमैश्वर्यं विवेक एव वा ऐश्वर्यं यस्य तद्विवेकैश्वर्यं, तद्भावो विवेकैश्वर्यता । कर्माख्याविद्यायाः स्वरूपमाह—तच्छ्रूयतामिति सार्धेन ॥ १० ॥

अनात्मनीति ॥ अनात्मनि—देहे अहमिति भ्रमः, अस्वे—देहपोषकधारकादौ वस्तुनि स्वमिति । संसारफलकं काम्यकर्माविद्या सैव तरुः तत्संभूतेर्बीजम् ॥ ११ ॥

एतद् द्विविधं च भ्रमं प्रपञ्चयति पञ्चभूतात्मक इत्यादि चतुर्भिः । पञ्चभूतात्मक इति ॥ देहे पञ्चभूतात्मके कुमतिर्देही इदं देहाद्यहमेवेति, इदं क्षेत्रादि ममेति च मतिं कुरुते । मोहतमः—पूर्वकर्मवासना ॥ १२, १३ ॥ कलेबर इति ॥ अदेहे आत्मनि—देहादन्यस्मिन्नात्मनि सति ॥ १४ ॥

इत्थं च पुत्रपौत्रेषु तद्देहोत्पादितेषु कः। करोति पण्डितस्स्वाम्यमनात्मनि कलेवरे ॥ १५ ॥
सर्वं देहोपभोगाय कुरुते कर्म मानवः। देहश्चान्यो यदा पुंसस्तदा बन्धाय तत्परम् ॥ १६ ॥
मृण्मयं हि यथा गेहं लिप्यते वै मृदम्भसा। पार्थिवोऽयं तथा देहो मृदम्ब्वालेपनस्थितिः ॥१७॥
पञ्चभूतात्मकैर्भोगैः पञ्चभूतात्मकं वपुः। आप्यायते यदि ततः पुंसो भोगोऽत्र किंकृतः ॥१८॥
अनेकजन्मसाहस्रीं संसारपदवीं व्रजन्। मोहश्रमं प्रयातोऽसौ वासनारेणुकुण्ठितः ॥ १९ ॥
प्रक्षाल्यते यदा सोऽस्य रेणुर्ज्ञानोष्णवारिणा। तदा संसारपान्थस्य याति मोहश्रमश्शमम् ॥ २० ॥
मोहश्रमे शमं याते स्वस्थान्तःकरणः पुमान्। अनन्यातिशयाबाधं परं निर्वाणमृच्छति ॥ २१ ॥
निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः। दुःखाज्ञानमया धर्मा प्रकृतेस्ते तु नात्मनः ॥ २२ ॥
जलस्य नाग्निसंसर्गस्थालीसंगात्तथापि हि। शब्दोद्रेकादिकान्धर्मास्तत्करोति यथा नृप ॥ २३ ॥
तथाऽऽत्मा प्रकृतेस्सङ्गादहंमानादिदूषितः। भजते प्राकृतान्धर्मानन्यस्तेभ्यो हि सोऽव्ययः ॥२४॥

---

इत्थं चेति ॥ अनात्मनि—आत्मनोऽन्यस्मिन् सति ॥ १५ ॥

उक्तेनाज्ञानद्वयेन देहोपभोगार्थं कर्म करोति, तच्च बन्धाय भवतीत्याह—सर्वमिति ॥ देहस्योपभोगाय नात्मनः। बन्धाय—देहान्तरोत्पादनाय ॥ १६ ॥

देहोपभोगमेव दर्शयति मृण्मयं हीत्यादिद्वयेन ॥ १७, १८ ॥

देहस्य पार्थिवत्वपाञ्चभौतिकत्वोक्तिः मतभेदेन। तदिदमुभयविधमज्ञानमध्यात्मज्ञानेन निरस्यत इत्याह—अनेकेति द्वयेन ॥ अनेकेति ॥ वासना—अज्ञानकर्मोभयवासना। मोहश्रमम्—अज्ञानजं दुःखम् ॥ १९, २० ॥

मोहेति ॥ अनन्यातिशयम्—अन्यातिशयरहितम्। अबाधम्—अदुःखम्। निर्वाणं—मोक्षसुखम् ॥ २१ ॥ निर्वाणमात्मनः स्वरूपं न तु कर्मफलवदौपाधिकमित्याह—निर्वाणमय इति ॥ निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः—निर्मलसुखरूपज्ञानरूप एवायमात्मा। यथोक्तम् * यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः। दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा ॥ इति। * न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते * संपद्याविर्भावः स्वेन शब्दात्, * यावदात्मभावित्वात् * इत्यादि। आगन्तुकचैतन्यादिगुणक आत्मेति वादो वेदबाह्यः। प्रकृतेस्ते तु नात्मन इति। प्राप्ताप्राप्तविवेकेन प्रकृतिसंबन्धनिबन्धनत्वात् उक्तं, न त्वचेतनधर्माः। न हि देहस्य कारणानां वा सुखत्वाद्यनुसंधानसंभवः। * पुरुषः प्रकृतिस्थो हि भुंक्ते * इत्यादिविरोधश्च ॥ २२ ॥

अत्र दृष्टान्तमाह—जलस्येति ॥ यथा स्वतः शीतमम्बु शब्दफेनादिरहितम्, एवमात्मा स्वत एव निर्मलानन्तज्ञानानन्दः, प्रकृतेस्सङ्गात्—तस्यास्सङ्गात् आत्मा अहंमानादिदूषितः। अग्निसंयुक्तस्थालीस्थानीया तापत्रययुक्ता प्रकृतिः। तथा प्राकृतान् धर्मान्—क्षुत्तृष्णादीन् स्वकीयान् मन्यते। भजते—तेन दुःखादिकं जायते ॥ २३, २४ ॥

तदेतत्कथितं बीजमविद्याया मया तव । क्लेशानां च क्षयकरं योगादन्यन्न विद्यते ॥ २५ ॥

खाण्डिक्य उवाच—

तं ब्रवीहि महाभाग योगं योगविदुत्तम । विज्ञातयोगशास्त्रार्थस्त्वमस्यां निमिसंततौ ॥ २६ ॥

केशिध्वज उवाच—

योगस्वरूपं खाण्डिक्य श्रूयतां गदतो मम । यत्र स्थितो न च्यवते प्राप्य ब्रह्मलयं मुनिः ॥ २७ ॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धाय विषयासङ्गि मुक्त्यै निर्विषयं मनः ॥ २८ ॥
विषयेभ्यस्समाहृत्य विज्ञानात्मा मनो मुनिः । चिन्तयेन्मुक्तये तेन ब्रह्मभूतं परेश्वरम् ॥ २९ ॥
आत्मभावं नयत्येनं तद्ब्रह्म ध्यायिनं मुनिम् । विकार्यमात्मनश्शक्त्या लोहमाकर्षको यथा ॥ ३० ॥
आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः । तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते ॥ ३१ ॥

---

तदेतदिति ॥ तत्क्लेशप्रशमायालमिति प्रश्नस्य प्रतिवचनमाह—क्लेशानामिति । योगात्-भगवद्योगात् ॥ २५, २६ ॥ योगस्वरूपमिति ॥ ब्रह्मलयं—ब्रह्मणि लयं, ब्रह्मभावमित्यर्थः । * ये कर्मणा देवानपि यन्ति * इतिवत् । यद्वा * मेने चात्मानमच्युतम * ॥ २७ ॥

अथ योगस्य स्वरूपं करणं विषयं फलं चाह—मन एवेत्यादिभिः ॥ २८ ॥ विषयेभ्य इति ॥ विज्ञानात्—प्रकृतिपुरुषेश्वरवैलक्षण्यज्ञानात् । तेन—मानसेन चिन्तयेदिति योगस्वरूपम् । परमेश्वरमिति विषयः ॥ २९ ॥

फलमाह—आत्मभावमित्यादिना । आत्मभावमिति ॥ विकार्यमिति । अनाद्यविद्याकर्मवासनादेहैर्बद्धस्यात्मनो भगवज्ज्ञानेन तदवस्थानाशस्सर्वभावनानाशश्चात्यन्तिकलयशब्दवाच्यं विकार्यत्वम् । एवं विकार्यमात्मानं चिन्तितं तद्ब्रह्मात्मभावं नयति । आत्मनो भावस्स्वभावः आत्मभावः सत्यकामत्वादिः, * जक्षत् क्रीडन्रममाणः * इत्या-दिव्यापारश्च । * ब्राह्मेण जैमिनिरुपन्यासादिभ्यः * इत्यादिसूत्रैर्व्यक्तस्य मुक्तस्य ब्रह्मणः क्रीडादीनामाविर्भावः उक्तः । अत्राप्युक्तं * निर्वाणमय एवायमात्मेत्यादि । वक्ष्यति च * प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः * इति । आकर्षकः—आकर्षको मणिरयस्कान्तः । आकर्षको हि लोहमात्मभावं नयति—स्वस्मिन् तिष्ठति स्थापयति, गच्छति गमयति, भ्रमति भ्रामयति । * अनुकृतेस्तस्य च * कामरूप्यनुसंचरन् * वत्सो वा मातरं छाया वा सत्वम् * इत्यादिश्रुतिशतं च । यद्वा दोषाकर्षकत्वादाकर्षक इत्यग्निरुच्यते । * यथाऽग्निसङ्गात्कनकमपदोषं प्रजायते । संक्लिष्टं वासुदेवेन मनुष्याणां तथा मनः ॥ * यथाऽग्निरुद्धतशिखः कक्षं दहति सानिलः । तथा चित्तस्थितो विष्णुः प्राणिनां सर्वकिल्बिषम् ॥ * यथेषिकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते * इत्यादिभिर्भगवतोऽग्निसाम्यमुक्तम् । अग्निवद्भावो हि कनकस्य दोषविगमाज्जायते । पूर्वं दोषसंस्पृष्टं तिरोहितस्वप्रभं कनकमग्निर्हि स्वशक्त्या स्वसमानवर्णं करोति ॥ ३० ॥

एवं संक्षिप्योक्तं योगमध्यायशेषेण विस्तरतो दर्शयति—आत्मप्रयत्नेति ॥ विषयेष्वनादिवासनावासितत्वात् परमात्मनोऽत्यन्तापूर्वत्वाच्च दुरारोहत्वादात्मप्रयत्नसापेक्षा विशिष्टा एका संततिश्चेति वक्ष्यमाणप्रकारा विशदतमप्रत्यक्षतापन्ना निरस्तातिशयाह्लादरूपा पूर्वोक्तानन्तगुणकषायविशेषविशिष्टा वा या मनोगतिः, तस्या ब्रह्मणि संयोगः योगः । अनेनात्मपरमात्मनोर्योगो योग इति पक्षो निरस्तः ॥ ३१ ॥

एवमत्यन्तवैशिष्ट्ययुक्तधर्मोपलक्षणः । यस्य योगस्स वै योगी मुमुक्षुरभिधीयते ॥ ३२ ॥
योगयुक् प्रथमं योगी युञ्जानो ह्यभिधीयते । विनिष्पन्नसमाधिस्तु परं ब्रह्मोपलब्धिमान् ॥ ३३ ॥
यद्यन्तरायदोषेण दूष्यते चास्य मानसम् । जन्मान्तरैरभ्यसतो मुक्तिः पूर्वस्य जायते ॥ ३४ ॥
विनिष्पन्नसमाधिस्तु मुक्तिं तत्रैव जन्मनि । प्राप्नोति योगी योगाग्निदग्धकर्मचयोऽचिरात् ॥३५॥
ब्रह्मचर्यमहिंसां च सत्यास्तेयापरिग्रहान् । सेवेत योगी निष्कामो योग्यतां स्वमनो नयन् ॥ ३६ ॥
स्वाध्यायशौचसंतोषतपांसि नियतात्मवान् । कुर्वीत ब्रह्मणि तथा परस्मिन्प्रवणं मनः ॥ ३७ ॥
एते यमास्सनियमाः पञ्च पञ्च च कीर्तिताः । विशिष्टफलदाः काम्या निष्कामानां विमुक्तिदाः ॥ ३८ ॥
एकं भद्रासनादीनां समास्थाय गुणैर्युतः । यमाख्यैर्नियमाख्यैश्च युञ्जीत नियतो यतिः ॥ ३९ ॥

---

एवमिति ॥ उक्तप्रकारात्यन्तवैशिष्ट्ययुक्तो धर्मरूपो योगो यस्य, स मुमुक्षुर्योगीत्यभिधीयते । अत्र मोक्षसाधनं योगः, स च धर्मरूप इति वदन् वाक्यार्थज्ञानं मोक्षसाधनं, ज्ञानमविधेयमिति च वादिनो निरस्यति ॥ ३२ ॥ अथ योगिनोऽवस्थाभेदेन संज्ञाद्वयमाह—योगयुगिति ॥ प्रथमं युञ्जानः—योगे प्रक्रान्तो योगयुगित्यभिधीयते । साक्षात्कृतपरमात्मस्वरूपो विनिष्पन्नसमाधिरित्यभिधीयते । ध्यानपर्यन्तससाङ्गयोगनिष्ठस्य योगयुक्त्वं समाधिमतो योगित्वमिति विभागः ॥ ३३ ॥

तयोः पूर्वस्यानेकजन्मलभ्या मुक्तिः, इतरस्य तत्रैवेत्याह—यद्यन्तरायेत्यादिद्वयेन ॥ यद्यन्तरायेति ॥ अन्तरायाः—प्रक्रान्तयोगानां यावद्धारणम् आलस्यादयो दश, धारणातः परं प्रतिभाद्याः षट् । तथा च वायुसंहितायाम्— * आलस्यं व्याधयस्तीव्राः प्रमादस्स्थानसंशयः । अनवस्थितचित्तत्वमश्रद्धा भ्रान्तिदर्शनम् ॥ दुःखानि दौर्मनस्यं च विषयेषु च लोलता । दशैते युञ्जतां पुंसामन्तरायाः प्रकीर्तिताः ॥ शान्तेष्वेतेषु विघ्नेषु योगसक्तस्य योगिनः । उपसर्गाः प्रवर्तन्ते दिव्याः षट् सिद्धिसूचकाः ॥ प्रतिभा श्रवणं वार्ता दर्शनास्वादवेदनाः । सूक्ष्मे चान्तर्हितेऽतीते विप्रकृष्टे त्वनागते ॥ प्रतिभा कथ्यते योऽर्थे प्रतिभासो यथातथम् । श्रवणं सर्वशब्दानां श्रवणं त्वप्रयत्नतः ॥ वार्ता वार्तासु विज्ञानं सर्वेषामेव देहिनाम् । दर्शनं नाम दिव्यानां दर्शनं चाप्रयत्नतः ॥ तथा स्वादश्च दिव्येषु रसेष्वास्वाद उच्यते । स्पर्शनाधिगमस्तद्वद्वेदना नाम विश्रुता ॥ गन्धादीनां च दिव्यानामाब्रह्मभवनावधि ॥ इति ॥ तथा अहिंसादिफलभूताः * तत्सन्निधौ वैरत्यागः * इत्यादिना पतञ्जलिनोक्तास्सङ्गस्यापादिकाः सिद्धयोऽष्टैश्वर्याद्याश्च निष्कामस्यान्तरायाः, * प्रतिमादिष्वशुद्धेषु गुणेष्वासक्तचेतसाम् । न सिद्ध्येत्परमैश्वर्यमक्षयं सार्वकामिकम् ॥ इति वायूक्तेः ॥ ३४, ३५ ॥

योगाङ्गेषु प्रथमं यमनियमावाह—ब्रह्मचर्यमिति ॥ ब्रह्मचर्यं मैथुनत्यागः । निषिद्धद्रव्याणामनादानमपरिग्रहः ॥ ३६ ॥

स्वाध्यायेति ॥ तपः—उपवासादि । परस्मिन् ब्रह्मणि मनःप्रावण्यमेको गुणः ॥ ३७ ॥

तत इति ॥ विशिष्टफलदाः—सकामानाम् ॥ ३८ ॥

एकमिति ॥ आदिशब्देन स्वस्तिकादीनि गृह्यन्ते । भद्रासनादीनां लक्षणं याज्ञवल्क्येनोक्तम् ॥ ३९ ॥

प्राणाख्यमनिलं वश्यमभ्यासात्कुरुते तु यत् । प्राणायामस्स विज्ञेयस्सबीजोऽबीज एव च ॥ ४० ॥
परस्परेणाभिभवं प्राणापानौ यथाऽनिलौ । कुरुतस्स द्विधा तेन तृतीयस्संयमात्तयोः ॥ ४१ ॥
तस्य चालम्बनवतः स्थूलरूपं द्विजोत्तम । आलम्बनमनन्तस्य योगिनोऽभ्यसतः स्मृतम् ॥ ४२ ॥
शब्दादिष्वनुरक्तानि निगृह्याक्षाणि योगवित् । कुर्याच्चित्तानुकारीणि प्रत्याहारपरायणः ॥ ४३ ॥
वश्यता परमा तेन जायतेऽतिचलात्मनाम् । इन्द्रियाणामवश्यैस्तैर्न योगी योगसाधकः ॥ ४४ ॥
प्राणयामेन पवने प्रत्याहारेण चेन्द्रिये । वशीकृते ततः कुर्यात्स्थितं चेतश्शुभाश्रये ॥ ४५ ॥

खाण्डिक्य उवाच—

कथ्यतां मे महाभाग चेतसो यश्शुभाश्रयः । यदाधारमशेषं तद्धन्ति दोषमलोद्भवम् ॥ ४६ ॥

केशिध्वज उवाच—

आश्रयश्चेतसो ब्रह्म द्विधा तच्च स्वभावतः । भूप मूर्तममूर्तं च परं चापरमेव च ॥ ४७ ॥

---

प्राणेत्यादि ॥ सबीजः—सगर्भः, सालंबनः भगवन्मूर्तिध्यानमन्त्रजपयुक्तः । अबीजः—तद्विधुरः ॥ ४० ॥ रेचकादिरूपेण प्राणायामं त्रिधा दर्शयति—परस्परेणेति ॥ प्राणेन—निश्वासेन, अपानस्य—उच्छ्वासस्य, अभिभवः—निरोधः प्रथमः प्राणायामो रेचकः । विपरीतः पूरकाख्यो द्वितीयः । स द्विधा तेनेति । सः—प्राणायामः तेन—उक्तेन प्रकारद्वयेन द्विधा । स द्विधानेनेति पाठान्तरेऽप्येवमेवार्थः । तयोः—उच्छ्वासनिश्वासयोर्युगपत्संयमात्तृतीयः कुम्भकाख्यः । एते त्रयोऽपि प्रत्येकं मात्राभेदात्त्रिधा । यथोक्तम्—* मात्राद्वादशको मन्दश्चतुर्विंशतिमात्रकः । मध्यमः प्राणसंरोधः षट्त्रिंशन्मात्र उत्तमः ॥ प्रस्वेदकम्पनोत्थानजनकास्ते यथाक्रमम् । जानु प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ॥ अंगुलीस्फोटनं कुर्यात्सा मात्रेति प्रकीर्तिता । प्राणस्स्वदेहजो वायुरायामस्तन्निरोधनम् ॥ तद्रेचकः पूरकश्च कुम्भकश्च त्रिधोच्यते । नासिकापुटमङ्गुल्या निपीड्यैकं परेण तु ॥ औदरं रेचयेद्वायुं तदाऽयं रेचकः स्मृतः । बाह्येन वायुना देहं दृतिवत्परिपूरयेत् । नासापुटेनापरेण पूरणात्पूरको मतः ॥ न मुञ्चति न गृह्णाति वायुमन्तर्बहिस्स्थितम् । संपूर्णकुम्भवत्तिष्ठेदचलस्स तु कुम्भकः ॥ रेचकादित्रयाभ्यासो नासाशोधनपूर्वकः । स्वेदोत्क्रमणपर्यन्तः प्रोक्तो योगानुशासने ॥ अगर्भश्च सगर्भश्च प्राणायामो द्विधा पुनः । जपध्यानं विनाऽगर्भः सगर्भस्तत्समन्वयात् ॥ अगर्भाद्गर्भसंयुक्तः प्राणायामश्शताधिकः ॥ इति ॥ ४१ ॥

प्राणायामं सबीजनिर्बीजं तथा द्विधाऽभिप्रेत्य तत्र सबीजस्यालम्बनमाह—तस्येति ॥ स्थूलरूपं—मूर्तं भगवतो रूपमिति वक्ष्यमाणम् । रूपस्य स्थूलत्वं भगवत्स्वरूपापेक्षया ॥४२॥ प्रत्याहारमाह—शब्दादिष्विति ॥४३, ४४॥

प्राणायामेनेति ॥ प्राणायामेन पवने प्रत्याहारेण चेन्द्रिये वशीकृते सति चेतश्शुभाश्रये पूर्वोक्तभगवत्स्थूलरूपे स्थितं कुर्यात् । अनेन श्लोकेन धारणोक्ता ॥ ४५ ॥

कथ्यतामिति ॥ तच्चेतः दोषमलोद्भवं—दोषमलयोरुद्भवम् । दोषः—कल्मषं, मलं—रागादि ॥ ४६ ॥

अथ शुभाश्रयं वक्ष्यन् प्रथमं हेयमशुभाश्रयं दर्शयति—आश्रय इति ॥ चेतस आश्रयो ब्रह्म, तच्च स्वरूपतो द्विधा—मूर्तममूर्तं च । मूर्तं सशरीरं हिरण्यगर्भादिबद्धस्वरूपम् । अमूर्तमशरीरं मुक्तरूपम् । परत्वापरत्वे व्युत्क्रमेण तयोर्विशेषणे । ब्रह्मात्मकत्वात् तयोर्ब्रह्मशब्दनिर्देशः । अनयोरपि भगवद्रूपत्वेन ध्येयत्वप्रसङ्गात्तत्प्रतिषेधाय प्रस्तावः ॥ ४७ ॥

त्रिविधा भावना भूप विश्वमेतन्निबोधताम् । ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका ॥४८॥
कर्मभावात्मिका ह्येका ब्रह्मभावात्मिका परा । उभयात्मिका तथैवान्या त्रिविधा भावभावना ॥४९॥
सनन्दनादयो ये तु ब्रह्मभावनया युताः । कर्मभावनया चान्ये देवाद्यास्स्थावराचराः ॥ ५० ॥
हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा । बोधाधिकारयुक्तेषु विद्यते भावभावना ॥ ५१ ॥
अक्षीणेषु समस्तेषु विशेषज्ञानकर्मसु । विश्वमेतत्परं चान्यद्भेदभिन्नदृशां नृणाम् ॥ ५२ ॥
प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥ ५३ ॥
तच्च विष्णोः परं रूपमरूपाख्यमनुत्तमम् । विश्वस्वरूपवैरूप्यलक्षणं परमात्मनः ॥ ५४ ॥
न तद्योगयुजा शक्यं नृप चिन्तयितुं यतः । ततस्स्थूलं हरे रूपं चिन्तयेद्विश्वगोचरम् ॥ ५५ ॥

---

त्रिविधेति ॥ अनन्तरोक्तं मूर्तामूर्तात्मकमेतद्विश्वं त्रिविधा भावना—भावनात्रयात्मकमित्यर्थः । तां—भावनां निबोध । ब्रह्माख्येत्यादि । ब्रह्मकर्मादिविषयतया ब्रह्मादिव्यपदेशः ॥ ४८ ॥

एतदेवाह—कर्मभावात्मिकेति ॥ भावभावना—भावो मनोव्यापारः, भावेन भावना भावभावना । भावः पदार्थो वा ॥ ४९ ॥

केषां का भावनेत्यत्राह—सनन्दनादय इति॥ स्थावराचराः—स्थावरचरमाः । स्थावराणां हिमवदादीनां हि कर्मस्वधिकारः श्रूयते । * बिल्वा मार्दङ्गिका ह्यासन् क्रीडन्त्योषधयस्सदा ॥ इति च ॥ ५० ॥

हिरण्यगर्भादिष्विति ॥ संसारदशायामधिकारबोधयुक्तेषु भावनात्रयान्वय इत्याह—बोधाधिकारेति ॥ अधिकारो नाम मत्फलसाधनत्वात् मदर्थमिदं कर्मेति कर्मण्यैश्वर्यबोधः ॥ ५१ ॥

विश्वमेतदुक्तमर्थरूपं विशेषज्ञानकर्मस्वक्षीणेष्वित्याह—अक्षीणेष्विति ॥ विशेषज्ञानं देवमनुष्यादिभेदभिन्नतयाऽऽत्मानुसंधानं तत्तदभिमानानुरूपम् । कर्म—विशेषकर्म । अथ पराख्यं मूर्तरूपमाह—परं चान्यदित्यादिना परमात्मन इत्यन्तेन । भेदभिन्नदृशामिति पञ्चम्यर्थे षष्ठी । ये पूर्वश्लोके अक्षीणसमस्तविशेषज्ञानकर्माण उक्ताः तेभ्यो भेदभिन्नदृग्भ्यो ब्रह्मसनकादिभ्योऽन्यत् तत्पराख्यम् ॥ ५२ ॥

अन्यत्वमुपपादयति—प्रत्यस्तमितेति ॥ प्रत्यस्तमितभेदम्—अशरीरत्वेन जात्यादिभेदरहितम्, अत एव वचसामगोचरम् । सत्तामात्रम्—अपक्षयादिविकारपञ्चकरहितम् । आत्मसंवेद्यं—स्वयंप्रकाशम् । ज्ञानं—ज्ञानगुणैकनिरूपणीयम् । * तद्गुणसारत्वादिति ह्युक्तम् । ज्ञानस्वरूपत्वं त्वात्मसंवेद्यमित्यनेन दर्शितं ब्रह्मात्मकत्वात् ब्रह्मसंज्ञितमित्युक्तं यदेवं रूपं ज्ञानं तद्ब्रह्मसंज्ञितमित्यन्वयः ॥ ५३ ॥

तच्चेति॥ अरूपाख्यम्—अमूर्ताख्यं पूर्वोक्तविश्वरूपवैरूप्यलक्षणम् । अन्वयलक्षणासंभवेन मूर्तरूपात् व्यतिरेकलक्षणम् । तच्च परमात्मनो विष्णोः परं रूपम् ॥ ५४ ॥

नेति ॥ तत् योगयुजा—योगे प्रक्रान्तेन, चिन्तयितुं न शक्यम् । तेन स्थूलरूपं चिन्त्यमित्याह—तत इति ॥ स्थूलं—पूर्वोक्तं बद्धरूपम् ॥ ५५ ॥

हिरण्यगर्भो भगवान्वासुदेवः प्रजापतिः । मरुतो वसवो रुद्रा भास्करा स्तारका ग्रहाः ॥ ५६ ॥
गंधर्वयक्षदैत्याद्यास्सकला देवयोनयः । मनुष्याः पशवश्शैलास्समुद्रास्सरितो द्रुमाः ॥ ५७ ॥
भूप भूतान्यशेषाणि भूतानां ये च हेतवः । प्रधानादिविशेषान्तं चेतनाचेतनात्मकम् ॥ ५८ ॥
एकपादं द्विपादं च बहुपादमपादकम् । मूर्तमेतद्धरे रूपं भावनात्रितयात्मकम् ॥ ५९ ॥
एतत्सर्वमिदं विश्वं जगदेतच्चराचरम् । परब्रह्मस्वरूपस्य विष्णोश्शक्तिसमन्वितम् ॥ ६० ॥
विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा । अविद्याकर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते ॥६१॥
यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप सर्वगा । संसारतापानखिलानवाप्नोत्यतिसंततान् ॥ ६२ ॥
तया तिरोहितत्वाच्च शक्तिः क्षेत्रज्ञसंज्ञिता । सर्वभूतेषु भूपाल तारतम्येन लक्ष्यते ॥ ६३ ॥
अप्राणवत्सु स्वल्पा सा स्थावरेषु ततोऽधिका । सरीसृपेषु तेभ्योऽपि ह्यतिशक्त्या पतत्रिषु ॥ ६४ ॥
पतत्रिभ्यो मृगास्तेभ्यस्तच्छक्त्या पशवोऽधिकाः । पशुभ्यो मनुजाश्चातिशक्त्या पुंसः प्रभाविताः ॥
तेभ्योऽपि नागगंधर्वयक्षाद्या देवता नृप ॥ ६६ ॥
शक्रस्समस्तदेवेभ्यस्ततश्चातिप्रजापतिः । हिरण्यगर्भोऽपि ततः पुंसश्शक्त्युपलक्षितः ॥ ६७ ॥

---

विस्तरेण तदेव दर्शयति—हिरण्यगर्भ इत्यादिना मूर्तमेतद्धरे रूपमित्यन्तेन ॥ ५६—५८ ॥

एकपादमिति श्लोकद्वयस्यैकान्वयः । भावनात्रितयात्मकमेतत्सर्वमित्युक्तम् । एतत्स्थूलरूपं चिन्तयितुं शक्यमपि भावनात्रितयात्मकम् । अतोऽशुद्धत्वादशुभाश्रय इति भावः । इदं विश्वमिति विश्वमेतन्निबोधतामित्युक्तस्योपसंहारः । जगदेतच्चराचरम् इत्यादि विष्णोश्शक्तिसमन्वितमित्यन्तमेकं वाक्यम् । एवंविधमेतज्जगद्विष्णोः शक्तित्वेन समन्वितम् । शक्तिश्शरीरम् अंश इति पर्यायः । शरीरतया तत्संकल्पशक्त्या व्याप्तमिति च, अस्मच्छरीरवत् । केचित् एतत्सर्वमिति हिरण्यगर्भादि इदं विश्वमिति सनन्दनादि जगदेतदिति सुरनरादि च परामृश्य इदं त्रितयं विष्णोश्शक्तिसमन्वितमिति योजयन्ति । तत्पक्षे भावनात्रितयात्मकमित्यस्य पूर्वेणोत्तरेण वा संबन्धः ॥ ५९, ६० ॥

तत्र परा विष्णुशक्तिः प्रत्यस्तमितेत्यादिनोक्ता, क्षेत्रज्ञाख्या अपरा हिरण्यगर्भ इत्यादिनोक्तेत्याह—विष्णुशक्तिरिति ॥ अथ यागादिकर्माख्यमविद्यापर्यायं विष्णोश्शक्त्यन्तरमाह—अविद्येति ॥ ६१ ॥

तत्स्वरूपमाह—ययेति ॥ सर्वगा—कर्मनिमित्तसर्वशरीरगा ॥ ६२ ॥

तयेत्यादि ॥ तारतम्येन—ज्ञानानन्दतारतम्येन ॥ ६३ ॥

तारतम्यमेव दर्शयति—अप्राणवत्स्विति ॥ शिलाकाष्ठादिषु सा—क्षेत्रज्ञशक्तिः स्वल्पा ज्ञानानन्दादिना, न तु स्वरूपेण । सरीसृपेषु तेभ्योऽप्यधिकेति शेषः । अतिशक्त्या—ज्ञानशक्त्या अधिकेत्यर्थः ॥ ६४ ॥

पतत्रिभ्य इति ॥ तच्छक्त्या—आत्मनो ज्ञानशक्त्या । प्रभाविताः—प्रभूताः कृताः ॥ ६५—६७ ॥

एतान्यशेषरूपाणि तस्य रूपाणि पार्थिव । यतस्तच्छक्तियोगेन युक्तानि नभसा यथा ॥ ६८ ॥

द्वितीयं विष्णुसंज्ञस्य योगिध्येयं महामते । अमूर्तं ब्रह्मणो रूपं यत्सदित्युच्यते बुधैः ॥ ६९ ॥

समस्ताश्शक्तयश्चैता नृप यत्र प्रतिष्ठिताः । तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥ ७० ॥

समस्तशक्ति रूपाणि तत्करोति जनेश्वर । देवतिर्यङ्मनुष्या(ख्या)दिचेष्टावन्ति स्वलीलया ॥ ७१ ॥

जगतामुपकाराय न सा कर्मनिमित्तजा । चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका ॥ ७२ ॥

---

एतान्यप्राणवदादीनि हिरण्यगर्भान्तान्यशेषरूपाण्यविशेषेण तस्य शरीराणीत्याह—एतानीति ॥ तत्र हेतुमाह—यत इति ॥ यथा हि जीवस्य शरीरं जीवसंकल्पव्याप्तम्, एवं चेतनाचेतनात्मकं सर्वं भगवच्छक्तियोगेन व्याप्तं नियाम्यं धार्यं च । अतस्तच्छरीरम् । शक्तियोगेनेति । शक्तिरूपो योगः शक्तियोगः । शक्तिः—सामर्थ्यं, योगः—संकल्पः । नभसा यथेति संकल्पनैरन्तर्यमुक्तम् । * महात्मा भूतभावनः * यथाकाशः स्थितो नित्यम् * इत्यादि ॥ ६८ ॥

एवं भावनात्रयात्मकं भगवतो मूर्तं रूपमुक्तम् । इदानीं मुक्तरूपममूर्तं रूपमित्याह—द्वितीयमिति ॥ यत्सदित्युच्यते—सत्तामात्रमित्युच्यते। योगिध्येयं—निष्पन्नयोगेन ध्यातुं शक्यम्, तद्विष्णुसंज्ञस्य ब्रह्मणो मूर्तं द्वितीयं रूपमित्यन्वयः ॥ ६९ ॥

अथोक्तशक्तित्रयस्यास्त्रभूषणादिरूपेण नित्याश्रयभूतं जगदेककारणतयोक्तं भगवद्रूपम्, तस्य शुभाश्रयत्वं वक्तुमाह—समस्ता इति ॥ विश्वरूपवैरूप्यम्—उक्तविश्वरूपवैलक्षण्यं, रूपम्—शरीरम्, अन्यत्—द्रव्यान्तरम् । * आदित्यवर्णं तमसः परस्तात्, * अमृतो हिरण्मयः * विद्यतः पुरुषादधि, * महारजतं वासः * पुण्डरीकमेवमक्षिणी * रुक्मवर्णम् * कर्तारमीशम् * रुक्माभम् * इत्यादिवचनसिद्धम् । महत्—स्थूलम् । गुणतोऽपि महत्त्वं विवक्षितम् । एवंविधं रूपमस्यास्तीति सिद्धम् ॥ ७० ॥ समस्तशक्त्याश्रयं तद्रूपं भगवानेव जगदुपकाराय स्वलीलया देवतिर्यङ्मनुष्यादिचेष्टावन्ति देवाद्यवताररूपाणि करोतीत्याह—समस्तेत्यादिद्वयेन ॥ समस्तेति । समस्तशक्तीति पदच्छेदः । समस्ताः शक्तयः यस्मिन् तत्तथोक्तम् । * मन्वन्तरेष्वशेषेषु देवत्वेनाधितिष्ठति * इति । प्रतिकल्पं चतुर्दशदेवावताराः, त्रिमूर्तिमध्यगतविष्ण्वादयश्च, मत्स्यादयस्तिर्यगवताराः, रामादयो मनुष्यावताराः, स्वलीलया न तु प्रयोजनान्तरेण । देवतिर्यङ्मनुष्याख्याचेष्टावन्तीति च पाठः ॥ ७१ ॥

किंच, जगतामिति ॥ जगतामुपकाराय, न कर्मफलभोगाय सा—जन्मादिरूपा चेष्टा । तत्र जन्मरूपा देवमनुष्यादिसर्वजातिव्यापिनी । यथाह—* बहुधा विजायते * इति। कर्मरूपा बृन्दावनगोकुलकालियह्रदादिव्यापिनी । अव्याहतात्मिका—रावणशिशुपालबाणशक्रशर्वादिभिरप्रतिहता । न सा कर्मनिमित्तजेत्यनेन त्रिभावनातीतत्वात् अवताराणामपि शुभाश्रयत्वं दर्शितम् ॥ ७२ ॥

तद्रूपं विश्वरूपस्य तस्य योगयुजा नृप । चिन्त्यमात्मविशुद्ध्यर्थं सर्वकिल्बिषनाशनम् ॥ ७३ ॥
यथाऽग्निरुद्धतशिखः कक्षं दहति सानिलः । तथा चित्तस्थितो विष्णुर्योगिनां सर्वकिल्बिषम् ॥७४॥
तस्मात्समस्तशक्तीनामाधारे तत्र चेतसः । कुर्वीत संस्थितिं सा तु विज्ञेया शुद्धधारणा ॥ ७५ ॥
शुभाश्रयस्स चित्तस्य सर्वगस्याचलात्मनः । त्रिभावभावनातीतो मुक्तये योगिनो नृप ॥ ७६ ॥
अन्ये तु पुरुषव्याघ्र चेतसो ये व्यपाश्रयाः । अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः ॥७७॥
मूर्तं भगवतो रूपं सर्वापाश्रयनिस्पृहम् । एषा वै धारणा प्रोक्ता यच्चित्तं तत्र धार्यते ॥ ७८ ॥
यच्च मूर्तं हरे रूपं यादृक्चिन्त्यं नराधिप । तच्छ्रूयतामनाधारा धारणा नोपपद्यते ॥ ७९ ॥
प्रसन्नवदनं चारुपद्मपत्रोपमेक्षणम् । सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम् ॥ ८० ॥
समकर्णांतविन्यस्तचारुकुण्डलभूषणम् । कम्बुग्रीवं सुविस्तीर्णश्रीवत्साङ्कितवक्षसम् ॥ ८१ ॥

---

यद्यप्यनन्तस्यानन्तबद्धमुक्तरूपाणि सन्ति । तथापि व्यूहविभवादिरूपेण स्थितं तदेव भगवतो रूपं चिन्त्यमित्याह—तद्रूपमिति ॥ सर्वकिल्बिषनाशनं—सर्वकर्मक्षयकरम् ॥ ७३, ७४ ॥

यत एवं विलक्षणं योगयुजाऽभ्यासवशेन चिन्तयितुं शक्यं च, तस्मात्तत्र रूपे धारणां कुर्यादित्याह—तस्मादिति ॥ आधारशुद्ध्या धारणायाः शुद्धिः ॥ ७५ ॥

शुभाश्रयत्वे त्रिभावभावनातीतत्वं हेतुमाह—शुभाश्रय इति ॥ शुद्धाश्रय इति च पाठः । स्वतस्सर्वगतस्य चञ्चलस्य विलक्षणविषये अचलात्मनस्सर्वविलक्षणत्वात् स शुभाश्रयः । अवताररूपाण्यपि भावनात्रयातीतत्वेन मुक्तिहेतुतया च शुभाश्रय इति स्मृत्यादिभिरुक्तम् । * एवं यो वेत्ति तत्त्वतः * यादृशे वा मनस्स्थैर्यं रूपे बध्नाति चक्रिणः । नृसिंहवामनादीनाम् * इत्यादिना शौनकः । श्रीसात्वते * दशेन्द्रियाननं घोरं यो मनोरजनीचरम् । विवेकशरजालेन शमं नयति योगिनाम् । ध्येयस्स एव विश्वात्मा सतोयजलदप्रभः । रक्तराजीवनयनो धनुश्शरकराङ्कितः * इत्यादिना प्रत्याविर्भावमुक्तम् ॥ ७६ ॥

एतद्व्यतिरिक्ताः पूर्वोक्ता बद्धमुक्ता ये ते अशुभाश्रया इत्याह—अन्ये त्विति ॥ अत्रापि शौनकः * आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनितास्संसारवशवर्त्तिनः ॥ यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः । अविद्यान्तर्गता स्सर्वे ते हि संसारगोचराः ॥ पश्चादुद्भूतबोधाश्च ध्याने नैवोपकारकाः । नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः ॥ तस्मात्तदमलं ब्रह्म निसर्गादेव बोधवत् । ध्येयम् * इत्यादि । महाभारते * ब्रह्माणं शितिकण्ठं च * इत्यादि । * एतदन्तास्तु गतयो ब्रह्माद्यास्समुदाहृताः * इत्यादि मनुः । कर्मयोनित्वमशुद्धिहेतुः ॥ ७७ ॥

अथ धारणाया ध्यानस्य चाश्रयरूपमाह—मूर्तमिति ॥ मूर्तं भगवतो रूप इति च पाठः । मूर्तं—स्थूले ॥ ७८—८१ ॥

वलित्रिभङ्गिना मग्ननाभिना ह्युदरेण च । प्रलम्बाष्टभुजं विष्णुमथवापि चतुर्भुजम् ॥ ८२ ॥

समस्थितोरुजङ्घं च सुस्थिताङ्घ्रिवराम्बुजम् । चिन्तयेद्ब्रह्मभूतं तं पीतनिर्मलवाससम् ॥ ८३ ॥

किरीटहारकेयूरकटकादिविभूषितम् ॥ ८४ ॥

शार्ङ्गशङ्खगदाखड्गचक्राक्षवलयान्वितम् । वरदाभयहस्तं च मुद्रिकारत्नभूषितम् ॥ ८५ ॥

चिन्तयेत्तन्मयो योगी समाधायात्ममानसम् । तावद्यावद्दृढीभूता तत्रैव नृप धारणा ॥ ८६ ॥

व्रजतस्तिष्ठतोऽन्यद्वा स्वेच्छया कर्म कुर्वतः । नापयाति यदा चित्तात्सिद्धां मन्येत तां तदा ॥ ८७ ॥

ततश्शङ्खगदाचक्रशार्ङ्गादिरहितं बुधः । चिन्तयेद्भगवद्रूपं प्रशान्तं साक्षसूत्रकम् ॥ ८८ ॥

सा यदा धारणा तद्वदवस्थानवती ततः । किरीटकेयूरमुखैर्भूषणै रहितं स्मरेत् ॥ ८९ ॥

तदेकावयवं देवं चेतसा हि पुनर्बुधः । कुर्यात्ततोऽवयविनि प्रणिधानपरो भवेत् ॥ ९० ॥

तद्रूपप्रत्य(ये)या चैका सन्ततिश्चान्यनिस्स्पृहा । तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप ॥ ९१ ॥

---

वलीति ॥ त्रयो भङ्गा यस्य तत्त्रिभङ्गि । वलिभिस्त्रिभङ्गिना ॥ ८२–८४ ॥

अथ धारणां विषयभेदेन चतुर्धा दर्शयति—शार्ङ्गेत्यादिना ॥ अष्टभुजत्वपक्षे शार्ङ्गादीनि षट् षण्णां र्याणि, शिष्टभुजयोः पद्मत्राणौ, वराभये वा । चतुर्भुजत्वे शङ्खचक्रगदाब्जानि । तत्र शार्ङ्गेत्यादिना, तां देत्यन्तेन अस्त्रभूषणप्रत्यङ्गप्रधानाङ्गचतुष्टयविषया प्रथमा धारणोक्ता । अस्त्रप्रधानेयं धारणा ॥ ८५–८७ ॥

तत इति ॥ ततश्शङ्खेत्यादिना साक्षसूत्रकमित्यन्तेन शङ्खाद्यस्त्ररहितसाक्षसूत्रकिरीटादिभूषणप्रत्यङ्ग-धानाङ्गविषया द्वितीयोक्ता । इयं भूषणप्रधाना ॥ ८८ ॥

सेति ॥ किरीटेत्यादिना भूषणरहितप्रत्यङ्गप्रधानाङ्गविषया तृतीयोक्ता । इयं प्रत्यङ्गप्रधाना ॥ ८९ ॥

तदिति ॥ तदेकावयवमित्यादिना प्रधानाङ्गविषया चतुर्थी धारणोक्ता । आयुधभूषणप्रत्यङ्गेषु अभ्यासेन दृढं गृहीतेषु पुनस्तदेकावयवं—तेषां प्रत्यङ्गानां प्रधानावयवयुक्तं देवं चेतसा कुर्यात्—चिन्तयेदित्यर्थः । इयमेका-यवप्रधाना । अथ ध्यानमाह—ततोऽवयविनीति ॥ ततः—धारणानन्तरम् । अस्त्रभूषणप्रत्यङ्गप्रधानाङ्गानामाश्रये गोमुखाकारेऽवयविनि अस्त्राद्यनुषङ्गेण ध्यानपरो भवेत् ॥ ९० ॥

ध्यानलक्षणमाह—तद्रूपेति ॥ तद्रूपप्रत्यय इति च पाठः । तद्रूपप्रत्यये—धारणासिद्धरूपविषयप्रत्यये । एका—असदृशी । अन्यनिस्पृहा—विजातीयप्रत्ययानन्तरिता या संततिः—प्रवाहः, तद्ध्यानं षड्भिरङ्गैः—यमादिभिः । एवमुपासनसोपानक्रमेणारूढदिव्यविषयमिदं ध्यानम् । पूर्वत्र तस्य चालम्बनवत इति प्रस्तुतः सालम्बनो योगः । अस्त्रभूषणाध्याये ह्यस्त्रभूषणमयसर्वशक्त्याश्रयदिव्यविग्रहः सबीजयोगविषय इति स्पष्टमुक्तम् * सालम्बनो महायोग-स्सबीज इत्यादिना ॥ ९१ ॥

तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् । मनसा ध्याननिष्पाद्यं समाधिस्सोऽभिधीयते ॥ ९२ ॥
विज्ञानं प्रापकं प्राप्ये परे ब्रह्मणि पार्थिव । प्रापणीयस्तथैवात्मा प्रक्षीणाशेषभावनः ॥ ९३ ॥
क्षेत्रज्ञः करणी ज्ञानं करणं तस्य तेन तत् । निष्पाद्य मुक्तिकार्यं वै कृतकृत्यं निवर्तते ॥ ९४ ॥
तद्भावभावमापन्नस्ततोऽसौ परमात्मना । भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत् ॥ ९५ ॥
विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसंतं कः करिष्यति ॥ ९६ ॥
इत्युक्तस्ते मया योगः खाण्डिक्य परिपृच्छतः । संक्षेपविस्तराभ्यां तु किमन्यत्क्रियतां तव ॥ ९७ ॥

खाण्डिक्य उवाच :—

कथिते योगसद्भावे सर्वमेव कृतं मम । तवोपदेशेनाशेषो नष्टश्चित्तमलो यतः ॥ ९८ ॥

---

अथ ध्यानपर्यन्तसप्ताङ्गजन्यं निर्बीजयोगाख्यं भगवत्स्वरूपविषयं समाधिमाह—तस्यैवेति ॥ तस्यैव—विग्रहादिविशिष्टतया ध्यातस्यैव, कल्पनाः—नामरूपवर्णापक्षयविनाशादयः । अयं समाधिः पूर्वाध्याये परवियेत्युक्तविवेकजज्ञानम् । इदं चास्त्रभूषणादिविशिष्टदिव्यविग्रहवत एव भगवतोऽस्त्रभूषणाध्यायादिषु * बिभर्ति पुण्डरीकाक्षस्सदैव परमेश्वरः * कलामुहूर्त्तादिमयश्च कालः * इत्यादिभिः प्रतिपादितत्वात्, अस्त्रादीनां राहित्येनोत्तरोत्तरध्यानस्य वचनम् अन्यथा तस्याशक्यत्वात्, न तु त्याज्यत्वात् तेषाम् । अस्त्रादिविशिष्टविग्रहवत्त एव प्राप्यत्वात्, तत्क्रतुन्यायेन तेषामपि दृढं ध्येयत्ववचनाच्च ॥ ९२ ॥

उक्तस्य समाधिरूपज्ञानस्य भेषजं भगवत्प्राप्तिरित्युक्तम् परब्रह्मप्राप्तिफलमाह—विज्ञानमिति ॥ इदं विज्ञानं प्राप्ये परे ब्रह्मणि प्रापकम्, तथैव—ब्रह्मवत् प्रक्षीणाशेषभावनः—भावनात्रयरहितो भगवदुपासक आत्मा प्रापणीयः—प्रापयितव्यः। * ब्रह्मविदाप्नोति परम् * विद्ययाऽमृत(त्व)मश्नुते * भक्त्या त्वनन्यया शक्यः, * भक्त्या मामभिजानाति, * तत्प्राप्तिहेतुर्ज्ञानं च * इत्यादि ॥ ९३ ॥

इदं ज्ञानं न केवलं ब्रह्मप्रापकमात्रम्, किं तु मुक्तिकारणमपीत्याह—क्षेत्रज्ञ इति ॥ क्षेत्रज्ञः—अनादिकालक्षेत्ररूपमायागुणत्रयतिरोहितस्वस्वरूपः । करणी—करणवान् । समाधिरूपं ज्ञानं करणम् । तत्—ज्ञानं तेन—करणत्वेन तस्य—क्षेत्रज्ञस्य मुक्तिकार्यं निष्पाद्य कृतकृत्यं निवर्तते—मुक्तिमकृत्वा न निवर्तत इत्यर्थः ॥ ९४ ॥

मुक्तिस्वरूपमाह—तद्भावभावमिति ॥ तद्भावभावमापन्नः—तस्य परस्य ब्रह्मणो भावाः अपहतपाप्मत्वादयो धर्माः, तेषां भावम्—आविर्भावम्, आपन्नः—प्राप्तः, तदाऽसौ परमात्मना अभेदी भवति—ज्ञानानन्दाद्याकारैरेकप्रकारो भवतीत्यर्थः। भेदः—देवादिरूपः, तदन्वयोऽस्य कर्मरूपाज्ञानकृतः; * निरञ्जनः परमं साम्यमुपैति, * ब्रह्मणो महिमानमाप्नोति, * परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, * संपद्याविर्भावः स्वेनशब्दात्, * मम साधर्म्यमागताः * इत्यादेः। स्वरूपैक्यपक्षे तु द्वितीयो भावशब्दो निरर्थकः। अभेदी भवतीत्यस्य च पुनरुक्तिः * अन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः * इति चोक्तविरोधः ॥ ९५ ॥

एतदेव विवृणोति—विभेदजनक इति ॥ विभेदः—देवमनुष्यादिरूपः । आत्मनि ज्ञानैकरूपे देवादिविविधरूपविविधभेदहेतुभूतकर्माख्याज्ञाने परब्रह्मदर्शनेनात्यन्तिकनाशं गते सति, परस्माद्ब्रह्मणः आत्मनो भेदं देवादिरूपं भेदं कः करिष्यति - न कोऽपि करिष्यतीत्यर्थः। यथाऽऽह शौनकः - * चतुर्विधो हि भेदोऽयं मिथ्याज्ञाननिबन्धनः * इति ॥ ९६-९८ ॥

ममेति यन्मया चोक्तमसदेतन्न चान्यथा । नरेन्द्र गदितुं शक्यमपि विज्ञेयवेदिभिः ॥ ९९ ॥

अहं ममेत्यविद्येयं व्यवहारस्तथाऽनयोः । परमार्थस्त्वसंलाप्यो गोचरे वचसां न यः ॥ १०० ॥

तद्गच्छ श्रेयसे सर्वं ममैतद्भवता कृतम् । यद्विमुक्तिप्रदो योगः प्रोक्तः केशिध्वजाव्ययः ॥ १०१ ॥

श्रीपराशरः—

यथार्हं पूजया तेन खाण्डिक्येन स पूजितः । आजगाम पुरं ब्रह्मंस्ततः केशिध्वजो नृपः ॥ १०२ ॥

खाण्डिक्योऽपि सुतं कृत्वा राजानं योगसिद्धये । वनं जगाम गोविन्दे विनिवेशितमानसः ॥ १०३ ॥

तत्रैकांतमतिर्भूत्वा यमादिगुणसंयुतः । विष्ण्वाख्ये निर्मले ब्रह्मण्यवाप नृपतिर्लयम् ॥ १०४ ॥

केशिध्वजो विमुक्त्यर्थं स्वकर्मक्षपणोन्मुखः । बुभुजे विषयान्कर्म चक्रे चानभिसंहितम् ॥ १०५ ॥

अकल्याणोपभोगैश्च क्षीणपापोऽमलस्तथा । अवाप सिद्धिमत्यन्तां तापक्षयफलां द्विज ॥ १०६ ॥

इति श्रीविष्णुपुराणे षष्ठेंशे सप्तमोऽध्यायः ॥ ७ ॥

---

कथित इत्यादिश्लोके ममेतिवचनस्याहंकारममकारहेतुभूतचित्तमलनाशवचनेन व्याहतिं परिहरति-ममेति ॥ यद्यप्यहंममत्वहेतुचित्तमलनाशे सत्यहंममत्वनाशादहंममेतिशब्दप्रयोगो न युज्यते । तथापि विज्ञेयवेदिभिः—साक्षात्कृतपरमार्थैरपि तत्प्रयोगं विना न गदितुं शक्यम् ॥ ९९ ॥

एतदेव विवृणोति—अहंममेति ॥ अहं ममेति इयं बुद्धिरविद्या-अन्यथाज्ञानम् । तथा व्यवहारः-पुमान् स्त्री गौरयं वाजीत्यादिव्यवहारोऽपि अनया-अविद्यया । द्वैताद्वैतयोरभेदः भ्रमकृत इत्यर्थः । परमार्थः-अविनाश्यात्मा, असंलाप्यः-अजमहिषादिविशेषरहिततया तत्तच्छब्दैरनिर्देश्यः । तत्र हेतुः-गोचरे वचसां न यः इति ॥ १००-१०३ ॥

तत्रेति ॥ लयम—नामरूपकर्मणामात्यन्तिकनाशम्, * यथा नद्यस्स्यन्दमानास्समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय, * अश्व इव रोमाणि विधूय पापम्, * भिद्यते हृदयग्रन्थिः, * निरञ्जनः परमं साम्यमुपैति * इत्यादेः । न तु स्वरूपैक्यम्, नित्यनैमित्तिकप्राकृतलये प्रदर्शनात् । तथा सतीश्वरस्य वैषम्यनैर्घृण्यादिदोषो जीवानामकृताभ्यागमः कृतविप्रणाशश्च स्यात् । पुनर्देहसंबन्धाभाव एवात्यन्तिके विशेषः ॥ १०४ ॥

केशिध्वज इति ॥ अनभिसंहितम्—अनभिसंहितफलम् ॥ १०५ ॥

अकल्याणेति ॥ अमलः—क्षपितप्रारब्धकर्मविशेषः ॥ १०६ ॥

इति श्रीविष्णुपुराणव्याख्याने श्रीविष्णुचित्तीये षष्ठेंशे सप्तमोऽध्यायः ॥ ७ ॥

## अथाष्टमोऽध्यायः

श्रीपराशरः—

इत्येष कथितस्सम्यक् तृतीयः प्रतिसंचरः । आत्यन्तिको विमुक्तिर्या लयो ब्रह्मणि शाश्वते ॥ १ ॥

सर्गश्च प्रतिसर्गश्च वंशमन्वन्तराणि च । वंशानुचरितं चैव भवतो गदितं मया ॥ २ ॥

पुराणं वैष्णवं चैतत्सर्वकिल्बिषनाशनम् । विशिष्टं सर्वशास्त्रेभ्यः पुरुषार्थोपपादकम् ॥ ३ ॥

तुभ्यं यथावन्मैत्रेय प्रोक्तं शुश्रूषवेऽव्ययम् । यदन्यदपि वक्तव्यं तत्पृच्छाद्य वदामि ते ॥ ४ ॥

मैत्रेय उवाच—

भगवन्कथितं सर्वं यत्पृष्टोऽसि मया मुने । श्रुतं चैतन्मया भक्त्या नान्यत्प्रष्टव्यमस्ति मे ॥ ५ ॥

विच्छिन्नास्सर्वसंदेहा वैमल्यं मनसः कृतम् । त्वत्प्रसादान्मया ज्ञाता उत्पत्तिस्थितिसंक्षयाः ॥ ६ ॥

ज्ञातश्च त्रिविधो राशिश्शक्तिश्च त्रिविधा गुरो ।
विज्ञाता सा च कार्त्स्न्येन त्रिविधा भावभावना ॥ ७ ॥

त्वत्प्रसादान्मया ज्ञातं ज्ञेयमन्यैरलं द्विज । यदेतदखिलं विष्णोर्जगन्न व्यतिरिच्यते ॥ ८ ॥

कृतार्थोऽहमसंदेहस्त्वत्प्रसादान्महामुने । वर्णधर्मादयो धर्मा विदिता यदशेषतः ॥ ९ ॥

प्रवृत्तं च निवृत्तं च ज्ञातं कर्म मयाऽखिलम् । प्रसीद विप्रप्रवर नान्यत्प्रष्टव्यमस्ति मे ॥ १० ॥

यदस्य कथनायासैर्योजितोऽसि मया गुरो । तत्क्षम्यतां विशेषोऽस्ति न सतां पुत्रशिष्ययोः ॥ ११ ॥

श्रीपराशरः—

एतत्ते यन्मयाऽऽख्यातं पुराणं वेदसंमितम् । श्रुतेऽस्मिन्सर्वदोषोत्थः पापराशिः प्रणश्यति ॥ १२ ॥

सर्गश्च प्रतिसर्गश्च वंशमन्वन्तराणि च । वंशानुचरितं कृत्स्नं मयाऽत्र तव कीर्तितम् ॥ १३ ॥

अत्र देवास्तथा दैत्या गन्धर्वोरगराक्षसाः । यक्षविद्याधरास्सिद्धाः कथ्यन्तेऽप्सरसस्तथा ॥ १४ ॥

मुनयो भावितात्मानः कथ्यन्ते तपसाऽन्विताः । चातुर्वर्ण्यं तथा पुंसां विशिष्टचरितानि च ॥ १५ ॥

---

### अथाष्टमोऽध्यायः

इत्येष इति ॥ या विमुक्तिः, एषः ब्रह्मण्यात्यन्तिको लयस्तृतीयः प्रतिसञ्चरः इत्थं कथितः ॥ १-६ ॥

ज्ञात इति ॥ त्रिविधो राशिः—सृष्टिपालनप्रलयहेतवो ब्रह्मदक्षादिः, विष्णुमन्वादिः, रुद्रकालान्तकादिरिति त्रयो राशयः । चतुर्विध इति पाठे भगवता सह पुंप्रधानव्यक्तकालाख्या हि विष्णुशक्तिः, परेत्याद्युक्ता त्रिविधा शक्तिः ॥ ७ ॥

त्वत्प्रसादादिति ॥ विष्णोर्न व्यतिरिच्यते तदात्मकत्वेन । पृथक्सिद्ध्यनर्हं ज्ञातमिति शेषः ॥ ८-११ ॥

एतदिति ॥ दोषोत्थः—न केवलं बुद्धिकृतः, रागादिकृतोऽपि ॥ १२ ॥

पुण्याः प्रदेशा मेदिन्याः पुण्या नद्योऽथ सागराः। पर्वताश्च महापुण्याश्चरितानि च धीमताम्॥१६॥
वर्णधर्मादयो धर्मा वेदशास्त्राणि कृत्स्नशः। येषां संस्मरणात्सद्यस्सर्वपापैः प्रमुच्यते ॥ १७ ॥
उत्पत्तिस्थितिनाशानां हेतुर्यो जगतोऽव्ययः। स सर्वभूतस्सर्वात्मा कथ्यते भगवान्हरिः ॥ १८ ॥
अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः। पुमान्विमुच्यते सद्यस्सिंहत्रस्तैर्मृगैरिव ॥ १९ ॥
यन्नामकीर्तनं भक्त्या विलायनमनुत्तमम्। मैत्रेयाशेषपापानां धातूनामिव पावकः ॥ २० ॥
कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम्। प्रयाति विलयं सद्यस्सकृद्यत्र च संस्मृते ॥ २१ ॥
हिरण्यगर्भदेवेन्द्ररुद्रादित्याश्विवायुभिः। पावकैर्वसुभिस्साध्यैर्विश्वेदेवादिभिस्सुरैः ॥ २२ ॥
यक्षरक्षोरगैस्सिद्धैर्दैत्यगन्धर्वदानवैः। अप्सरोभिस्तथा तारानक्षत्रैस्सकलैर्ग्रहैः ॥ २३ ॥
सप्तर्षिभिस्तथा धिष्ण्यैर्धिष्ण्याधिपतिभिस्तथा। ब्राह्मणाद्यैर्मनुष्यैश्च तथैव पशुभिर्मृगैः ॥ २४ ॥
सरीसृपैर्विहंगैश्च पलाशाद्यैर्महीरुहैः। वनाग्निसागरसरित्पातालैस्ससुराग्निभिः ॥ २५ ॥
शब्दादिभिश्च सहितं ब्रह्माण्डमखिलं द्विज। मेरोरिवाणुर्यस्यैतद्यन्मयं च द्विजोत्तम ॥ २६ ॥
स सर्वः सर्ववित्सर्वस्वरूपो रूपवर्जितः। भगवान्कीर्तितो विष्णुरत्र पापप्रणाशनः ॥ २७ ॥
यदश्वमेधावभृथे स्नातः प्राप्नोति वै फलम्। मानवस्तदवाप्नोति श्रुत्वैतन्मुनिसत्तम ॥ २८ ॥
प्रयागे पुष्करे चैव कुरुक्षेत्रे तथाऽर्णवे। कृतोपवासः प्राप्नोति तदस्य श्रवणान्नरः ॥ २९ ॥
यदग्निहोत्रे सुहुते वर्षेणाप्नोति मानवः। महापुण्यफलं विप्र तदस्य श्रवणात्सकृत् ॥ ३० ॥
यज्ज्येष्ठशुक्लद्वादश्यां स्नात्वा वै यमुनाजले। मथुरायां हरिं दृष्ट्वा प्राप्नोति पुरुषः फलम्॥ ३१ ॥
तदाप्नोत्यखिलं सम्यगध्यायं यश्शृणोति वै। पुराणस्यास्य विप्रर्षे केशवार्पितमानसः ॥ ३२ ॥
यमुनासलिले स्नातः पुरुषो मुनिसत्तम। ज्येष्ठामूले सिते पक्षे द्वादश्यां समुपोषितः ॥ ३३ ॥
समभ्यर्च्याच्युतं सम्यङ्मथुरायां समाहितः। अश्वमेधस्य यज्ञस्य प्राप्नोत्यविकलं फलम्॥ ३४ ॥
आलोक्यर्द्धिमथाऽन्येषामुन्नीतानां स्ववंशजैः। एतत्किलोचुरन्येषां पितरस्सपितामहाः ॥ ३५ ॥
कच्चिदस्मत्कुले जातः कालिन्दीसलिलाप्लुतः। अर्चयिष्यति गोविन्दं मथुरायामुपोषितः ॥ ३६ ॥
ज्येष्ठामूले सिते पक्षे केनैवं वयमप्युत। परामृद्धिमवाप्स्यामस्तारितास्स्वकुलोद्भवैः ॥ ३७ ॥
ज्येष्ठामूले सिते पक्षे समभ्यर्च्य जनार्दनम्। धन्यानां कुलजः पिण्डान्यमुनायां प्रदास्यति ॥३८॥
तस्मिन्काले समभ्यर्च्य तत्र कृष्णं समाहितः। दत्त्वा पिण्डं पितृभ्यश्च यमुनासलिलाप्लुतः ॥३९॥
यदाप्नोति नरः पुण्यं तारयन्स्वपितामहान्। श्रुत्वाऽध्यायं तदाप्नोति पुराणस्यास्य शक्तितः ॥४०॥

---

वैशिष्ट्यप्रदर्शनाय कार्त्स्न्येन पुराणाङ्गान्युक्तानीति ज्ञापनार्थं पुनस्तान्यन्वाह - सर्गश्चेति॥ १३-३६॥

एतत्संसारभीरूणां परित्राणमनुत्तमम् । श्राव्याणां परमं श्राव्यं पवित्राणामनुत्तमम् ॥ ४१ ॥
दुःस्वप्ननाशनं नृणां सर्वदुष्टनिबर्हणम् । मंगलं मंगलानां च पुत्रसंपत्प्रदायकम् ॥ ४२ ॥
इदमार्षं पुरा प्राह ऋभवे कमलोद्भवः । ऋभुः प्रियव्रतायाह स च भागुरयेऽब्रवीत् ॥ ४३ ॥
भागुरिस्स्तंभमित्राय दधीचाय स चोक्तवान् । सारस्वताय तेनोक्तं भृगुस्सारस्वतेन च ॥ ४४ ॥
भृगुणा पुरुकुत्साय नर्मदायै स चोक्तवान् । नर्मदा धृतराष्ट्राय नागायापूरणाय च ॥ ४५ ॥
ताभ्यां च नागराजाय प्रोक्तं वासुकये द्विज । वासुकिः प्राह वत्साय वत्सश्चाश्वतराय वै ॥ ४६ ॥
कम्बलाय च तेनोक्तमेलापुत्राय तेन वै ॥ ४७ ॥
पातालं समनुप्राप्तः ततो वेदशिरा मुनिः । प्राप्तवानेतदखिलं स च प्रमतये ददौ ॥ ४८ ॥
दत्तं प्रमतिना चैतज्जातुकर्णाय धीमते । जातुकर्णेन चैत्रोक्तमन्येषां पुण्यकर्मणाम् ॥ ४९ ॥
पुलस्त्यवरदानेन ममाप्येतत्स्मृतिं गतम् । मयाऽपि तुभ्यं मैत्रेय यथावत्कथितं त्विदम् ॥ ५० ॥
त्वमप्येतच्छिनीकाय कलेरन्ते वदिष्यसि ॥ ५१ ॥
इत्येतत्परमं गुह्यं कलिकल्मषनाशनम् । यश्शृणोति नरो भक्त्या सर्वपापैः प्रमुच्यते ॥ ५२ ॥
समस्ततीर्थस्नानानि समस्तामरसंस्तुतिः । कृता तेन भवेदेतद्यश्शृणोति दिनेदिने ॥ ५३ ॥
कपिलादानजनितं पुण्यमत्यन्तदुर्लभम् । श्रुत्वैतस्य दशाध्यायानवाप्नोति न संशयः ॥ ५४ ॥
यस्त्वेतत्सकलं शृणोति पुरुषः कृत्वा मनस्यच्युतं सर्वं सर्वमयं समस्तजगतामाधारमात्माश्रयम् ।
ज्ञानज्ञेयमनादिमन्तरहितं सर्वामराणां हितं स प्राप्नोति न संशयोऽस्त्यविकलं यद्वाजिमेधे फलम् ॥५५॥
यत्रादौ भगवांश्चराचरगुरुर्मध्ये तथान्ते च स ब्रह्मज्ञानमयोऽच्युतोऽखिलजगन्मध्यान्तसर्गप्रभुः ।
तत्सर्वं पुरुषः पवित्रममलं शृण्वन्पठन्वाचयन्प्राप्नोत्यस्ति न तत्फलं त्रिभुवनेष्वेकान्तसिद्धिर्हरिः ॥५६॥

---

ज्येष्ठामूल इति ॥ केनैवं वयमच्युतेति । केन वा पुरुषेण एवं मथुरायां कृतगोविन्दपूजनेन वयं तारिताः परामृद्धिम्-अपवर्गर्धिम् अवाप्स्यामः ॥ ३७-४९ ॥

पुलस्त्येति ॥ ममाप्येतत्स्मृतिं गतमिति मह्यं सारस्वतेन चेति पूर्वमुक्तमुपजीव्योच्यते । आद्ये कृतयुगे सर्वपुराणानां संग्रहरूपस्य ब्रह्मसंज्ञस्य कर्तुर्ब्रह्मणो दक्षादिपुरकुत्सान्तः संप्रदायः । पराशरस्य त्रेतायां महद्विष्णुपुराणं कुर्वतः प्रागुक्तकालदैर्घ्यात्तद्विच्छेदे पुनः पराशरर्षिदृष्टमेव तत्पुराणं ब्रह्मणैव ऋभ्वादिजातुकर्णान्तसंप्रदायान्तरेण पुनस्त्रैलोक्ये प्रवर्तितम् । इदानीं त्वष्टाविंशतियुगारंभे मैत्रेयपृष्टेन पराशरेण प्राग्जन्मनि सारस्वतमुखाच्छ्युतमिह जन्मनि वसिष्ठपुलस्त्यवरदानेनेदं स्मृतं स्वल्पग्रन्थसंग्रहितं मैत्रेयायोक्तम् । अतः संप्रदायाविच्छेदोक्तिरविरुद्धा । अस्य गर्भस्थस्यैव जन्मान्तरश्रुतवेदस्मरणवत्पुराणार्थस्मरणमप्युपपन्नम् । षड्विंशे युगे व्यासत्वसिद्ध्या तदाद्यस्य सद्भावाद्युक्ता पुलस्त्यवरात् पुराणसंहिताकर्तृत्वसिद्धिः ॥ ५०-५६ ॥

यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः।
मुक्तिं चेतसि यस्स्थितो मलधियां पुंसां ददात्यव्ययः किं चित्रं यदघं प्रयाति विलयं तत्राच्युते कीर्तिते॥

यज्ञैर्यज्ञविदो यजन्ति सततं यज्ञेश्वरं कर्मिणो यं वै ब्रह्ममयं परावरमयं ध्यायन्ति च ज्ञानिनः।
यं संचिन्त्य न जायते न म्रियते नो वर्धते हीयते नैवासन्न च सद्भवत्यति ततः किं वा हरेश्श्रूयताम्॥

कव्यं यः पितृरूपधृग्विधिहुतं हव्यं च भुंक्ते विभुर्देवत्वे भगवाननादिनिधनस्स्वाहास्वधासंज्ञिते।
यस्मिन्ब्रह्मणि सर्वशक्तिनिलये मानानि नो मानिनां निष्ठायै प्रभवन्ति हन्ति कलुषं श्रोत्रं स यातो हरिः॥

नान्तोऽस्ति यस्य न च यस्य समुद्भवोऽस्ति वृद्धिर्न यस्य परिणामविवर्जितस्य।
नापक्षयं च समुपैत्यविकारि वस्तु यस्तं नतोऽस्मि पुरुषोत्तममीशमीड्यम्॥ ६०॥

तस्यैव योऽनुगुणभुग्बहुधैक एव शुद्धोऽप्यशुद्ध इव भाति हि मूर्तिभेदैः।
ज्ञानान्वितस्सकल(स)तत्त्वविभूतिकर्ता तस्मै नमोऽस्तु पुरुषाय सदाऽव्ययाय॥ ६१॥

ज्ञानप्रवृत्तिनियमैक्यमयाय पुंसो भोगप्रदानपटवे त्रिगुणात्मकाय।
अव्याकृताय भवभावनकारणाय वन्दे स्वरूपभवनाय सदाऽजराय॥ ६२॥

---

यस्मिन्निति॥ मतिः—श्रवणमननरूपं ज्ञानं, चिन्तनं - धारणा, आत्मनि मनोनिवेशनं ध्यानं, भगवति चेतस्स्थितिस्समाधिः॥ ५७॥

यज्ञैरिति॥ न जायते इति। शरीरपरिग्रहो जन्म, तत्त्यागो मरणम्। वृद्धिह्रासौ ज्ञानतः। नैवासन्न च सदिति कारणत्वकार्यत्वनिरासः। ततः - हरेः, अति - अतिक्रमेण, किं वा श्रूयताम्? तदधिकं न किंचित् श्रूयत इत्यर्थः॥ ५८॥

स्वनामादिद्वारा हरिरेव श्रोतव्य इत्याह—काव्यमिति॥ मानिनां - प्रमाणवतां, मानानि निष्ठायै - परिच्छेदाय न प्रभवन्ति - न समर्थानि भवन्ति॥ ५९॥

अथ शास्त्रं समापयिष्यन्नीश्वरपुरुषप्रधानव्यक्तानि मंगलाय प्रणमति—नान्तोऽस्तीत्यादिचतुर्भिः॥ नान्तोऽस्तीति॥ तत्रायं प्रथमः श्लोकः शुभाश्रयत्वेनोक्तदिव्यविग्रहविशिष्टेश्वरविषयः। कालोऽपीश्वरेऽन्तर्भूतः॥६०॥

द्वितीयेन श्लोकेन तस्य पुरुषरूपं नमस्करोति—तस्यैवेति॥ यः - पुरुषः, तस्यैवानुगुणभुक् - शेषभूत इत्यर्थः। एकः - देवादिभेदरहितः ज्ञानैकस्वरूपः स्वतश्शुद्धोऽपि प्राकृतदेहेष्वात्मभ्रमात्तद्धर्मयुक्ततया भानादशुद्ध इव भाति। ज्ञानान्वितः - ज्ञानधर्मकः। तत्त्वादीनां महादादीनां विभूतेः - विस्तरस्य कर्मद्वारा कर्ता। सकलतत्त्वविभूतिकर्तेति च पाठः॥ ६१॥

प्रधानस्वरूपमाह—ज्ञानेति॥ ज्ञानप्रवृत्तिनियमाः - सत्त्वादीनां कार्याणि नियमः—स्तम्भो ज्ञानसंकोचश्च। एषामैक्यम् - एकत्र लयः, तद्रूपाय। गुणसाम्यावस्थायां हि तत्वात् तत्तत्कार्याणि न भवन्ति। अव्याकृताय—अनुद्भूत महादाद्यवस्थाय, प्रधानायेत्यर्थः। भवभावनकारणाय - भवः संसारः, तद्भावनस्य कर्मणः कारणाय। स्वरूपभवनाय - स्वरूपेण भवनं यस्य तत् स्वरूपभवनं, स्वतस्सिद्धाय; आदिरहितायेत्यर्थः॥ ६२॥

व्योमानिलाग्निजलभूरचनामयाय शब्दादिभोग्यविषयोपनयक्षमाय ।
पुंसस्समस्तकरणैरुपकारकाय व्यक्ताय सूक्ष्मबृहदात्मवते नतोऽस्मि ॥ ६३ ॥

इति विविधमजस्य यस्य रूपं प्रकृतिपरात्ममयं सनातनस्य ।
प्रदिशतु भगवानशेषपुंसां हरिरपजन्मजरादिकां स सिद्धिम् ॥ ६४ ॥

इति श्रीविष्णुपुराणे षष्ठेंशेऽष्टमोऽध्यायः ॥ ८ ॥

॥ समाप्तश्च षष्ठोंऽशः ॥

---

तत्वेन यश्चिदचिदीश्वरतत्स्वभाव-भोगापवर्गतदुपायगतीरुदारः ।
संदर्शयन्निरमिमीत पुराणरत्नं तस्मै नमो मुनिवराय पराशराय ॥

---

तस्यैव व्यक्ताख्यं रूपमाह—व्योमेति॥ सूक्ष्मबृहदात्मवते-सूक्ष्मम्—महदादि, बृहत्-पृथिव्यादि, आत्मा । अत्र आत्मशब्दः स्वरूपवचनः ॥ ६३ ॥

अथैवमुपपादितात्स्वेतरसमस्तचिदचिद्वस्तुशरीरात्पुरुषोत्तमात् सर्वपुंसां परमपुरुषार्थं मोक्षमाशासानः [illegible]यति-इतीति ॥ इति-उक्तप्रकारेण । प्रकृतिपरात्ममयं-प्रकृतिर्व्यक्ताव्यक्तात्मिका, तस्याः परम् अप्राकृतदिव्यशरीरम्, आत्मा-पुरुषः । प्रकृतिपरात्मवत इति च पाठः । अत्र प्रकृतिपुरुषयोः परस्माद्भेदः, तयोर्जगद्ब्रह्मसामानाधिकरण्यनिबन्धनं तद्रूपत्वम्, अशेषपुंसामिति निर्देशात् आत्मनां परस्परभेदः, भगवतः अपजन्मजरादिकसिद्धिप्रदेष्टृत्ववचनेन स एव मोक्षप्रद इत्याद्युक्तमित्यनुसन्धेयम् ॥ ६४ ॥

इति श्रीभगवद्रामानुजयतीश्वरचरणसरोजचञ्चरीकश्रीविष्णुचित्तार्यप्रसादिते
श्रीविष्णुपुराणव्याख्याने षष्ठेंशेऽष्टमोऽध्यायः ॥ ८ ॥

इति श्रीविष्णुचित्तार्यवर्यानुगृहीत-व्याख्या सहितं

## श्रीविष्णुपुरणं समाप्तम् ॥

अस्मद्गुरुपरंपराभ्यो नमः

---

'लिबर्टी' मुद्रणालये मुद्रितम् चेन्नपुरी-१